॥ श्रीलक्ष्मीवेंकटेशायनमः ॥ श्रीमदस्मद्गुरुवरयादवार्यकरपूजितगुणपूर्णबादरायणायनमः ॥ श्रीमदानंदतीर्थभगव-
त्पादाचार्येभ्योनमः ॥ श्रीगुरुभ्योनमः ॥ निरंतरायोस्तु ॥ रामंसर्वगुणैःपूर्णंनिर्दोषंसाधुसेवितं ॥ मुक्तिदंजानकी-
कांतंप्रणमामिनिरंतरं ॥ १ ॥ ज्ञानभात्हृत्तमोहर्ताश्रुतिपंकजबोधकः ॥ व्यासांशुमान्दर्शयतुसन्मार्गंगुणमंडलः ॥ २ ॥
यज्ज्योत्स्नाध्वस्तहृद्ध्वांतंविबुधाब्ध्यर्थिसाधकं ॥ शुद्धाध्वबोधकंसेवेनित्यंमध्वविधुंविदे ॥३॥ मध्वसिद्धांतमामथ्यशुद्धधी
मंदराद्रिणा ॥ लब्धान्यायसुधायेनतंजयींद्रमहंभजे ॥ ४ ॥ दुर्वादिमातंगसिंव्हान्सर्वशास्त्रार्थकोविदान् ॥ व्यास-
रामसुखान्पूर्वव्याख्यातॄन्प्रणमाम्यहं ॥ ५ ॥ दुर्मार्गाद्दुत्धृतायैश्चसन्मार्गेसंप्रवेशितः ॥ तान्गुरून्सततंसेवेसर्वशास्त्र-
विशारदान् ॥ ६ ॥ अथैतत्कृपयाब्रह्मसूत्रभाष्यप्रकाशिकां ॥ व्याकरिष्येयथाबोधंवाक्शुध्यैनाभिमानतः ॥ ७ ॥
पूर्वाचार्यकृताःसंतिव्याख्याविद्वन्मनोहराः ॥ मंदबोधायतत्रोक्तसंग्रहोथाप्ययंमम ॥ ८ ॥ इहखलुतापत्रयपरिशुष्य-
त्सत्कुमुदमोदकरीं श्रीमध्वदुग्धाब्धिसंभूतभाष्येंदूदितकौमुदीं परतत्वप्रकाशिकांकर्तुकामोजयतीर्थमुनिः प्रारिप्सिता
विघ्नपरिसमाप्त्यादिप्रयोजनकशिष्टाचारानुमितश्रुतिबोधितकर्तव्यताकेष्टदेवतास्तुतिनतिरूपंमंगलंकृत्वाशिष्यशिक्षायैग्रं-
थादावुपनिबध्नाति ॥ शुद्धेति ॥ अस्मद्युत्तमइतिसूत्रेणास्मच्छब्देएवउपपदत्वेनश्रूयमाणेअश्रूयमाणेवातदर्थविवक्षा-
यांउत्तमपुरुषोभवतीत्युक्त्या उत्तमपुरुषस्यास्मच्छब्दाविनाभावादेवात्रवंदइत्युत्तमपुरुषप्रयोगादेवाहमितिकर्तालभ्यते ।
तथाच । अहंब्रम्हअलंवंदइत्यन्वयः । इदंपद्यंभाष्याद्यपद्यव्याख्यानरूपं । तथाहि । आद्याध्यायार्थतयोक्तंगुणैःसर्वै
रुदीर्णमिति । अत्रगुणपदंतार्किकरीत्याद्दुःखादिपरंवेदांतरीत्यासत्वादिपरंवा । नाद्यः । निरानिष्टोनिरवद्यइतिश्रुत्यादो-
षवर्जितमितिस्ववचनेनचविरोधात् । नद्वितीयः । केवलोनिर्गुणश्चेतिश्रुतिविरोधात् । किंचगुणैःसर्वैरुदीर्णमितिगुणवि-

शिष्टत्वोक्त्यागुणगुणिनोर्भेदःप्रतीयते । सचगुणक्रियादयोविष्णोःस्वरूपंनान्यदिष्यतइत्यादिविरुद्धः । अपिचेश्वरस्य देहोस्तिवानवा । नाद्यः । मरणादिप्रसंगेनदोषवर्जितत्वायोगात् । नद्वितीयः । बिभ्रूणुतेतनूंस्वामित्यादिश्रुतिविरोधात् । ज्ञानसुखाद्ययोगेनसर्वगुणोदीर्णत्वायोगाच्चेत्यतउक्तं ॥ शुद्धेति ॥ अत्रशुद्धत्वंनामाप्राकृतत्वं । आनंदादेःसर्वस्य विशेषणं । उरुत्वंपूर्णत्वंसंविदादेर्बुध्याविविक्तमानंदस्यापिविशेषणं । बहुलत्वंबहुसंख्यावत्वं । औदार्यादेर्बुध्याविविक्तमानंदादेर्विशेषणं । अत्रगुणस्वरूपनिरूपणेनतेषांभगवदभिन्नदेहाभिन्नत्वोक्त्याअविनाशगुणात्मकदेहोक्त्याचोक्तशंकानिरासइतिध्येयं । द्वितीयाध्यायार्थतयोक्तंदोषवर्जितमिति । अत्रदोषपदंयत्किंचिद्दोषपरंचेदितरसाधारण्यं वर्जितत्वस्यप्रागभावप्रध्वंसान्यतरत्वेपश्चात्प्राग्दोषित्वप्रसंगः । दोषैर्वर्जितंपरित्यक्तमितिप्रतीत्यानारायणस्यहेयत्वंचप्रसज्यतइत्यतउक्तं ॥ चिंतेति ॥ लेपःकर्मसंबंधः चिंतादयोमुखराः प्रधानाः येषुतथोक्ताः तेचतेअशेषदोषाः अत्यंतदूरीकृताः येनतत्तथोक्तं । तत्रअशेषातिपदाभ्यांदोषाः वर्जिताः येनेतिविग्रहसूचनेनचपूर्वोक्तशंकानिरास इतिध्येयं । तृतीयाध्यायार्थतयोक्तंज्ञेयमिति । अत्रज्ञानसाधनं नतावच्छ्रवणादि । विरोचनादेः श्रवणादिनाविपरीत ज्ञानोदयात् । नापिध्यानं । मांडव्यादेर्ध्यानेनानर्थस्यैवश्रुतत्वात् । गमनोपायाभावाच्चतुर्थाध्यायार्थगम्यत्वंचानुपपन्नमित्यतउक्तं ॥ सद्भिरिति ॥ श्रुतिःश्रवणं मतिर्मननं नियतध्यानं स्वयोग्योपासनं ज्ञानं साक्षात्कारः सएवयोग उपायः । विरोचनादेरसज्जनत्वात् । मांडव्यादिभिरयोग्यध्यानाचरणान्नतेषांज्ञानोदयः । ज्ञानलक्षणोपायसद्भावाद्गम्यत्वंचोपपन्नमितिभावः । मायिरीत्यागुणविशिष्टमिदंब्रह्मशबलमितिनमंतव्यमित्याशयेनोक्तं । अमलमिति । नविद्यतेमलंसंसाराख्यंयस्मात्तत्तथोक्तं । शबलंतुनसंसारमोचकं । अतएवमुकुंदाभिधं । स्वोक्तार्थेसर्वत्रप्रमाणमाह ।

वेदांतवेद्यमिति। आनंदोब्रह्म ज्ञानात्मकोबलात्मकोभारूपः सत्यकामः दातुःपरायणं वीर्यमन्नाद्यं ब्रह्मंतोह्यस्मिन्गुणाः।
गुणाःश्रुताः सुविरुद्धाश्चदेवे संत्यश्रुत्ताः। यदात्मकोभगवांस्तदात्मिकाव्यक्तिः। नकर्मणावर्धते। अजआत्माविज-
रोविमृत्युः। ब्राह्मणोनिर्वेदमायात्। यमेवैषवृणुते। आत्मावाअरेद्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्यः।
यमप्येतिभुवनंसांपराये तरतिशोकमात्मविदित्याद्युपनिषद्भिरुक्ताविधयाज्ञेयमित्यर्थः। यद्वावेदानामंतोनिर्णयोयस्मा-
त्तद्वेदांतं ब्रह्ममीमांसाशास्त्रंतेनोक्ताविधयाज्ञेयमित्यर्थः। तथाहि। आनंदमयोभ्यासादित्यत्रपूर्णानंदसंविदादिकं।
अनुकृतेस्तस्यचेत्यत्रद्युतिः। अत्ताचराचरग्रहणादित्यत्रसर्वसंहर्तृत्वोक्त्यावीर्यबले। मुक्तोपसृप्यव्यपदेशादित्यत्रमो
क्षदातृत्वोक्त्यौदार्यं। रूपोपन्यासादित्यत्राप्राकृतदेहवत्वं। अधिकंतुभेदनिर्देशादित्यत्राचिंतासंत्तापाद्यभावः। नकर्मा
विभागादितिचेन्नानादित्वादित्यत्र कर्मणोऽस्वातंत्र्योक्त्यातल्लेपाभावः। असंभवस्तुसतोनुपपत्तेरित्यत्रोत्पत्त्यभावः।
नात्माश्रुतेर्नित्यत्वाच्चताभ्यइत्यत्रमृत्यभावः। असार्वत्रिकीत्यत्रयोग्यता। तृतीयाद्येवैराग्यं द्वितीयेभक्तिस्तृतीयेश्रुतिम
तिनियतध्यानानि चतुर्थेज्ञानं पुरुषार्थोतःशब्दादितिबादरायणइत्यत्रज्ञानस्यपुरुषार्थोपायत्वंचोक्तमिति। नारायण
पदस्यप्रतिपदंब्रह्मेति। अथवासंक्षेपविस्तराभ्यां हिप्रवदंतिमनीषिणइतिवचनात्सर्वेषामपिपदानांविशेषणचतुष्टयव्या
ख्यानरूपत्वं। तथाहि। सकृदुच्चरितस्यापिब्रह्मशब्दस्यतंत्रन्यायेनतात्पर्यवशाद्विशेषणसमर्पकत्वंचास्ति। तथाच
गुणैःसर्वैरुदीर्णमित्यस्यसंग्रहोब्रह्मशब्देनक्रियते। दोषवर्जितमित्यस्यामलमिति। ज्ञेयमित्यस्यव्याख्यानंवेदांतवेद्यमिति।
गम्यमित्यस्यमुकुंदाभिधमिति ब्रह्मशब्दार्थःशुद्धेति। अमलशब्दार्थश्चितेति। वेदांतवेद्यमुकुंदाभिधशब्दयोरर्थःसद्भिरिति।
यद्वावक्ष्यमाणरीत्यानारायणशब्दस्यगुणपूर्णत्वनिर्दोषत्वमुक्तगम्यत्वार्थकत्वान्निर्दोषत्वान्नारावेदा वेद्यतयातदाश्रयत्वा

न्नारायणइतिवेदवेद्यत्वार्थकत्वाच्चक्रमेणतत्समानार्थकैर्ब्रह्मामलमुकुंदाभिधवेदांतवेद्यपदैर्नारायणपदव्याख्यानंक्रियते ।
शिष्टंप्रथमवत् । इत्थंव्याख्यानत्रयेअमलमित्यस्यचिंतासंतापेत्यादिनागतार्थतेतिशंकागर्भस्नावेणपरास्तेतिध्येयं ॥ १ ॥
इदानींगुरूंश्चेतिविवृण्वन्व्याचिख्यासितभाष्यमूलसूत्रप्रामाण्यंचसूचयन् तत्कर्तृवेदव्यासंप्रार्थयते॥ याच्ञेति ॥ निर्जरैः
प्रार्थनाख्यमंदरपर्वतमथितात् यतोविधेंदिरादीनामुदयादिः सोयमित्यन्वयः। भूत्यैज्ञानैश्वर्याय। पुराणादेः पृथगभिधा
नाद्विद्याशब्दोवेदमात्रपरोज्ञेयः॥ ब्रह्मसूत्रेति॥ ब्रह्मेतितंत्रं। तथाचब्रम्हणोविष्णोः संबंधियत्ब्रह्मवेदजातंतस्यसूत्राणित
द्विचारकरणीभूतन्यायनिबंधनात्मकवाक्यानीत्यर्थः। यद्वाब्रह्मणः श्रुतिजातस्यसूत्रंतन्निर्णायकन्यायनिबंधनात्मकशास्त्र
मित्यर्थः। तंत्रंपंचरात्रं। अत्रविद्यायाःलक्ष्म्याभिमन्यमानत्वाल्लक्ष्मीत्वेनभारतस्यधर्माद्यशेषपुरुषार्थदातृत्वात्पारिजातत्वेन
ब्रम्हसूत्रस्यस्वश्रवणरूपसेवनवतां अजरामरणहेतुत्वादमृतत्वेन पुराणानांविष्णवादितत्वप्रकाशकत्वान्मणित्वेनशुकाचा
र्यस्यसज्जनाल्हादकरत्वादिंदुत्वेनोत्प्रेक्षायुक्ता । वेदविद्यायाः अभिव्यक्तिमात्रसत्वेपिव्यासजन्यत्वाभावात् रमायाअ
पिअब्धिजन्यत्वाभावादुदैदित्युक्तिः । क्षीराब्धिसाम्योपपादनेनलब्धैश्वर्यदानसंभावनायोक्तं सतांभूतिदइति ।
ननु कर्मणायमभिप्रैतिससंप्रदान मितिसंप्रदान संज्ञायांचतुर्थीसंप्रदानइति चतुर्थीविधानाद्विप्रायगांददातीत्यादाविवस-
द्भ्यइतिचतुर्थ्याभाव्यं। अतः कथंसतामितिषष्ठीतिचेत् उच्यते कर्मणेतिसूत्रेअर्चोत्यादिटीत्यादाविवलघुसंज्ञायाः कार्य
त्वेपिसंप्रदानमितिगुरुसंज्ञाकरणमन्वर्थज्ञापनार्थं तेनबहुमानपूर्वकस्वस्वत्वपरित्यागेनपरस्वत्वापादनरूपंदानं यत्रतत्रै
वसंप्रदानत्वंनान्यत्ररजकस्यवस्त्रंददातीत्यादावितिवृत्त्यादावुक्त्या अत्रतादृशदानाभावेनसंप्रदानसंज्ञायाः अभावेपिसंबं
धसामान्येषष्ठ्युपपत्तिरितिज्ञेयं॥ सतामिति ॥ अत्रव्यासइतिनिर्देशेनतस्यशास्त्रप्रभवत्वोक्त्यागुरुत्वोपपादनेनगुरूं

श्चेत्येतद्विष्टतं। यतउदैद्विर्यैदिरेत्यादिनाविर्यैदिराधिष्ठानत्वोक्त्याविवक्षितार्थतत्वज्ञानलाभात् वक्त्रानुकूल्यं निर्जरैरित्या दिनातत्वज्ञानयोग्यतालाभात्। श्रोत्रानुकूल्यं याच्ञेत्यनेनश्रोतृप्रयोजनोद्देश्यरूपप्रसंगानुकूल्यंचदर्शयतावक्तृश्रोतृप्रस- क्तीनांयदाभिरनुकूलतेत्यनुव्याख्यानोक्ताप्तमूलतासूत्राणांसूचिता ब्रह्मसूत्रपदेनोक्तव्याख्यानानुसारेण श्रुतिमूलत्वंसू त्रशब्देनयुक्तिमूलत्वंचसूचितं। तथाचआप्तवाक्यतयातेनश्रुतिमूलतयातथा। युक्तिमूलतयाचैवप्रामाण्यंत्रिविधंमहत्। दृश्यते ब्रह्मसूत्राणामित्युक्त्याप्रमाणभूतब्रह्मसूत्रार्थभाष्यव्याख्यानंयुक्तमितिद्रष्टव्यं। ननुस्तोश्चुनाश्चुरितियाच्ञेतिनकार स्यचवर्गात्यञकारादेशेयाच्ञेतिभवेत् कथंयाच्ञेति अतएवकाशिकायांयजेर्यज्ञः याचेर्याच्ञेत्युक्तमितिचेत् याच्ञामोघा वरमधिगुणेनाधमेलब्धकामेत्यादिबहुप्रयोगनिर्वाहायचुत्वाभावस्यापिक्वचिद्वक्तव्यत्वात्॥२॥ भाष्यस्यव्याख्येयत्वप्रयो जकसफलत्वगंभीरत्वादिदर्शयन्तत्कर्तारमानंदतीर्थंप्रणमति॥ स्वांतेति॥ येषांमुखकमलात् भाष्यंआविर्भूतंतान्पू र्णबोधपूज्यस्वरूपान्प्रपद्यइत्यन्वयः। भाष्यस्यश्रुतिस्मृतिप्रचुरत्वेनोत्पन्नमित्यनुक्त्वा आविर्भूतमित्युक्तं। अतएवो त्तरत्रापिनिःसृतामितिवक्ष्यंति। अमंदबोधत्वोपपादनायभाष्यकृत्त्वोक्तिः मानसाज्ञानाख्यतमश्छेदनविषयेपराजित महासूर्यरश्मिसमूहमित्यनेनाध्यात्मिकादितापत्रयनिवारणविषयेपराजितचंद्रप्रभमित्यनेनचसफलत्वोक्तिः गांभीर्येत्या दिनागंभीरत्वोक्तिरितिविवेकः वैकर्त्तनांशुव्रजचंद्रचांद्रिकयोः क्रमेणबाह्यांधकारबाह्यतापवारकत्वेपिस्वांतध्वांततापत्रय निवारणयोरशक्यत्वाद्भाष्येणजितत्वं। तथोपरागादौ ह्रासादिदोषयुक्तत्वान्निर्दोषभाष्येणजितत्वं। अनेनैतादृश भाष्यविशिष्टाचार्यमुखस्यसूर्यचंद्रबिंबाधिक्यंध्वनितं। लक्षादियोजनपरिमितसमुद्रस्यापरिमितभाष्येणजितत्वं अत्रा- प्यमितत्वमर्थतएव भाष्यंचात्यर्थविस्तरमित्युक्तेः। नतुशब्दतः ग्रंथस्यपरिमितत्वात्। ननुनिपूर्वकात्कृतीच्छेदनइत्य

स्माद्धातोः ल्युट्प्रत्ययेनुमागमेअनादेशेचनिकृंतनमितिभवति तत्रनुमागमः केनइदितोनुम्धातोरित्यनेनेदितएवनुमा
गमविधानात् कृतीत्यस्यचानिदित्त्वादितिचेत्सत्यं । नखनिकृंतनेत्यादिप्रयोगसमर्थनायधातोरितियोगविभागेनानिदि
तोपिनुमागमस्यव्याख्येयत्वात् अतएवेदितोनुम्ततोधातोरितिमहाभाष्येभिहितं ॥ ३ ॥ अथपरमगुरूणांसन्न्यायरत्ना
वलीकाराणांकृपालेशंप्रार्थयते ॥ श्रीमध्वेति ॥ येपद्मनाभतीर्थाः एषांकृपालेशः मयिनित्यंस्यादितिसंबंधः तेषा
मेवकृपाराहित्येतत्प्रार्थनमयुक्तं । अतउक्तं कृपालवइति । कारुणिकाइत्यर्थः । द्वेषादिदोषवत्वेकृपालुत्वमेवासिद्ध
मित्यतउक्तं । अमलाइति कस्मिन्विषयेकृपाप्रार्थनमित्यतउक्तं । श्रीमध्वेति । श्रीमदानंदतीर्थसेवाप्राप्तनिर्दोषवि
द्ययामृतसमुद्राइत्यर्थः । अनेनविद्याविषयेकृपाप्रार्थनमितिसूचितं यद्वातीर्थपदप्रयोगलब्धप्रसिद्धतीर्थसाम्यनिरासा
यविशेषणत्रयं । ननुकृपालवइतिकथंस्पृहिगृहिपतिदयिनिद्रातंद्राश्रद्धाभ्यआलुजितिसूत्रेणकृपेरालुच्प्रत्ययस्याविहित
त्वादितिचेत्सत्यं तथापिव्याकरणांतरात्कृपेरालुच्प्रत्ययोबोध्यः । यद्वानायमालुच्प्रत्ययः किंतुकलशवाचकोयमालु-
शब्दः । कर्कर्यालुर्गलंतिकेत्यभिधानात् । तथाचकृपापूर्णकलशाइत्यर्थः । इदंचप्रकारद्वयंनष्टधर्मज्ञानलोककृपालुभि
रितिगीताभाष्यव्याख्यानावसरेप्रमेयदीपिकायांव्यक्तं । अथवाउदाहृतसूत्रेआलुच्प्रत्ययमविधायलुशूप्रत्ययविधाने
पितस्याशित्वेनतिङ्शित्सार्वधातुकमितिसार्वधातुकसंज्ञायांकर्तरिशबिति शपिसतिपुगंतल...स्य चेतिगुणेअयादेशेचअ-
तोदीर्घइति दीर्घेसतिण्यंतानांस्पृहीत्यादीनांस्पृहयालुरित्यादिरूपसिद्धावप्यालुच्करणंकृपालुरित्यादिरूपसिद्ध्यर्थमि-
तिमंजर्यांतृतीयाध्यायस्यतृतीयपादे अभिहितत्वादत्रापिकृपेरालुच् प्रत्ययेकृतेसंज्ञापूर्वकोविधिरनित्यइतिपुगंतस्य लघू
पदस्यचेतिगुणाभावेचकृपालुरितिसाधुः । अतएवकौमुद्यांहरेकृपालोनः पाहीत्युक्तं ॥ ४ ॥ स्वगुरून्नमति ।

॥ **श्रीमदिति** ॥ श्रीमद्रमारमणाख्यसद्गिरिचरणाख्यप्रत्यंतपर्वतसंबंधवान् तदाश्रितइतियावत् । पादाःप्रत्यंतपर्वता इत्युक्तेः । सचासौव्याख्यानध्वानेनाविनाशिताखिलदुर्वादिमदश्चतं । दुर्वादिगजविपाटनसमर्थसंकल्पमित्यर्थः ॥ ५ ॥ इदानींशिष्यमनः समाधानायचिकीर्षितंप्रतिजानीते । **अथेति** । तत्कृपया तेषांनमस्कृतानांमुकुंदादीनांकृपया आनंदतीर्थभगवद्वचसां विशिष्टव्याख्यानकर्मणिसुराद्यधिकारिणोत्रेतितत्वनिर्णयटीकांतेस्वेनैवोक्तत्वात्कथं व्याकुर्वे इतिप्रतिज्ञेत्यतउक्तं ॥ **यथामतीति** ॥ विशिष्टव्याख्यानकरणेदेवानामधिकारेपियथामतिव्याख्यानकरणे अस्माक मप्यधिकारोस्तीतिभावः ॥ ६ ॥ व्याकुर्वेइत्यात्मनेपदप्रयोगेणलब्धमात्मगामिव्याख्यानप्रयोजनमाह ॥ **गंगेति** ॥ भागीरथीसंबंधेनरथवीथिकाजलैर्नैर्मल्यंयथालभ्यते तथामदीयायाःवाचोविशुद्धिसिध्यर्थंआनंदतीर्थीयवाक्यानिमदी- ययावाचाव्याख्यानव्याख्येयभावेनसंबध्यंतइत्यर्थः । वाचोविशुद्धीत्युक्तत्वेनमदीययावाचेत्यर्थस्यासिद्धत्वान्नोक्तं । ननुऋक्पूरब्धूः पथामानक्षइत्यनेनसमासांतादपूशब्दात् अकारस्याविहितत्वेनविमलापैः सरोवरैरित्यादिवत् रथ्या पैरितिवक्तव्येकथंरथ्याद्भिरितिवचनमितिचेत्सत्यं । समासांतोविधिरनित्यइत्येतत्साधु एतत्सूचनायैवसूत्रेपथामितिउ- क्तं । अन्यथापंथानामित्यवक्ष्यत् । अतएवमहाभाष्येशुच्यंपानितटाकानीतिवक्तव्येशुच्यंपितटाकानीत्युक्तं ॥ ७ ॥ नन्वाचार्यैर्भाष्यंनारंभणीयंप्रयोजनाभावात् । नचसूत्रव्याख्यानंप्रयोजनं । अन्यैर्व्याख्यातत्वात् अस्तुवाआरंभणीयत्वं। तथाप्याद्यपद्यंव्यर्थं नचमंगलनिबंधनार्थंतदितिवाच्यं फलाभावेनतस्यैवाकर्तव्यत्वात् । अस्तुवाकर्तव्यत्वं नतस्यनिबंधनंत थापिसूत्रार्थउच्यतइत्यंशोव्यर्थइत्याशंकाः पराकुर्वन्नाद्यपद्यमवतारयति ॥ **अथेति** ॥ अथाविद्येत्यारभ्याचार्यवर्यइत्यंते नआद्यशंकायाः प्रारिप्सितेत्यारभ्यसमाप्त्याद्यर्थमित्यंतेन द्वितीयायाः ग्रंथारंभेत्यादिनातृतीयायाश्चनिरासइतिध्येयं ।

ननुमंगलानंतरारंभप्रश्नकात्स्न्येंष्वथो अथेतिस्मरणादत्राथशब्दः । किंमंगलार्थः उतानंतर्यार्थः अथप्रारंभार्थः यदिवाप्रश्नार्थः। नाद्यः। मंगलस्यकृतत्वात्। नद्वितीयः। कस्याप्यर्थस्यभाष्येपूर्वमप्रकृतत्वात्भाष्यकृन्नमनस्यटीकाकृद्व्याख्याप्रतिज्ञानंतर्यायोगाच्च। नतृतीयः। व्याकुर्वेइत्यनेनव्याख्याप्रारभ्यतइतिलाभात्। नचतुर्थः। उत्तराद्यनुपलंभात्। अतोव्यर्थइतिचेत्। अत्रब्रूमः। आचार्यवर्यः ब्रम्हसूत्राणियथावद्व्याचिख्यासुर्नमस्कारंग्रथयतिग्रंथारंभंचप्रतिजानीतेत्युक्तेइयंशंकोन्मिषति। ननुसूत्रव्याख्यानार्थंप्रवृत्तेनाचार्येणतदेवकार्यंकिमनेनासंगतेननमस्कारादिग्रथनेनेत्यतउक्तं । अथव्याचिख्यासुरिति। देवतानमनग्रथनादिकरणानंतरंव्याचिख्यासुरित्यर्थः। तथाचबुभुक्षुः स्नानंकरोतीत्यादौस्नानस्यभोजनइव देवतानमनग्रथनादेर्व्याख्यानोपयोगलाभान्नासंगतिरितिभावः। अथवाबुद्धिस्थबुद्धचार्वाकतार्किककाणादकापिलाख्यपंचमतप्रवृत्त्यनंतरमित्यर्थः। अन्यथाव्याख्यातानीत्यनेनसंबंधः। पंचमतप्रवृत्त्यनंतरमेवान्यैरन्यथाख्यातत्वात्। यद्वासामान्यतः पूर्वं समग्रग्रंथ व्याख्याप्रारंभेपिप्रतिग्रंथव्याख्याप्रारंभार्थोऽथशब्दः। **अविद्यापटलपिहितनयनैरिति** । अविद्यया अयोग्यतालक्षणयासूत्रतात्पर्यार्थापरिज्ञानरूपयाच्नेत्रबंधाद्याच्छादितनयनाइववर्तमानैरित्यर्थः। अन्यथाव्याख्यानबीजायथार्थज्ञानोपपादनायैतत्। **अन्यैरिति** । भारतीविजयश्चैवसच्चिदानंदएवच । ब्रम्हघोषःशतानंदउद्वर्तश्चैवपंचमः । विजयोरुद्रभट्टश्च वामनाख्यस्तथाष्टमः । सयादवप्रकाशश्च नवमस्तत्रकीर्तितः ॥ रामानुजस्तथाभर्तृप्रपंचोद्राविडस्तथा । ब्रह्मदत्तोभास्करश्चविशाखोवृत्तिकारकः । तथाविजयभट्टश्चविष्णुक्रांतस्तथैवच । वादींद्रस्तुततःपश्चात् तथा-माधवदासकः । तथापश्चात्संकरश्चेत्येकविंशतिवादिभिः । प्रणीतानिनिराचक्रेदुर्भाष्याणिमहामतिरित्येकविंशतिसंख्याकैरित्यर्थः । य थाव्याख्यानसामर्थ्योपपादनायभगवानित्युक्तं । समग्रज्ञानवानित्यर्थः ॥ **कैवल्यादीति** ।

वाचनिकमंगलस्य भगवन्नमस्कारोपबृंहितत्वाद्भाष्यं पठतामितरेषां मोक्षादिफलंनिर्विघ्नपरिसमाप्त्यादिफलंचभवति । एकांतभक्तस्यनिरंतरायस्यचाचार्यस्यतुभगवत्प्रीतिरेवफलमितिभावः। समाप्त्यर्थंचेत्यनंतरंकृतमितिशेषः। यद्वाकैवल्याद्यखिलफलसाधनतासिद्धिरर्थः प्रयोजनंयस्यनमस्कारस्यसतथोक्तः । एवंनिरंतरायेत्याद्यपिनमस्कारविशेषणं । तेनतयोश्चतुर्थ्यर्थतत्वमभिप्रेत्यग्रथयतीत्यनेनान्वयेग्रथनस्य फलसाधनतासिद्ध्यादिफलकत्वमुक्तंस्यात् । तथाचनमस्काराधिकारादिग्रथनसूचनेशिष्यशिक्षार्थमित्युत्तरग्रंथविरोधः । तत्रग्रथनस्यशिष्यशिक्षाफलकत्वोक्तेरितिशंकापरास्ता। पाणिन्यादिसूत्रप्रतीतिनिरासायाह ॥अत्रेति॥ अत्रसर्वसूत्राणांब्रम्हरूपैकार्थप्रतिपादकत्वेनैकवाक्यत्वमितिसूचनाय समुदायविवक्षयैकवचनप्रयोगः । उच्यते मुख्ययावृत्त्याप्रतिपाद्यते । कुतइत्यतआह ॥ तस्येति ॥ निरुपपदशब्दस्येत्यर्थः मुख्यस्यानिर्विशेषेणशब्दोन्येषांविशेषणादितिवक्ष्यमाणत्वादितिभावः। तथापितथाविधान्यसूत्रस्यग्रहणंकिन्नस्यादित्यतआह ॥ तेषांचेति ॥ ब्रह्मसूत्राणामेवेत्यर्थः । अत्रमहावाक्यार्थभेदाभावेपिअवांतरवाक्यार्थभेदात् सर्वसूत्राणांप्रत्येकं अवांतरब्रम्हविद्यात्वमितिसूचनाय बहुवचनप्रयोगः । तादृशत्वात् । सूत्रांतरापेक्षयामुख्यत्वात् । येषांसूत्रत्वमंजसेतिवक्ष्यमाणत्वादितिभावः । नारायणंनत्वेत्येतावतानमस्कारग्रथनात् किंविशेषणचतुष्टयेनेत्यतआह। ॥ वक्ष्यमाणमिति ॥ सूत्रस्याध्यायचतुष्टयात्मकस्यवक्ष्यमाणोयोअर्थः गुणपरिपूर्णत्वादिरूपस्तमित्यर्थः । संगम्य संगृह्यप्रस्तावयितुंसंक्षेपतोनिरूपयितुंतस्यप्रपंचेजिज्ञासाजननंप्रयोजनमितिभावः । विशिनष्टि इतरेभ्योव्यावर्तयति । प्रस्तावप्रकारंदर्शयति । तथाहीत्यादिनाउदितत्वादित्यंतेन। प्रसत्त्याप्रसादेन ॥ सूचितइति ॥ अतःशब्देन संक्षिप्योक्तइत्यर्थः । तेनपरस्यब्रम्हणोविष्णोः प्रसादादितिवाभवेदितिप्रमाणानुसारेणसाक्षादतःशब्दार्थसंभवेसूचित

मितिकथमुक्तमितिशंकापरास्ता । उन्मिषति उदेति । प्रथमाध्यायेसर्वशब्दसमन्वयस्यैवोक्त्याकथंगुणपूर्णत्वंतदर्थइत्यत आह ॥ तत्रहीति ॥ आनंदमयादिसर्वशब्दानांसमन्वयेतत्तच्छब्दप्रवृत्तिनिमित्तप्रचुरानंदत्वादिसर्वगुणगणलाभादिति भावः । अत्रपर्यायानंतशब्दसमन्वयेतेषामेकार्थप्रतिपादकत्वात्सर्वगुणादीर्णतासिद्धिर्नस्यादतोअपर्यायेत्युक्तं । तथा विधकतिपयशब्दसमन्वयेपितदसिध्याअनंतेत्युक्तं । अपर्यायानंतशब्दानांरूढ्यासमन्वयेगुणालाभान्महायोगवृत्त्येति । अनन्यसाधारणावयवार्थसापेक्षवृत्त्येत्यर्थः॥ समन्वयेति॥ उपक्रमादिलिंगप्रमाणकशक्तितात्पर्यलक्षणसंबंधेत्यर्थः। सचे तिहरिपरामर्शकतच्छब्दस्यदोषवानपीत्यनेनसंबंधः। युक्त्यादीत्यादिपदेनसमयश्रुतिन्यायोपेतश्रुतीनांग्रहणं॥ दोषवा-नपीति ॥ प्रथमसूत्रेजीवव्यावृत्ततयाब्रम्हणएवजिज्ञास्यत्वसिद्धयेतस्यगुणपूर्णत्वमुक्तं । गुणपूर्त्यर्थमेवप्रथमाध्यायेश्रुति-स्थशब्दसमन्वयोनिरूपितः । युक्त्यादिविरोधेनश्रुतीनामप्रामाण्येचोक्तसमन्वयासिद्ध्यागुणपूर्णत्वस्याप्यसिद्धिप्रसंगेन विरुद्धधर्माधिकरणत्वाभावेनजीवाभेदेजीववत् दोषवान्स्यादित्यर्थः । यद्वा युक्त्यादिविरोधेनश्रुतीनामप्रामाण्यात् समन्वयेनिरोधितेसर्वकर्तृत्वसार्वज्ञ्यसर्वैश्वर्यादेरसिद्ध्यातत्तदधिकरणपूर्वपक्षप्रापकयुक्त्यादिभिर्जीववज्जनिमृत्यादिदोष-वानपिस्यादित्यर्थः। नकेवलंगुणाभाववात् किंतुदोषवानपीत्यपिशब्दः ॥ तत्रेति ॥ युक्त्यादीनामाभासत्वेनतद्विरो-धाभावेश्रुतिप्रामाण्यात्समन्वयेनगुणपूर्णत्वसिद्धौ विरुद्धधर्माधिकरणत्वेनाभेदाभावेदोषशंकानवकाशइतिभावः । यद्वायुक्त्यादेरप्रामाण्यप्रापकाभावान्नदोषशंकेतिभावः ॥ तत्रेति ॥ पादत्रयोक्तवैराग्यभक्त्युपासनादिभिश्चतुर्थपादो-क्तभगवज्ज्ञानंभवतीत्युक्तेतस्यज्ञेयत्वमेवोक्तमितिभावः ॥ तत्रेति ॥ पादत्रयोक्तकर्मक्षयोत्क्रांतिमार्गाणांभगवत्प्राप्त्यर्थ त्वाच्चतुर्थपादोक्त भोगस्यतत्प्राप्तिंविनाऽयोगाद्गम्यत्वमेवोक्तमितिभावः । ननुब्रह्ममीमांसाशास्त्रोक्तधर्माः ब्रम्हणएव-

वक्तव्याः किमर्थंनारायणस्योच्यंतइतिशंकानिरासायब्रह्मणएवनारायणत्वान्नारायणएवैतच्छास्त्रप्रतिपाद्यइतिद्योतनाय ब्रह्मशब्दसमानार्थकनारायणशब्दनिर्वचनपरत्वेनापिविशेषणचतुष्टयंयोजयति ॥ **अथवेति** ॥ नारायणशब्दनिर्वचनस्योक्तशंकानिरासफलकत्वे एतदपिस्तुत्यर्थमितिसुधाविरोधइतिचेन्न । तस्याःउपलक्षणत्वाभिप्रायेणप्रवृत्तेः । ॥ **सांकेतिकमिति** ॥ प्रवृत्तिनिमित्ताद्यभावेपिइदमनेनशब्देनवाच्यंभवत्विति कस्यचिदिच्छामात्रेणबोधकमित्यर्थः। विशिष्टगुणान्गुणपूर्णत्वाद्यनन्यसाधारणधर्मान्॥ **आचष्टेवक्ति** ॥ प्रतिपादयतीतियावत् ॥ **निर्वक्ति**॥ निरुच्यदर्शयति। तदेवक्रमेणदर्शयति। तथाहीत्यादिना। अभिन्नार्थत्वादिति। दोषारच्छिद्रशब्दानांपर्यायत्वंयतस्ततइत्युक्तेरितिभावः । **विरुद्धार्थेति** । सादृश्यंतदभावश्चतदन्यत्वंतदल्पता । अप्राशस्त्यंविरोधश्चनञर्थाः षट्प्रकीर्तिताइत्युक्तेरितिभावः । अभावार्थत्वात् अन्योन्याभावार्थत्वात् । अतएवाह ॥ **अराश्रयोनभवतीति** ॥ **नरेति** ॥ सज्जनेत्यर्थः ॥ **नरीयतइति** ॥ नक्षीयतइत्यर्थः । ननुपपदात् रीङ्क्षयइत्यस्माद्धातोरुणादयोबहुलमितिबहुलग्रहणादौणादिकेकरणेडप्रत्ययेडिलात्टेरितिटिलोपेचनरमितिभवति । ततःप्रज्ञादिभ्यश्चेतिस्वार्थिकाण्प्रत्यये तद्धितेष्वचामादेरित्यादिवृद्धौ यस्येतिचेत्यकारलोपेनारमितिरूपसिद्धिरितिभावः ॥ **अरमणमिति** ॥ रमक्रीडायामित्यस्माद्भावार्थे औणादिकेडप्रत्ययेरंरमणंतन्नभवतीत्यरमणंदुःखमित्यर्थः॥ **निर्दोषवेदोत्पन्नत्वादिति** ॥ अरविधुरत्वान्नारोवेदः । नारशब्दात्तस्येदमित्यणिकृते यस्येत्यकारलोपेनारशब्दोवेदजन्यज्ञानवाचीतिभावः। ननुनारशब्दात्वृद्धिर्यस्याचामादिस्तद्वृद्धमितिवृद्धसंज्ञायांवृद्धाच्छइतिछप्रत्ययेआयनेयीनीयियः फढखछघा मित्यनेनछस्येयादेशेनारीयमितिस्यात् । कथंनारमितिचेत् । सत्यंवानामधेयस्यवृद्धसंज्ञेतिनामधेयस्याविकल्पेनवृद्धिसंज्ञोक्तेः । संज्ञापूर्वकोविधिरनित्यइतिवै

तत्साधु । ननुविरुद्धार्थकनञ्समासेनअरेति स्थिते नलोपोनञः नञोनस्यलोपः स्यादुत्तरपदइति नलोपेअअरइतिजाते- तस्मान्नुडचितस्माल्लुप्तनकारान्नञुत्तरपदस्याजादेर्नुडागमः स्यादचिपरइतिनुडागमेअनरेतिस्यात् । एवमभावार्थेऽपि अरायणादन्योअनरायणइतिभवेत् । अश्वादन्योअनश्वइतिवत् । नारायणइतिकथं । ननुवृत्तौषष्ठाध्यायेतृतीयपादे स्त्रैणार्थइत्यत्रस्त्रीपुंसाभ्यांनञ्स्नञौ वितिविहितस्यनञानलोपाभावायनलोपोनञइतिसूत्रेरात्रेः कृतिविभाषेत्यव्यव- हितपूर्वसूत्रस्थविभाषापदानुवृत्तेरुक्तत्वात् । विभाषायाश्चव्यवस्थितविभाषात्वस्यन्यासेऽभिहितत्वादत्रापिनलोपाभावेना- रायणइतिसाधुरितिचेन्न । नलोपसूत्रेविभाषापदानुवृत्तौविभाषायाः व्यवहितभाषात्वेननभ्राडित्यादिशब्देष्वपितेन नलोपाभावसंभवेनतेषुशब्देषुनलोपाभावकथनायप्रवृत्तयोर्नभ्राण्नपान्नासत्यानमुचिनकुल नखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या । नगोप्राणिष्वन्यतरस्यामित्यनयोः सूत्रयोर्वैयर्थ्यप्रसंगात् । प्रपंचनार्थत्वमितित्वगतिकागतिः । तथाविधशब्द परिगणनार्थमित्यपिस्त्रैणार्थइत्यादेरपिपरिगणनप्रसंगाच्च कथंतर्हिस्त्रैणार्थइतिरूपं तत्रापिनलोपनुडागमे अयादेशेचस्त्रा यणेतिस्यादितिचेन्न । चरितार्थाचरितार्थयोरचरितार्थस्यग्रहणमितिन्यायेनस्त्रैणार्थइत्यत्रनञ्प्रत्ययेञकारस्यवृद्ध्यर्थ त्वेनचरितार्थत्वात् । तदनुबंधिनञ्प्रत्ययस्यापिचरितार्थत्वेननलोपसूत्रेनञ्इत्यनेनप्रत्ययनञोऽग्रहणात् । अचरितार्थ ञकारयुक्तिनिपातनञएवग्रहणात् । किंचनलोपोनञितिसूत्रेउत्तरपदेपरतः पूर्वस्यनलोपोभवतीत्युक्त्यापूर्वस्यपरत्वंच गम्यतेप्रत्ययनञः पदत्वाभावादेवनलोपाभावइतिसमाधानद्वयस्यमंजर्यामेवोक्तेः । नारायणइत्यत्रानिषेधार्थकानिपात- नयोश्चरितार्थत्वात् । स्यादेवनलोपइतितत्राह ॥ नगनाकादिशब्दवदयंशब्दोज्ञातव्यइति ॥ उक्तनिर्वचना- नुसारेणशब्दप्रयोगस्यप्रामाणिकत्वान्नभ्राडित्यादिसूत्रद्वयेअयमपिशब्दः उपसंख्येयइतिभावः । सुधायांतूपसंख्यान

वैय्याकरणैर्नेकृतमित्यरुच्या अमानोना: प्रतिषेधइतिगणपठिनसमासोयमितिसमाधानांतरमुक्तम् । चंद्रिकायांतुवृत्त्यनुसा-
रेणविभाषापदानुवृत्त्यासमाधानमभिधायतत्रमंजर्युक्तास्वारस्यंमनसिनिधायसुधानुसारेणपक्षांतरमुक्तं । लघ्वक्षरंपूर्व
मित्युक्तेरुत्तरसूत्रस्थस्यापिनगशब्दस्यपूर्वोनिर्देशः । नलोपाभावमात्रेनगशब्दोदृष्टांतः । नरीयतेअनेनेत्युक्तडांतत्वं
नगशब्दवदितिसूचनाय प्रथमप्राप्तनभ्राडित्यादिशब्दत्यागेननाकशब्दस्यस्वशब्देनोपादानंचतस्यनुडागमप्रसक्त्यापि
युक्तत्वात्इतरेषांतदभावात्नलोपाभावमात्रेदृष्टांततया आदिपदेनग्रहणं । सूत्रांतरस्थत्वात्नगशब्दस्यस्वशब्देनग्रहणं ।
यद्वादिपदेनैकधेत्यादिग्रहणंतेननसमासोयमितिसुधोक्तसमाधानांतरमप्यत्रोक्तंबोध्यं । नारायणपदस्यपदद्वयसमारूढ
त्वेनसमानपदत्वाभावाद्रषाभ्यांनोणः समानपदइत्यनेनणत्वासंभवात्पूर्वपदात्संज्ञायामगइतिणत्वं । तदर्थश्चपूर्वपदस्था
न्निमित्तात्उत्तरस्यनकारस्यणकारादेशोभवतिसंज्ञायांनगकारव्यवधानइति । ननुनपुंसकेभावेक्तइत्यतोनपुंसकइत्यनुव
र्तमानेकरणाधिकरणयोश्चेतिल्युटोविहितत्वेनल्युडंतनारायणशब्दस्यनपुंसकत्वंस्यादितिचेन्न वृत्तिकारेणकरणाधिकरण
योरितिसूत्रेनपुंसकइत्यस्यानुवृत्तेरनुक्तत्वात् लिंगानुशासनेइध्मप्रव्रश्चनगोदोहनइत्याद्युदाहरणात् । महाभाष्येभुवादयोधा
तवइतिसूत्रव्याख्यानावसरेकोसावनुमानोनामेत्युक्तत्वात्स्मृतिःप्रत्यक्षमैतिह्यमनुमानश्चतुष्टयमितिश्रौतप्रयोगाच्चेति ।
सुधायांतुल्युटःटित्करणसामर्थ्यादयनशब्दोअधिकरणेत्रिलिंगइतिपुल्लिंगत्वंचयुक्तमितिसमाधानांतरमुक्तं । एवंब्रह्म
मीमांसाशास्त्रार्थसंग्राहकविशेषणचतुष्टयस्यनारायणशब्दनिर्वचनपरत्वप्रदर्शनेननारायणस्यैतच्छास्त्रप्रतिपाद्यत्वकथना
न्नम्यत्वप्रयोजकाधिकृतत्वमपितस्योपपादितंभवति । इदानींतस्यैवनम्यत्वद्योतनायनम्यत्वप्रयोजकाविशिष्टेष्टाधिकृ
तत्वरूपतृतयोपपादकत्वेनापियोजयति ॥ अथवेति ॥ अत्रबहुगुणत्वनिर्दोषत्वाभ्यांविशिष्टत्वंशास्त्रज्ञेयत्वेनाधि-

कृतत्वं अधीतशास्त्रगम्यत्वेनेष्टत्वंप्रदर्शितं इतरासाधारणधर्मवत्वशास्त्रप्रतिपाद्यत्वापेक्षितफलदातृत्वानामेवक्रमेणविशिष्टाधिकृतेष्टशब्दार्थत्वादितिध्येयं ॥ **गुरूनपीति** ॥ यथादेवेतथागुराविितिश्रुतेरितिभावः । सामान्यप्रयोगेनिमित्तमाह । ॥ **गुरोरिति** ॥ नन्वेवमीशावास्यभाष्येयस्माद्ब्रह्मेंद्ररुद्रादिदेवतानांश्रियोपिच । ज्ञानस्फूर्तिःसदातस्मैहरयेगुरवेन-मइतिनामग्रहणंकथमितिचेत्। उदाहृतवाक्यस्यापरोक्षतोनामग्रहणनिषेधकत्वेनपरोक्षतस्तत्ग्रहणेबाधकाभावात्। अत-एवाचार्याणांनित्यापरोक्षीकृतगुरुत्वेपि मर्यादारक्षणायतत्रतस्मैनमइतिपरोक्षनिर्देशःकृतः । अत्रतुगुरूंश्चेतिसाधारणप्रयोगस्यापरोक्षकत्वकथनस्यैवोचितत्वात् । उपलक्षणमेतत् । सुधोक्तरीत्यागुरुत्वोपपादकगुरुगुरुत्वशास्त्रप्रभवत्वादिहेतुबाहुल्यसूचनायगुरूनितिबहुवचनप्रयोगइतिद्रष्टव्यं । ननुदेवतासमुच्चायकचशब्दसद्भावादपिशब्दोव्यर्थइत्यतआह । **स्वस्येति** । पृथङ्नमस्कारेणप्रसक्तं गुरुदेवताभेदमपिशब्देनगर्हयामासेत्यर्थः । आक्षिपति ॥ **यद्यपीति** ॥ तथाचनपृथङ्नतिर्युक्तेतिभावः । परिहरति ॥ **तथापीति** ॥ इतिशब्दः श्लोकव्याख्यानसमाप्तौ । यद्वाअपिपदेनकथमरुचिःसूचितेत्यतआह ॥ **यद्यपीति** ॥ अनेनापितथापिविशेषानुग्रहार्थंनत्वेतिव्याख्यातंभवति । तयाचभेदज्ञापिकायाःपृथङ्नतेर्विशेषानुग्रहरूपप्रयोजनांतरसूचकापिशब्देनभेदेरुचयभावः सूचितइतिभावः । नतिरितिप्रकारवाचीति शब्दस्येत्यरुचिंसूचयतीत्यनेनान्वयः । उपलक्षणमेतत् । सुधानुसारेणास्योद्भवादिदमित्याद्यनुव्याख्यानोक्तजगज्जन्मादि-कारणत्वादिविशेषणसमुच्चायकत्वमप्यपिपदेप्रयोजनंद्रष्टव्यं । अधिकार्यादिशून्यत्वान्नेदंशास्त्रमारंभणीयमित्यत-आह ॥ **अनेनैवेति** ॥ आद्यपद्येनैवेत्यर्थः । अन्यार्थं प्रवृत्तेनापीत्येवार्थः । वस्तुगत्याअधिकार्यादिसत्वमपेक्षितंनतुतत्सूचनमित्यत आह ॥ **श्रोतृप्रवृत्त्यंगभूताइति** ॥ सूचनेनज्ञातानामेवप्रवृत्त्यंगत्वंनाज्ञातानां । ज्ञातार्थेज्ञात

संबंधंश्रोतुंश्रोताप्रवर्ततइत्युक्तेरितिभावः । एवंप्रवृत्त्यंगत्वेनाधिकारादिसूचनंकर्तव्यमित्युक्तं । इतोपितत्कर्त्तव्यमित्याह । ॥ **तत्स्मरणस्येति** ॥ स्मरणार्थंसूचनमितिभावः । उक्तंप्रथमतात्पर्यं । प्रारभतःप्रारभमाणस्य । महदितिभिन्नंपदं । तेनान्महतःसमानाधिकरणेत्याकारेमहाफलमितिस्यादितिनिरस्तं । ननुनिर्विघ्नपरिसमाप्त्यादेर्नमस्कारेणैवसिद्धेर्ग्रंथनं व्यर्थंएवमधिकारादिसूचनस्यप्रवृत्त्यंगतयाकर्तव्यत्वेपिनमहाफलार्थकर्तव्यत्वंअधिकारादिस्मरणेनमहाफलसिद्धेः नचस्मरणार्थमेवसूचनमितिवाच्यं । तस्यान्यतोपिसंभवादित्यतआह ॥ **नमस्काराधिकारादीति** ॥ यथाक्रममन्वयः । सत्यं नमस्कारेणैवसमाप्त्यादिफलमिति । तथापिग्रथनाभावेशिष्याः आचार्यैर्नमस्कारोनकृतएवेतिमत्वास्वयमपिन कुर्युः । अतस्तच्छिक्षणार्थंग्रथनं । अधिकारादिस्मरणंअन्यतोपिभवतीत्यपिसत्यं । तथापितत्सूचनाभावेशिष्याः अधिकारादिस्मरणंनावश्यकमितिआचार्यैर्नतत्सूचनंकृतमितिमत्वानतत्स्मरणादिकुर्युः । अतोमहाफलार्थंतत्स्मरणमावश्यकमितिशिष्यशिक्षार्थंसूचनंकार्यमेवेतिनतस्यवैय्यर्थमितिभावः । प्रागूर्ध्वंग्रथनस्यसार्थक्येवक्तव्येअधिकारादिप्रसंगे तत्कथनमेकवाक्येनोभयप्रयोजनकथनसौकर्यार्थमितिध्येयं । अधिकारादिसूचनमेवोपपादयति ॥ **तथाहीति** ॥ सूचितइतियथायोगंसर्वत्रान्वेति । प्रयोजनमिति । यथाक्रममवांतरमुख्यप्रयोजनमित्यर्थः ॥ **यथासंभवमिति** ॥ नारायणस्यविषयस्यप्रतिपाद्यत्वंज्ञानस्यतद्विषयकत्वंगमनस्यज्ञानजन्यत्वंसंबंधइतिभावः । सूत्रार्थउच्यतइतिप्रतिज्ञाय-द्वापरेत्यादिनासूत्रागतिप्रकारनिरूपणमसंगतमित्यतः तदुपयोगंवक्तुमाक्षिपति ॥ **नन्विति** ॥ व्याख्येयत्वप्रयोजकशून्यत्वान्नसूत्राणांव्याख्येयत्वमितिवक्तुंव्याख्येयत्वप्रयोजनंतावद्दर्शयति ॥ **यदुपादेयमिति** ॥ अनुपादेयस्यापिपूर्वपक्षग्रंथस्यव्याख्येयत्वदर्शनादाह । अनन्यार्थतयेति प्राधान्येनेत्यर्थः । पूर्वपक्षग्रंथस्यमहावाक्यार्थबोधोपयोगितया-

व्याख्येयत्वेपिनप्राधान्येनव्याख्येयत्वं। नचेदंशास्त्रमवांतरवाक्यंयेनानुपादेयमपिमहावाक्यार्थज्ञानोपयोगितयाव्याख्ये यंस्यादितिभावः। तर्ह्युपादेयत्वमप्यस्त्वित्यतस्तत्प्रयोजकशून्यत्वान्नास्तीतिवक्तुमुपादेयत्वप्रयोजकमाह । यच्चेति। इष्ट साधनतावबोधकस्यापिविप्रलंभकवाक्यस्यानुपादेयत्वात्सत्यंतं । प्रमाणभूतस्यापिवाणिज्योपदेशस्य विरक्तेनानुपादे- यत्वात्तदुत्तरभागः। अप्रमाणत्वेष्टसाधनानवबोधकत्वाभ्यांनिश्चितस्यापिदुःशास्त्रस्यख्यात्याद्यर्थमुपादेयत्वदर्शनात्प्राय- इत्युक्तं। अत्यंतमित्यर्थः। अतएवब्रह्मसूत्राणामत्युपादेयत्वादितिवक्ष्यति। यदर्थमेतन्निरूपणंतदिदानीमाह। अतइति। कथंनकथमपि। शब्दप्रामाण्यप्रयोजकापौरुषेयत्वाप्तमूलत्वयोरभावादे तत्कामेनेदंकार्यमित्यप्रतिपादनाच्चेतिभावः। दे- शेज्ञानाप्रसक्तेराह ॥ **सार्वत्रिकपुरुषेति** ॥ **सम्यग्ज्ञानइति** ॥ असम्यग्ज्ञानस्यतन्निर्णयायेत्युक्तानिर्णयानुपपत्ते रितिभावः ॥ **किमिदमदोवेति** ॥ विष्णुर्गुणपूर्णइतिज्ञानेइदंप्रमाणमप्रमाणंवामोक्षसाधनंनवेतिकेषांचित्संदेहविषयी भूतेकेषांचिदप्रमाणमेवमोक्षसाधनंनवेतिविपरीतज्ञानविषयीकृतेचेत्यर्थः। आकुलीभावेकिन्निमित्तमित्यतआह ॥ आ- **कुलीभावेति** ॥ तस्याकुलीभावप्रयोजकत्वंद्वापरेखिलमितिवक्ष्यमाणप्रमाणेव्यक्तमितिभावः। भाष्येतंनिर्णयायेति। तच्छब्देनज्ञानपरामर्शः । तस्यप्रमाणत्वमोक्षहेतुत्वादिनानिर्णयस्तन्निर्णयः । अथेत्यस्यावतारानंतरमेवनतुपरोपदेश- मपेक्ष्य येनस्वतःसार्वज्ञंनस्यादित्यर्थः । यद्वा अथशब्दोऽवतारानंतर्यार्थःसन्व्यासावतारस्यमुख्यतांवेदोद्धार- कत्वादिप्रयोजनमाह ! भाष्येउत्सन्नमित्यस्यनष्टमितिव्यभजादित्युक्त्येऽदानीमेवव्यासेनवेदाविभागकृतःपुर्वत्वाविभक्त- एवेति । चतुर्विंशतिधेत्यादेरेकैकंचतुर्विंशत्यादिभेदेनचेतिप्रतीतिनिरासायाह॥ **वेदमुत्सन्नमित्यादेरिति** ॥ अस्ये त्यर्थइतिवक्ष्यमाणेनान्वयः ॥ **प्रागेवेति** ॥ व्यासावतारात्पूर्वमेवेत्यर्थः । वेदंमूलवेदादुत्धृतमुपवेदं ॥ **एकैकस्मादे**

ऋगादिसंज्ञकादुपवेदादुत्धृत्याविभक्तंऋग्वेदाद्यवांतरवेदामित्यर्थः ॥ **चतुर्विंशत्यादीति** ॥ ऋगादौयथाक्रममेतध्ये-यम् मूलवेदादुत्धृतादृगादिरूपादुपवेदादवांतरवेदः कृतइतिभाष्येअस्पष्टमपिकिमर्थंकल्पितमित्यतस्तत्रऋग्भाष्यसंमति-माह ॥ **तदुक्तमिति** ॥ अयमर्थः आदावेकएववेदइतिसनारायणेनऋङ्गनिगदसामाथर्वभेदेनचतुर्धाविभक्तःतएवोपवे-दाइत्युच्यंते । अनंतरंव्यासेनचतुर्णामुपवेदानांमध्येएकैकस्मादेकैकोवेदः कृतस्तेषांचऋग्वेदइत्यादिनाम। तएवावांत रवेदाइत्युच्यंते । तेषांचमध्येएकैकस्माच्चतुर्विंशतिधेत्युक्तप्रकारेणशाखाःकृताइति । इदंचात्रऋङ्गनिगदसामशब्दै र्महावेदादुत्धृताउपवेदाइत्युच्यंतेइत्यादिऋग्भाष्यटीकास्थव्यवहारतोवगम्यते । सूत्रागतिक्रमंवक्तुंप्रवृत्तेनवेदमुत्संन्नंव्यं जयंस्तदर्थनिर्णयायब्रम्हसूत्राणिचकारेत्येववक्तव्येवेदविभागकथनंकिमर्थमित्यतआह ॥ **अवांतरेति** ॥ महावेदा दुत्धृतोपवेदानामवांतरवेदत्वेनाविभागकथनंआदिपदेनतेषांचतुर्विंशत्यादिविभागकथनंग्राह्यं । नकेवलंद्वापरग्रहणमि-तिचशब्दः । अन्यथाविभागोव्यर्थःस्यादितिभावः । अत्रप्रथमभागवतसंमतिमाह ॥ **चक्रइति** ॥ अल्पमेधसः । अल्पज्ञानिनः । यदुपादेयमित्यादिनाकृतचोद्यस्यकथमनेनपरिहारइत्यतआह । अयंभावइत्यादिना व्याख्ये-यतेत्यंतेन ।आप्तमूलत्वेनसूत्रप्रामाण्योपपादनायोपोद्घातसंगतिमाह । **वाक्यप्रामाण्यमिति** ॥ श्रुत्यादिमूलत्वेन प्रामाण्यस्याग्रेवक्ष्यमाणत्वात्तावच्छब्दः। आप्तिश्चवक्तृनिर्दोषतैवेति । यद्यपिवक्तृश्रोतृप्रसक्तीनांयदाप्तिरनुकूलतेत्यनु व्याख्याने श्रोतृप्रसंगानिर्दोषताप्तिरित्युक्तं । तथापिश्रोतृप्रसंगयोर्दुष्टत्वेवक्तारिविप्रलंभापहासरूपदोषौतयोरदुष्टत्वेत स्यापितदुभयराहित्यमितिश्रोतृप्रसंगदोषयोस्तदुभयव्यापकत्वेनव्यापकीभूतश्रोतृप्रसंगदोषाभावेव्याप्यभूतविप्रलंभाप -

हासाख्यवक्तृदोषाभावइतिवक्तृनिर्दोषत्वैवाप्तिरित्युक्तं । अतएवाग्रेश्रोतृप्रसंगदोषाभावाभ्यांविप्रलंभापहासाख्यवक्तृदोषाभावमुपपादयिष्यति । यदर्थमुपोद्घातनिरूपणंतादिदानीमाह ॥ आप्तिमूलत्वादिति ॥ वक्तृनिर्दोषत्वरूपाप्तिमूलत्वमुपपादयति । प्रमादेत्यादिनादोषाभावादित्यंतेन । नारायणावतारोव्यासइतिहेतुगर्भविशेषणमेतत् । अनेननारायणोव्यासत्वेनावततारेत्येतदुक्तार्थम् । नारायणावतारत्वस्यप्रमादाद्यसंभवंप्रत्यप्रयोजकत्वंपरिहरति । भगवत्वादेवेति । अन्यथातन्नस्यादितिभावः । अनेनभगवानित्येतदुक्तभावं । कोयंश्रोतृदोषः कथंचतदभावइत्यतआह ज्ञानायोग्यतायाइति ॥ ब्रह्मादिश्रोतृष्विति । अनेनब्रम्हरुद्रेंद्रादिभिरित्येतदुक्ताभिप्रायम् । प्रसंगदोषःश्रोतृप्रयोजनोद्देशाभावः । निर्हरणस्य निवारणस्य । अनेनतन्निर्णयायार्थितइतिपदद्वयमुक्ततात्पर्यं । मूलत्वादित्यनंतरंसुतरांप्रामाण्यासिद्धिरितियोज्यं । तन्मूलत्वोपादनायश्रुतिनिर्णायकत्वेनेत्युक्तानिर्णायकत्वेनैवमीमांसारूपत्वेनयुक्तिमूलत्वस्यापिप्राप्तत्वादितिभावः। अनेनतन्निर्णयायेत्येतदुक्ताशयं । अत्रश्रुतियुक्तिमूलत्वंश्रुतियुक्तिभ्यांअर्थमुपलभ्यरचितत्वरूपंसर्वज्ञव्यासप्रणीतेनसंभवतिकिंतुसमानार्थकत्वासाम्येनतत्संवादित्वमेव नचतर्हिश्रुतियुक्तिसंवादित्वादित्येवाकिन्नोक्तमितिवाच्यं । यादृच्छिकसंवादिताप्रतीतिनिरासायैवमुक्तत्वात् । इष्टसाधनावबोधकत्वमाह । इष्टानिष्टेति । तन्निर्णायकत्वेनतत्समानार्थकत्वादितिभावः । अनेनार्थेष्टानिष्टेत्याद्युक्तप्रयोजनं । निष्पन्नज्ञानस्यत्रेतादावपिस्थितत्वेनकृतग्रहणंकिमर्थमतआह ॥ यथोत्पन्नमिति ॥ भाष्येकिंचिद्भागचतुष्टयेएकोभागः । अन्वयमाह । अखिलमिति ॥ कालतःद्वापराख्यकालसामर्थ्येन । द्वावेवधर्मज्ञानपादौपरावशिष्टौयास्मिन्युगेसद्वापरइतितत्त्वप्रदीपानुसारेण तन्निर्वचनादितिभावः । ज्ञानस्याज्ञानताप्राप्तिःकथमित्यतआह ॥ अज्ञानमितीति ॥ नञोविरुद्धार्थत्वादिद

मप्रमाणमेवेतिविपरीतप्रतीतिविषयतामित्यर्थः । संदेहःप्रमाणमप्रमाणंवेत्यादिरूपः । अनुक्रोशः कृपा । **नाज्ञाना-दिमिश्रत्वमिति** ॥ विपरीतज्ञानसंदेहागोचरत्वमित्यर्थः ॥ **स्वहतेति** ॥ स्वेनगौतमेनहतायागौःतन्निर्मातारोयेऋषयस्तन्मात्रविषयत्वादित्यर्थः । ब्रम्हादयश्चनतन्निर्मातारइतिभावः । दुर्भिक्षोपद्रुताऋषयोगौतमतपःसमृत्धगौतमाश्रममाप्याचिरकालंतेनसंमानिताःसुखमुषिताःकालेनसुभिक्षंस्वदेशमियासवस्तदनुज्ञांयाचमानाअपिस्नेहवशेनतेनाप्राप्तानुज्ञाः शिवशिरस्थभागीरथींसपत्नींनिष्कासयंत्यापार्वत्याचोदितेनगणेशेनोपदिष्टोपायाऋषयःतपोबलेनकांचिद्गांनिर्मायतदाश्रमस्थव्रीहिभक्षणार्थंतत्यजुः गौतमस्तांतृणेनमंदंताडयामास । अथसाममार । ततस्त्वयागोहत्याकृताऽतस्त्वंनभोज्यान्नइतिगौतममभिधायजग्मुः । ततोगौतमोबहुकालचीर्णतपस्तुष्टहरशिरसोवतारितजान्हवीजलेनगांपरिषिच्योज्जीवयामास । तज्जलंगोदावरीतिलोकेप्रसित्धं । ततोगौतमःकिमेतदितिविचिंत्यविप्रकृतान्यायंनिश्चित्यतानज्ञानहीनाभवथेतिशशापेतिशापप्रकारस्तत्वप्रदीपेव्यक्तः । कालाभिभवःद्वापराख्यकालसामर्थ्येनज्ञानाभिभवः । ब्रह्मादिदेवव्यतिरिक्तसकललोकानां गौतमहतगोनिर्मातृत्वाभावेपि तद्ज्ञानस्ययथान्यथात्वं:एवंब्रह्मादिज्ञानस्यापि किंन्नस्यादित्यतआह ॥ **लोकस्येति** ॥ तत्ब्रह्मादिबुत्धेःसज्जनानुक्रोशयुक्तत्वं । अन्यत्र गीताभाष्ये । ज्ञानं ज्ञेयं तथाचनष्टेअदर्शनंगतेधर्मज्ञानेयस्यतस्मिन्लोकेकृपालुभिरित्यर्थः ।भाष्ये । महायोगीमहाशक्तिः । उज्जहारउत्धृतृवान् । वेदानितिबहुवचनेनप्रकृतेवेदानांतस्येत्येकवचनेनपरामर्शेकारणमाह ॥ **बहुवचनप्रयोगेपीति** ॥ **नार्थभेदइति** ॥ विष्णोः सर्वोत्तमत्वरूपमहावाक्यार्थस्यैकत्वादितिभावः॥ **आहेति** ॥ सूत्रेषुयेषुसर्वेपीत्यादिनापरिहारंवक्तुमुपोद्घातमाहेत्यर्थः।प्रश्नासंगतिंपरिहरति। **यदांजस्यमिति**। यस्यसूत्रत्वस्यमुख्यत्वमित्यर्थः। सूत्राणांप्रायोबव्हक्षरत्वादतआह।

॥ यावदक्षरतामिति ॥ अक्षरसमुदायमित्यर्थः । तत्तावदक्षरोपेतत्वं । प्रकृतार्थप्रतिपादकाल्पाक्षरबव्हक्षरगुक्तपर्यायपदानांमध्येअल्पाक्षरपदोपेतत्वंअल्पाक्षरत्वमित्यर्थः । इदंचश्रुत्यनुगमादिप्रयोजनविशेषाभावे । तद्भावेचाधिकाक्षरपदोपेतपदोपादानेपिनदोषः । तेनखंतल्लिंगादितिवक्तव्यंनाकाशस्तल्लिंगादितिनिरस्तं । तत्राकाशइतिहोवाचेतिश्रुत्यनुगमायैवाकाशपदग्रहणात् ॥ एवमन्यत्रापिबोध्यं ॥ एवंचेति ॥ एवमपिभवतितथापिभवतीत्यवचनमित्यर्थः । इत्थमेवनान्यथेतिनिर्णायकत्वमितियावत् ॥ विशिष्टार्थतेति ॥ अनन्यप्राप्तार्थतेत्यर्थः ॥ बहुशाखेति ॥ सद्व्याकरणसूत्रादेरपिबहुशाखागतपदस्वरादिनिर्णायकत्वान्नतत्राव्याप्तिः ॥ व्यर्थेति ॥ साम्निऋगक्षराव्याप्तगानभागपरिपूरणायहावूहावित्यादिग्रहणवत्प्रकृतार्थाप्रतिपादकत्वेपिप्रयोजनांतरायाक्षराप्रयोगइतिभावः । अल्पाक्षरत्वंप्रकृतार्थप्रतिपादकादधिकाक्षराप्रयोगः । अस्तोभत्वंतदप्रतिपादकाक्षराप्रयोगइतिमहान्भेदः । ननुकिंतत्सूत्रत्वमितिसूत्रलक्षणस्यपृष्टत्वादनेनसूत्रलक्षणमुच्यतइत्यंगीकार्यं । तत्रकिमेतेषांप्रत्येकलक्षणत्वं । उतमिलितानां । नाद्यः अल्पाक्षरत्वविश्वतोमुखत्वातिरिक्तानांचतुर्णामपिपुराणादौसत्वेनातिव्याप्तेः । नांत्यः । अल्पाक्षरत्वेसतिविश्वतोमुखत्वमात्रस्यातिव्याप्त्यभावेनशेषवैयर्थ्यादितिचेत् । सत्यं । अल्पाक्षरत्वेसतिविश्वतोमुखत्वमेवलक्षणं । तत्रापिविश्वतोमुखत्वस्यपंचरात्रादावतिव्याप्तत्वात्सत्यंतं । अल्पाक्षरत्वमात्रंतथाविधवाक्यविशेषेगतमतोविशेष्यभागः । इतरत्स्वरूपकथनमिति । अतःशब्दस्यमुख्यसूत्रत्वपरामर्शकत्वात्तेनहेतुनानिर्विशेषितत्वसाधनंप्रतीयते । तच्चानुपपन्नं । मुख्यसूत्रत्वस्यसंदिग्धत्वात् । निर्विशेषितत्वस्यासिसाधयिषितत्वाच्च । अपिशब्दस्य ब्रह्मसूत्रस्यापीत्यन्वयेअन्येषामपिसूत्राणांनिर्विशेषितत्वप्राप्तिःचशब्दश्चव्यर्थइत्यतआह ॥ यतइति ॥ यथापर्वतस्यवन्हिमत्वंकुतइतिप्रश्नेव्यापकीभूतवन्हिमत्वएवप्रमाणसिद्धधूमवत्वं संभवतीत्याभिप्रायेणाग्निमत्वादेवधूमवत्वामि-

त्युक्ते धूमवत्वस्यवन्हिमत्वे हेतुमत्वं लभ्यते । तथाप्रकृतेपिमुख्यसूत्रत्वादेवानिर्विशेषितसूत्रत्वंनान्यथेत्युक्तोनिर्विशेषितसूत्र स्यमुख्यसूत्रत्वेहेतुत्वलाभइतिभावः । अतएवहेतोरन्यथासिद्धिपरिहारायावधारणार्थकचशब्दोतएवेतियोजितः । अपिशब्दस्तुनिर्विशेषितसूत्रत्वहेतोरसिद्धिपरिहारायप्रमाणप्रसिद्धिद्योतकः । अतएवोक्तंपुराणादाविति । निर्विशे षितशब्दाद्ब्रम्हेतिहरिरुच्यते । यथासूत्रेतिशब्देनब्रह्मसूत्रंनिगद्यतइत्यादावित्यर्थः । निर्विशेषितसूत्रत्वंनिरुपपदसूत्रपद-वाच्यत्वं । विशेषव्याप्तिग्रहणेयथाव्यासत्वमितिदृष्टांतासंगतेः सामान्यव्याप्तिंदर्शयन्नाह ॥ **यद्यत्रेति** ॥ यत्रसजातीये व्यतिरेकव्याप्त्युपयोगमनुपदमेववक्ष्यति । निर्विशेषितव्यासत्वमिति । व्यासत्वमित्येवोक्तत्वादितिभावः ॥ **तन्मु-ख्यमिति** ॥ अनेनैकस्येत्येतन्मुख्यस्येतिव्याख्यातं । द्रौणिरश्वत्थामा ॥ **अमुख्याइति** ॥ तत्रैकस्येत्युक्तत्वात् अत्रामुख्यत्वमर्थाल्लब्धमितिभावः ॥ **विशेषणाव्यासाइति** ॥ द्रौणिव्यासेत्यादिसोपपदव्यासशब्दवाच्याइत्यर्थः । हिशब्दोहेत्वर्थः । अपराणीत्यस्यान्यत्वममुख्यत्वंचार्थइत्यभिप्रेत्याह ॥ **अन्यसूत्राणामिति** ॥ व्याप्तिर्हिनिमिद मितिनमंतव्यमित्याह ॥ **एतदुपपादनायैवेति** ॥ निर्विशेषितसूत्रत्वहेतोरप्रयोजकत्वव्यभिचारशंकयोर्मुख्यस्यनि र्विशेषेणेत्यनुपपदमेवनिराकरिष्यमाणत्वेनप्रयोजनांतराभावादेतदर्थमेवप्राग्व्यतिरेकव्याप्तिप्रदर्शनपूर्वकं दृष्टांताभिधान मितिभावः । अनुमानद्वयेअप्रयोजकत्वंशंकते ॥ **निर्विशेषणेति** ॥ व्यासद्रौणिव्यासादिदृष्टांतबलादंगीक्रियत इत्यतआह ॥ **दृष्टांतइति** ॥ यथाश्रुतेचोद्यानिरासादाह ॥ **मुख्यस्यैवेति** ॥ अत्रमुख्यस्यनिर्विशेषणशब्दवा चत्वेइतिवेदाविदः प्राहुरिति वेदस्यवृद्धव्यवहारस्यचप्रमाणीकृतत्वेन विपक्षेप्रामाणिकपरित्यागाख्यानिष्टप्रसंगसूचनेनो-क्तशंकापरिहारइतिध्येयं । नन्वत्रदृष्टांतदार्ष्टांतिकयोःकथंनिर्विशेषणशब्दवाच्यत्वं । ब्रम्हसूत्रमितिवेदव्यासइतिचतयोः

सोपपदशब्दवाच्यत्वादितिचेत्। उच्यते अत्रनिर्विशेषणशब्दवाच्यत्वमित्यनेनजनकनामपूर्वकनिर्देशाभावोभिमतः। सच तयोरस्तिउक्तव्याख्यानानुसारेणब्रह्मशब्दस्यविचार्यपरत्वात्व्यासीयसूत्राणीतिकुत्राप्यभावात्। पाराशर्यव्यासइत्यभावाच्च। अन्यत्रतुजैमिनीयसूत्रंद्रौणिव्यासइत्यादिकर्तृनामपूर्वकनिर्देशइति। प्राक्कथितस्योपयोगंवदन्नेवतात्पर्यमाह। यत्सूत्रधर्मोति ॥ अनेनसर्वइत्येतत्सर्वशाखाविषयइतिव्याख्यातं ॥ कथमेषामिति ॥ द्वित्रिशाखाभिन्नशाखा-निर्णायकत्वस्यैववक्तव्यत्वादितिभावः। अन्यथा अन्येषांद्वित्रिशाखानिर्णायकत्वाभावेसर्वस्यशब्दजातस्येत्यन्वयमदर्शनपूर्वकंप्रतीकग्रहणं। अत्रशब्दजातस्येतिषष्ठीकर्तरीत्याह ॥ शब्दसमूहैः क्रियमाणइति ॥ यद्वासंबंधमात्रेषष्ठी संबंधश्चजन्यजनकइतिभावः। तन्निर्णयस्य सूत्रांतरैःक्रियमाणनिर्णयस्य ॥ व्याख्यानरूपत्वादिति ॥ समाकर्षादितिसूत्रेणब्रम्हवाचकज्योतिरादिशब्दानांअत्रांतरमुख्यवृत्त्याकर्मादिष्वाकर्षणाज्ज्योतिष्टोमादिकर्मणांतत्क्रमाणांतत्फ-लानांचप्रतिपादकताज्ञेयेतिसूचितकर्मकांडविस्तारस्यजैमिनिनासाविस्तरंप्रतिपादितत्वात्कर्ममीमांसासूत्राणांब्रम्हसूत्र--व्याख्यानरूपत्वं। इयदामननादितिसूत्रेणनामादिप्राणपर्यंतंकृतदेवविचारस्यसाविस्तरंदेवमीमांसासूत्रेषुप्रतिपादनाद्देवमीमांसासूत्राणामपिब्रम्हसूत्रव्याख्यानरूपत्वं। ज्योतिरुपक्रमात्तुतथाह्यधीयतएकइतिसूत्रेणसमन्वितस्वरवर्णपदादिनिर्णायकत्वात् व्याकरणसूत्राणांब्रह्मसूत्रव्याख्यानरूपत्वं। व्याख्यानव्याख्येययोःसमानविषयकत्वंप्रसिद्धमिति-भावः। तर्हिसूत्रांतरवैय्यर्थ्यमित्यतआह ॥ श्रुतिमूलकेति ॥ उपसंहारइति। तेनचकारब्रम्हसूत्राणीत्यनेननपौनरुक्त्यमितिभावः। येषुसूत्रेषुयत्प्रमाणइतियच्छब्दयोरन्वयाप्रतीतेराह। सूत्रेष्वित्यादेरितिभाष्ये पक्षिषुजरितर्यादिषु उक्तरीत्याब्रम्हादिज्ञानातिरोधानाभावात्कथंज्ञानंसंस्थाप्येतितिरोहितप्राप्तिरुच्यतइत्यतआह। ब्रम्हरुद्रादीति। अत्र

दृढीकरणंब्रह्मणएवरुद्रादेःकिंचिदप्राप्तलाभइत्याहुः । वस्तुतस्तुब्रम्हणोंप्यप्राप्तलाभोअस्त्येव । ब्रह्मादीनामप्यप्राप्त ज्ञानमुत्पद्यतइतिईशावास्यभाष्यटीकोक्तेः । अप्राप्तलाभइत्येतत्ब्रह्मातिरिक्तविषयमितिनमंतव्यं । अत्रगीतातात्पर्य मुदाहरति ॥ **जानंतइति** ॥ पृच्छंतिसाधवोलोकेतेनपृच्छासिपार्थिवेतिवाक्यशेषः । नन्वेवंज्ञानंपुनःप्रापुर्देवाश्चऋषय स्तथेतिमहाभारततात्पर्यनिर्णयेपुनः शब्दबलाद्देवानां तिरोहितप्राप्तेराचार्यैरेवोक्तत्वावगमात्तदनुसारेणज्ञानंसंस्था- प्येत्यत्रापितिरोहितज्ञानमुत्पाद्येत्यर्थः किंनस्यादित्यतआह ॥ **एवंज्ञानमिति** ॥ अयंपूर्वंस्थितस्येत्यादिनोक्तः ॥ **यत आहुरिति** ॥ उपास्यैवतुपश्यंतिनान्यथातुकथंचन । ऋषीन्राज्ञस्तथारभ्यप्रतिभाभ्यधिकाक्रमात् । यावद्ब्रह्माब्र- म्हणस्तुप्रायोनाप्रतिभासितमितिगीतातात्पर्येआचार्याःयत्आहुरतोविरिंचेतरेषामेवतिरोहितलाभइत्यर्थः । नन्वत्रैव- प्रायइत्युक्तत्वात् कदाचिद्ब्रम्हणोपिज्ञानतिरोभावोज्ञायते । एवंपुराधारणयात्मयोनिर्नष्टांस्मृतिंप्रत्यवरुद्ध्यतुष्यन्निनितद्वि- तीयेअप्याश्रितः कंजमुलोकतंत्रंनात्मानमत्धाविददादि देवइत्यादितृतीयेचस्पष्टं तिरोहितज्ञानलाभः प्रतीयतेअतः । कथंविरिंचेतरेषामित्युक्तिरितिचेत् । उच्यते । नब्रह्मणःकदाचिदपिज्ञानतिरोधानाख्याज्ञानं । तस्यमध्यंदिनेसूर्यक्षो- भवत्क्षोभमात्रकं नैवाज्ञानंयथासूर्येतमोनास्तिकथंचनेतिएकादशतात्पर्योक्तेः । किंतुविष्णुप्रीत्यर्थंस्वात्मनोज्ञानंकदा- चित्प्रदर्शयाति । अज्ञानंचचतुर्वारंद्विवारंभयमेवच । शोकोपितावन्नान्यत्रकदाचिद्ब्रम्हणोभवेत् । तत्रापिभगवत्प्री- त्याउन्नत्यैवास्यतद्भवेदितिषष्ठतात्पर्योक्तेः । पुनःश्रवणादिकंचविष्णुप्रीत्यर्थमेवविष्णोःप्रीत्यर्थमेवास्यश्रोतव्यंप्राय शोभवेदितिगीतातात्पर्यवाक्यशेषात्कादाचित्कप्रदर्शनाभिप्रायं । प्रायइति । ननुविरिंचेतरेषामपिकथंतिरोहितलाभः । उक्तरीत्यातेषांज्ञानातिरोधानाभावादितिचेत्सत्यं । गौतमशापकालसामर्थ्याभ्यांतद्ज्ञानाभिभवाभावेपिब्रह्मवरोपो-

द्बलितकल्यावेशेनतत्तिरोधानंपुनस्तत्प्राप्तिश्चास्त्येव । कलिस्त्वयंब्रह्मवरादिदानींनिबाधतेस्मान्सकालःप्रजाश्च । अज्ञानमिथ्यामतिरूपतोसौप्रविश्यसज्ज्ञानविरुत्धरूपः । अथोगिरीशादिमनोनुशायीकालिर्ममाराशुसुवाङ्मयैःशरैः । निकृंतशीर्षोभगवन्मुखंरितैःसुराश्चसज्ज्ञानसुधारसंपपुरितिभारततात्पर्योक्तेः । प्राक्शापकालाभ्यामेवाभिभवाभावउक्तस्तदनुसारेणपूर्वव्याख्यानमितिनकोपिदोषइति ॥ **तत्रेति** ॥ सूत्रेष्वित्यर्थः । सूत्राणामत्युपादेयत्वेनव्याख्येयत्वेसित्थेसतीतिवा । आदिशब्देनविषयादिपरिग्रहः । अत्रप्रथमाधिकरणे ॥ **शास्त्रसंगतिरिति** ॥ तद्विजिज्ञासस्वतद्ब्रह्मेत्यादि ब्रह्मविचारविधायकवाक्यार्थनिर्णायकन्यायव्युत्पादकत्वात् ब्रम्हविचारपरशास्त्रे अंतर्भावलणसंगतिरित्यर्थः । यथोक्तंसुधायांसंगतिर्द्विविधा । अंतर्भावलक्षणाआनंतर्यलक्षणाचेति । आद्यापिशास्त्राध्यायपादांतर्भावभेदेनत्रिविधा द्वितीयाप्याक्षेपकीआतिदेशकीऔपोद्घातकीआपवादकीत्याद्यनेकविधेति । अत्रयद्यप्यन्यथेत्युत्तरवाक्योक्तरीत्याजिज्ञासायाःकर्तव्यत्वाभावेजिज्ञासाकरणी भूतन्यायग्रथनात्मकशास्त्रस्यानारंभणीयत्वप्रसंगात्तदर्थप्रवृत्तस्याधिकरणस्यशास्त्रेणोपोद्घातकीसंगतिरप्यस्ति । तथापिसात्रनविवक्षिता । तथात्वेतस्यावक्ष्यमाणरीत्याऽध्यायपादाभ्यामपिसत्वेनशास्त्रसंगतिरस्ति अध्यायपादसंगतिर्नास्तीतिवक्तुमयोगात् । अतएवन्यायविवरणटीकायां तद्विजिज्ञासस्वेतिवाक्यार्थविचारपरत्वाद्वेदार्थमीमांसाशास्त्रांतर्गतमपिभवतीत्यंतर्भावसंगतिरेवोक्ता । सुधायामपिअतएवास्यनशास्त्रबहिर्भावइत्युक्तं । किमर्थं जिज्ञासायाकर्तव्यत्वमत्रसमर्थनीयमित्यतआह ॥ **अन्यथेति** ॥ जिज्ञासायाअकर्तव्यत्वेजिज्ञासाकरणीभूतन्यायग्रथनात्मकशास्त्रस्यानारंभणीयत्वप्रसंगादित्यर्थः । ननुशास्त्रेऽध्यायेतथापादेश्रुत्याधिकरणेनच । संगतिः पंचधाप्रोक्तासर्वाधिकरणेष्वपिइत्याद्युक्तेः कथंशास्त्रसंगतिरेवप्रदर्श्यतइत्यतआह ।

॥ अध्यायपादसंगतिस्त्विति ॥ पंचाधिकरण्याः अध्यायपादप्रतिपाद्यसमन्वयतद्विशेषाप्रतिपादकत्वेनतदुभयांत र्भावासंभवादितिभावः । चतुर्थसूत्रेसमन्वयादितिसाक्षात्समन्वयोभिहितः । तमेवसमन्वयंप्रकटयतीत्यानंदमयनयभा ष्येअध्यायशेषस्यसमन्वयप्रपंचकत्वमुक्तं सुधायांचसमन्वयसूत्रेणाध्यायशेषस्यप्रपंच्यप्रपंचकभावसंगतिरित्युक्तं तथेक्ष तिनयेतदभावेकुतोन्वयइत्यनुव्याख्यानोक्तरीत्यासमन्वयसाधारणहेतुवाच्यत्वसमर्थनंक्रियतेअतः समन्वयेक्षतिनययो रपिअध्यायसंगतत्वेनकथमानंदमयाधिकरणमारभ्यैवेत्युक्तमितिचेत्। उच्यते। आनंदमयनयमारभ्यसंगतिद्वयं ततोर्वाक्‍ समन्वयेक्षतिनययोः पादमात्रेणसंगत्यभावः । अन्येषुत्रिषुचाध्यायेनापिसंगत्योरभावः पंचाधिकरणीसाधारणः। एत त्सूचनार्थमेवाध्यायपादसंगतीति द्विवचनेप्रयोक्तव्येसंगतिरितिसमुदायैकवचनंप्रयुक्तं पंचाधिकरण्याः अध्यायपादानंत र्भावेतदादौनिवेशःकथमित्यतआह ॥ ततइति ॥ आद्यसूत्रेजिज्ञास्यतयोक्तब्रह्मणोद्वितीयेलक्षणमभिधायतृतीयेतस्याति व्याप्तिनिरासायशास्त्रंप्रमाणीकृत्यचतुर्थेशास्त्रस्यान्यपरत्वनिरासायसर्वशब्दसमन्वयमभिधायसंशब्दवाच्यत्वे पंचमेसमर्थि तेतदनंतरमेवसमन्वयेआकांक्षोदयात्पंचाधिकरण्याउपोद्घातरूपत्वेनसमन्वयाध्यायस्यतदादिनामपादस्यचादौनिवेशो युक्तइत्यर्थः॥ नाधिकरणश्रुतिसंगतीति ॥ पूर्वनयेनोत्तरनयस्यसंगतिरधिकरणसंगतिः। पूर्वनयस्थविषयवाक्येनोत्त रनयस्थविषयवाक्यस्यसंगतिः श्रुतिसंगतिः। तदुभयमुक्तरीत्यानास्तीत्यर्थः। विषयोविशयश्चैवपूर्वपक्षस्तथोत्तरः। प्रयोज नंचपंचैतेप्रांचोधिकरणंविदुरित्युक्तेरधिकरणशरीरभूतविषयादिपंचकंक्रमेणदर्शयति ॥ प्रारिप्सितेत्यादिना ॥ शास्त्र स्यैवानारब्धत्वात्कुत्रप्रवर्तनीयमित्यतउक्तं॥ प्रारिप्सिततयाचित्तसंगतेति॥ विषयःविचारविषयीभूतःसंशयधर्मी। ॥ उभयविधेति॥ अग्निहोत्रनिषिद्धहिंसयोःकर्तव्यत्वाकर्तव्यत्वाभ्यांसहदृष्टव्यापारत्वाख्यसाधारणधर्मस्याजिज्ञासायां

दर्शनंसंशयकारणमित्यर्थः ॥ **अधिकारीति**॥ एतेषांप्रत्येकंहेतुत्वं चंद्रिकातोऽवगंतव्यं। ननुविषयस्यादौनिराकरणात् तदादित्वेनानिर्देशःकार्यः।नचसूत्रेअथशब्देनादावधिकारिणःसूचितत्वात्तदादित्वेनानिर्देशइतिवाच्यं।तर्हितस्यैवादौनि-रासप्रसंगात्। अतःशब्दसूचितप्रयोजनस्याद्वितीयतयाब्रह्मशब्दसूचितविषयस्यतृतीयतयानिर्देशप्रसंगश्चेतिचेत्। उच्यते। सौत्रक्रमानुसारेणादावधिकारिनिर्देशेपितन्निरासेविषयप्रयोजननिरासयोः हेतुत्वेनतयोः निर्देशवैपरीत्येननिराकरणं युक्तमिति॥ **नतावदिति**॥प्रयोजनादिचनिराकरिष्यामीत्याशयेनतावच्छब्दः॥ **असंदिग्धत्वादिति**॥संदिग्धस्यैव विचार्यत्वादितिभावः । कुतोऽसंदिग्धत्वमितिचेत् । अत्रप्रष्टव्यं । ब्रम्हकिंजीवाभिन्नंकिंचिदस्त्युतजीवएव नाद्य इत्याह ॥ **प्रमाणाभावेनेति** ॥ प्रत्यक्षानुमानयोस्तत्रासामर्थ्येनकर्मकांडस्यकर्मपरत्वेनवेदांतस्यजीवपरत्वेननजी-वातिरिक्तेब्रम्हणिमानामितिभावः । द्वितीयेत्वाह ॥ **जीवस्येति** ॥ ततःकिमित्यतआह ॥ **नहीति** ॥ संदिग्धे संदेहवान्भवति । निश्चयस्यसंशयविरोधित्वादितिभावः ॥ **अनुभवादिति** ॥ अस्यानुभवस्यात्मस्वरूपत्वेनतत्प्र काशितस्यस्वप्रकाशितत्वादितिभावः । नायमनुभवःआत्मस्वरूपः किंतुतदतिरिक्तमनोजन्यएव । अतःआत्मनोऽन्य प्रकाशितत्वेननस्वप्रकाशत्वमितितार्किकमतमपाकरोति ॥ **नचेति** ॥ **तस्यापीति** ॥ अज्ञायमानत्वपक्षेदूषणस्य वक्ष्यमाणत्वेनमानसानुभवस्यकेनचिदनुभवेनज्ञायमानत्वंवाच्यं । एवंतस्यापीत्यनवस्थेत्यर्थः ॥ **कस्यचिदिति** ॥ तथाचतद्ज्ञानायनुभवांतरानन्वेषणान्नानवस्थेतिभावः। तत्स्वप्रकाशत्वंलाघवादितिभावः। ननुयदाऽनुभवंज्ञास्यामीति जिज्ञासातदैवतद्ज्ञानायानुभवांतरान्वेषणं जिज्ञासाचसंदेहदशायामेवतथाचयदाकोटिस्मरणादिविरहेणसंदेहानुदयस्त-दातदधीनजिज्ञासायाअप्यभावेननानुभवांतरान्वेषणं अतोनानवस्थेत्याशंक्यनिराकरोति॥ **जिज्ञासायामेवेति**॥

॥ अनुभवाविरोधादिति ॥ सुखंज्ञास्यामीतिजिज्ञासाभावेपियथासुखमनुभूयतेतथाघटानुभवानंतरमनुभवंज्ञास्यामीतिजिज्ञासाभावेपिघटज्ञानवानहमित्यनुभवसद्भावेनजिज्ञासायामेवानुभवस्यज्ञायमानत्वांगीकारेज्ञानस्य जिज्ञासितग्राह्यत्वानुभवविरोधइत्यर्थः । ननुमानसानुभवोनज्ञायतएवातोनानवस्थेत्यतआह ॥ नहीति ॥ केनाचित्प्रमाणेनज्ञेयस्यैवसत्वत्वेनसर्वथाऽज्ञेयत्वे असत्वस्यापरिहार्यत्वादितिभावः । नब्रूमोवयमात्मनोमानसानुभववेद्यत्वंयेनानवस्थाकिंतु स्वप्रकाशसंविदाश्रयतयाऽत्माभासतइतिप्राभाकरशंकामपाकरोति ॥ नचेति ॥ सौषुप्तिकानुभवेति ॥ सुषुप्तौजायमानात्मानुभवेत्यर्थः । इष्टापत्तिपरिहारायोक्तं ॥ औत्तरिकानुस्मृतिसिद्धेति ॥ सुषुप्त्युत्तरकालेखल्वेतावंतंकालंसुखमहमस्वाप्समितिस्मृतिर्भवतिसाचानुभवपूर्वकत्वात् सुप्तावात्मानुभवंगमयतीतिभावः । ननूक्तज्ञानस्यात्मादिविषयकत्वेनसाक्षिरूपत्वात्कथंस्मृतित्वंमनोजन्यज्ञानस्यैवस्मृतित्वादितिचेत् सत्यं अतीतकालेअनुभूतार्थविषयकत्वसारूप्येणसाक्षिज्ञानेस्मृतिशब्दव्यवहारोपपत्तिः । आजन्ममरणंस्मृत्वामुक्ताहर्षमवाप्नुयुरितिछांदोग्यभाष्योदाहृतस्मृतौ मुक्तस्वरूपज्ञानेस्मृतिशब्दप्रयोगात् । कुतइत्यतआह ॥ नहीति ॥ गृहीतएवप्रमाणोभवति गृहीतावाक्गृहीतंचक्षुरिति श्रुत्यासर्वेंद्रियोपरमावगमेनातिरिक्तसंविदभावान्नतदाश्रयतयात्मभानमितिभावः । आत्मातिरिक्तेत्युक्तात्मस्वरूपसंविदेवसौषुप्तिकानुभवः समाधेयइतिसूचयति । किंचात्मानसंविदाश्रयतयाभासतेसंविद्रूपत्वात्संविद्वदितिदूषणांतरंप्राभाकरमतेचाह ॥ संविदात्मकत्वादिति ॥ नन्वात्मनोविषयत्वंनिराकुर्वतायथाकथंचिदात्मासिद्धिर्वक्तव्या । साचस्वप्रकाशत्वइवमानसानुभववेद्यत्वेस्वप्रकाशसंविदाश्रयतयाभानेवासमाना । अतोत्रतदुभयनिराकरणंव्यर्थमितिचेत् सत्यं । जीवव्यतिरिक्तेश्वराभावात्तस्यचस्वप्रकाशत्वेनानित्यासिद्धत्वादितिन्यायाविवरणोक्तस्वप्रकाशत्वसमर्थनार्थमेव

मानसानुभववेद्यत्वादितिमतनिराकरणंकृतं ॥ **नचेति** ॥ प्रयोजनंचेतिसंबंधः ॥ **ज्ञायमानेपीति** ॥ जीवाख्ये ब्रह्मण्यहमितिज्ञायमानेप्यैहिकामुष्मिकफलानुपलंभादित्यर्थः ॥ **विषयेति** ॥ योहियत्प्रयोजनमुद्दिश्ययंविषयंजिज्ञासतेतस्यैवतत्राधिकारित्वादितिभावः । अतएव संबंधिभूतात्रितयाभावादेव । अतःविषयाद्यभावात् । पूर्वपक्षेफलमाह ॥ **नैतदिति** ॥ आद्यइतिशब्दोहेतौ । द्वितीयःपूर्वपक्षसमाप्तौ ॥ ॐ **अथातोब्रम्हजिज्ञासा** ॐ ॥ अत्रोंकारोबुध्याविविक्तेनब्रम्हेत्यनेनान्वीयते । तथाच । अथाध्ययनशमदमादिरूपाधिकारसंपत्यनंतरं । अतः अकारशब्दवाच्यात् प्रसंनात् ब्रम्हतःज्ञानजन्यप्रसादजमोक्षाख्यफलसत्वात् । ओंब्रम्हणोगुणपूर्णस्याविष्णोः जिज्ञासाश्रवणमनननिदध्यासनरूपाकर्तव्येत्यर्थः । ओंब्रम्हशब्दयोरुभयोरपियोगेनगुणपूर्तिवाचित्वेपिएकस्यरूढित्वमाश्रित्यविशेष्यवाचित्वेनान्वयः । आत्मेतितूपगछंतीत्यत्रेवद्रष्टव्यः । तत्रात्मशब्दस्यावृत्तिमंगीकृत्यैकस्यस्वामित्वार्थकत्वमपरस्याविष्णुरूपाविशेष्यवाचित्वंचांगीकृत्यान्वयस्यवक्ष्यमाणत्वात् । ब्रह्मशब्दमात्राद्विषयसिद्धावपिब्रह्मणिवेदरूपप्रमाणसूचनायतव्द्याख्येयोंकारग्रहणं ॥ **अवश्यमिति** ॥ तस्याविघ्नपरिसमाप्त्यादिफलकत्वादितिभावः । नचसूत्रकारस्याविघ्नशून्यत्वात् तत्करणमनर्थकमितिवाच्यं । शिष्यशिक्षार्थत्वात् । अन्यथाभारतादौनकुर्यात् ॥ **तत्परतयेति** ॥ मंगलफलतयेत्यर्थः । नतुतदभिधायकतयेति । अथशब्दस्यश्रुतितोमांगलिकत्वेनमंगलाभिधायकत्वाभावात् । अथशब्दःश्रुत्यामंगलप्रयोजनकइतिसुधाग्रंथाच्च । मंगलस्यवाक्यार्थानन्वयाच्च । तस्याभिधेयमाहेत्युत्तरग्रंथास्वारस्याच्च । अतएवतत्फलतयेति क्वचित्पाठः । ततश्चमंगलार्थइत्यर्थशब्दःप्रयोजनवचनइतिभावः ॥ **योग्यतयेति** ॥ आनंतर्यप्रतिपत्तावबाधित्वसामर्थ्येनेत्यर्थः । मंगलोक्त्यादेरितिमंगलप्रयोजनकशब्दोत्रमंगलत्वेनाविवक्षितः । उक्तिरुच्चारणं । क्वचिन्मंगलाचारादे

रितिपाठः । आदिपदेनाधिकारानंतर्यादिप्रतिपादनं ॥ **शब्दांतरेणेति** ॥ तत्प्रयोगेणेत्यर्थः । अत्रेत्यनुवादः । प्रथमप्रयोज्यत्वइतिव्याख्या । तदितिपरामर्शघटनायनियामकंप्रस्तावयति ॥ **नियामकेनेति** ॥ याद्दच्छकंईश्वरेच्छया प्राप्तं । यद्दच्छाहितदिच्छास्यादित्युक्तेः । अनियतमितियावत् । अतोननियामकापेक्षेतिभावः ॥ **यतइति** ॥ निखिलानीत्यस्यैवविवरणंनियत्यैवेतिभावः । अथातोब्रह्मजिज्ञासा । अथातोधर्मजिज्ञासा । अथातोदैवीमीमांसा । अथातो दर्शपूर्णमासावित्यादिसंभावितनिखिलानीतिबोध्यं । तेनपाणिनीय सूत्रादौनव्यभिचारःशंक्यः । किंनियामकमित्येतद्विवरणपरतयोत्तरग्रंथंयोजयति ॥ **नियामकंचेत्यादिना** ॥ **अवश्यवक्तव्यार्थत्वमिति** ॥ अर्थस्यादौवक्तव्ये तत्प्रतिपादकशब्दस्यापिप्रथमप्रयोक्तव्यत्वमितिभावः । स्वरूपतः अर्थतउत्तमत्वमनपेक्ष्य । अर्थतः अर्थाधिक्यमनपेक्ष्य ॥ **आक्षिपतीति** ॥ तथाचनकथमपीतियोज्यमितिभावः । अत्रावश्यवक्तव्यार्थत्वाधिक्ययोस्तदभावयोश्चलोकेशब्दांतरेषुदर्शनादथशब्दादौतत्संदेहेनप्रश्नसंभवात्प्रथमतृतीययोःपृच्छतीत्युक्तं । स्वरूपाधिक्यस्यशब्दांतरेष्वदर्शनादथशब्दादौतदाक्षेपइतिद्वितीयेआक्षिपतीत्युक्तं । अतएवतत्रशब्दांतरस्येत्यादिनामूलाभिप्रेतोहेतुःप्रदर्शितः । हेत्वर्थ इतिभाष्येहेतुत्वार्थकइत्यर्थः । अतःप्रसादात्ब्रम्हप्रसादादित्यर्थः । कथंलभ्यतइत्यतोऽतःशब्दार्थमाह ॥ **अकारशब्दवाच्याद्विष्णोरिति** ॥ पंचम्यर्थेतासिरितिभावः । पर्यवसितमाह ॥ **तत्प्रसादादिति** ॥ प्रसंनादितियोग्यतया लाभादितिभावः । जिज्ञासादिकार्यमितिशेषोक्तिः । अकारशब्दवाच्यत्वंविष्णोःकुतइत्यतआह ॥ **अइतीति** ॥ ब्रम्हपदोदितश्रुतिसूचनाभावेविष्णोरित्येवब्रूयादितिभावः ॥ **सहीति** ॥ जिज्ञासायाअपिमनोवृत्तिविशेषत्वात्तदर्थं तत्प्रसादादिरावश्यकइतिभावः । प्रथमंनिःसृतत्वमेवप्राथम्येहेतुत्वेनोच्यतेनतुस्वरूपतउत्तमत्वमतआह ॥ **अतःस्वरू-**

पोत्तमाविति ॥ ननुओंकाराथशब्दौस्वरूपोत्तमौहरेःप्रथमंनिसृतत्वादित्यनुमानेयः शब्दोहरेः प्रथमंनिःसरति-
सउत्तमइति व्याप्तौदृष्टांतोनेत्यतआह ॥ यत्स्वजाताविति ॥ मधुकैटभादेश्चतुर्मुखादप्याधिक्यनिरासायस्वजाता
विति । इतिन्यायःसामान्यन्यायः । यथादेवेषुचतुर्मुखइतिदृष्टांतसंभवान्नतुविशिष्येतिभावः । शब्दांतरस्यस्वरूपत-
उत्तमत्वादर्शनात्कथमनयोस्तदितिशंकानिरासायसिमृक्षोरित्यादिभाष्येओंकारस्यस्वरूपोत्तमस्यग्रहणमितिध्येयं । अ-
तःशब्दस्यतृतीयत्वेनोदाहरणेस्वरूपोत्तमत्वंकथमित्यतआह ॥ अतश्चेति ॥ अतःशब्दार्थइत्यर्थः ॥ प्राथमिकइति ॥
अनेनप्राथमिकावित्यस्यवचनव्यत्यासेनानुषंगइत्युक्तंभवति ॥ तृतीयतयोदाहृतइति ॥ अनेनतृतीयोदाहृत
शब्दयोरावृत्तिरित्युक्तंभवति ॥ इत्यतइति ॥ अनेनतंत्रन्यायेनातःशब्दस्यहेतुपरत्वंचास्तीत्युक्तंभवति । परस्यब्र-
ह्मणइतिद्वितीयव्याख्यानानुसारेणाह ॥ तस्याविष्णोरिति ॥ हेत्वर्थेसमुदीरितइतिप्रथमव्याख्यानानुसारेणाह ।
॥ तस्याजिज्ञासादेरिति ॥ मनोवृत्तिशब्देनजिज्ञासायाअपिप्रकृतत्वादितिभावः । व्यत्यासश्चपरस्येत्यादिनोक्त-
स्यसमीपस्थत्वेनतत्परामर्शस्वारस्यसूचनायकृतः ॥ अनुवादइति ॥ प्रागुक्तमेवहेत्वर्थकत्वं अधिकविधानायानूद्यते
नपुनरत्रविधीयतेतेनहेत्वर्थेसमुदीरितइत्यादिनानपौनरुक्त्यमितिभावः । स्वरूपैक्यानुपपत्तेराह ॥ सर्ववागर्थेति ॥
सर्वासांवाचामर्थभूतंयद्गुणपूर्णत्वंतदभिधायकतयेत्यर्थः। अकारोवैसर्वावागित्यैतरेयवाक्यव्याख्यानावसरेतद्भाष्येअन्ये
पिशब्दाःसर्वेपिह्यकारार्थाभिधायिनः । तस्मादकारएवायंसर्ववागात्मकःश्रुतः । तस्मात्सर्वगुणान्विष्णोरकारोवक्तियत्प्र
भोरित्युक्तत्वादर्थैक्याभिप्रायेणैक्यव्यपदेशः। हेतुगर्भंचैतदितिभावः॥ परब्रह्माभिधायकइति॥ गुणपूर्णत्वस्यैवपरब्र-
ह्मशब्दार्थत्वादितिभावः। प्राणशब्दस्यवायौप्रसिध्यनुसारेणाह ॥ प्राणदैवत्याविति ॥ तस्याविष्णुपरत्वमभ्युपेत्याह

॥ भगवद्वाचकाविति ॥ भाष्येअतसातत्यगमनेष्ठागतिनिवृत्ताविति स्मरणात्। क्रमेणव्याप्तिस्थितिविधायकावित्यर्थः।
व्याख्यानद्वयेपिकथंप्राणात्मकावित्यैक्यव्यपदेशइत्यतः क्रमेणोभयत्रप्रयोगौप्रदर्शयति ॥ अभिमानीति ॥ विज्ञा
नतत्वंमहतःसमुत्पन्नंचतुर्मुखादित्यादौमहत्तत्वाभिमानिनश्चतुर्मुखादितिवक्तव्येमहतश्चतुर्मुखादितिप्रयोगोयथातथेत्यर्थः ।
॥ अयंवैलोकइति ॥ परमैश्वर्यादिसंपन्नमहार्थप्रतिपादकत्वेनमहच्छब्दितेंद्रादिनामास्यामस्तीतिमहानाम्नीसंज्ञकाप्रथ-
मा विदामघवन्नित्यादिकाऋगयंलोकःभूलोकस्थविष्णुवाचकेत्यर्थः । प्रथमायामहानाम्नीतद्वाच्यःपार्थिवोहरिरितिकर्म
निर्णयोक्तेः॥ उपसंव्हारइति ॥ अतस्तस्मात्प्राथमिकावित्यादिनानपुनरुक्तिरितिभावः। ब्रह्मजिज्ञासायामधिका-
रइतिसंबंधः । कःकिंलक्षणकः । मंदमध्येत्यादिनाधिकारिनिरूपणात्कथमधिकारश्चोक्तइत्युक्तमतआह ॥ अधि-
कारीति ॥ भाष्येजातिकृतः मनुष्योत्तमत्वादिधर्मकृतः । नन्वत्रत्रिविधाइत्युक्त्याकतिविधाइतिप्रश्नपरिहारेपिलक्ष-
णानुक्तेस्तत्प्रश्नोनपरिहृतइत्यतआह ॥ अनेनेति ॥ मोक्षयोग्येतराद्व्यावृत्तिमनुष्योत्तमत्वादिविशेषधर्मकथनेनेत्यर्थः
॥ अस्यचेति ॥ सच्छूद्रादौचेत्यन्वयः । व्याप्तिर्व्यापनं । यस्यव्यापनंलक्ष्यमात्रेऽस्तितत्तद्धिलक्षणं । योधर्मोलक्षे
व्याप्त्यावर्ततेनवर्ततेचान्यत्रसधर्मोलक्षणमित्युक्तेः । अस्यमोक्षयोग्यत्वस्यव्यापनंलक्ष्यइवजिज्ञासानाधिकारित्वेनाल-
क्ष्येसच्छूद्रादौचास्ति । अतोनेदंलक्षणं । ननुसच्छूद्रादेरपिविदुरधर्मव्याधजरितर्यादेर्वैदिकब्रह्मविद्याधिकारदृष्टेचाल-
क्ष्यत्वात्तव्द्यापनमिष्टमेवेत्यतउक्तं ॥ प्रायिकत्वादिति ॥ विदुरादिव्यतिरिक्तेष्वप्यनुत्पन्नज्ञानेषुबाहुल्येनवर्तमान
त्वादित्यर्थः । ननुतेषामपिदेहांतरेवैदिकब्रह्मविद्याधिकारोवर्ततएवेतिलक्ष्यत्वात्तव्द्यापनमपीष्टमित्यतउक्तं ॥ अरू-
च्येति ॥ तेषांदेहांतरेविद्यमानोऽधिकारोनेदानींप्रवृत्त्युपयुक्तः । प्रवृत्त्युपयुक्तएवाधिकारोत्रविचार्यतइत्युच्यतइत्यर्थः।

तर्हिअतिव्याप्तस्यकथंसामान्यलक्षणत्वेनस्वीकारः । तथात्वेशृंगित्वस्यापितथात्वापत्तेरित्यतउक्तं ॥ **प्रायिकत्वा-**
**दिति** ॥ लक्ष्यतावच्छेदकसामानाधिकरण्यस्यबाहुलिकत्वादित्यर्थः । अलक्ष्यतावच्छेदकसामानाधिकरण्यापेक्षयावै
दिकब्रम्हविद्याधिकारित्वरूपलक्ष्यतावच्छेदकसामानाधिकरण्यस्यबाहुलिकत्वेनदोषस्याल्पतयास्यसामान्यलक्षणत्वेन-
स्वीकारः । शृंगित्वेतुनैवमितिभावः ॥ **अध्ययनलब्धेति** ॥ अवैष्णवस्यवेदेपित्द्यधिकारोनविद्यतइत्युक्तेरिति-
भावः । अत्राध्ययनस्यान्यायत्वं । अभक्तैरनधिकारिभिर्भक्तैरधिकारिभिरपिपुस्तकपाठादिनाऽयोग्योपदेशेनवाकृ
तत्वंद्रष्टव्यं । विशेषलक्षणस्यसामान्यलक्षणपूर्वकत्वादाह ॥ **तथाचेति** ॥ अत्रमोक्षायोग्यब्राम्हणसच्छूद्रादिव्या
वृत्यर्थंक्रमेणविशेषणद्वयं ननुभक्तियुक्तपरेविष्णौतथाध्ययनवानपि। अधमोयमितिज्ञेयएतत्पूर्वशमादिमान्। मध्यःस्याद्ब्र
ह्मणोविष्णोर्वशेब्रह्मादिपूर्वकः। विज्ञायभक्तिसंपन्नोविष्णवर्थंमोक्षमर्थयन्। नमोक्षार्थंचाविष्णुःस्यादितिज्ञानीसउत्तमइति
विशेषप्रमाणेनमध्यमादावध्ययनादेरप्युक्तेः कथंशमादिसंयुक्तत्वमात्रंतल्लक्षणं । किंचतावन्मात्रस्यमध्यमादिलक्षणत्वे-
उक्तस्यसामान्यलक्षणत्वानुपपत्तिरधममात्रवृत्तेरित्यतआह ॥ **शमादिसंयुक्तइत्यादाविति** ॥ शमादिसंयुक्तइ-
त्यत्रभक्तिपूर्वकाध्ययनसंग्रहः । जातवैराग्याविष्णुपादैकसंश्रयइत्यत्रभक्तिपूर्वकाध्ययनशमादिसंग्रहइत्यर्थः । विशेष
प्रमाणमुपलक्षणमितिभावेनाह ॥ **पूर्वत्रचेति** ॥ भक्तिमानित्यादौशमादिसंयुक्तत्वविष्णुपादैकसंश्रयत्वादेरनुकर्षः ।
शमादिसंयुक्तइत्यत्रविष्णुपादैकसंश्रयत्वादेरनुकर्षइत्यर्थः । एवंसर्वस्यसर्वत्रसंबधसांकर्यं । परस्परमव्यावृत्तिः । अति
व्याप्तिरितियावत् ॥ **उत्तरेति** ॥ पूर्वस्मिन्नितिशेषः । उत्तरस्मिन्मध्यमेउत्तमेवोक्तानामध्ययनवत्वादिगुणसमुदाय
नांत्रयाणांपूर्वस्मिन्नधमेमध्यमेवाअप्राचुर्येणेत्यर्थः । ततश्चप्रचुरतमाध्ययनादिगुणवत्वमुत्तमत्वंप्रचुरतराध्ययनादिमत्व

मध्यमत्वंप्रचुराध्ययनादिमत्वमधमत्वमितिनसांकर्यमितिभावः । अथवाउत्तरंचोक्तंचतयोरप्राचुर्येणेत्यर्थः । संगृहि-
तानामनुत्कृष्टानांचाप्राचुर्यंकंठतोऽभिहितानांचप्राचुर्यमितियावत् । तथाचाधमनिष्ठगुणसमुदायत्रयमध्येशमादिवि-
ष्णुपादैकसंश्रयत्वयोरप्राचुर्यमध्ययनादेःप्राचुर्यंमध्यमनिष्ठगुणसमुदायत्रयमध्येअध्ययनादि विष्णुपादैकसंश्रयत्वयोरप्रा-
चुर्यं शमादेश्चप्राचुर्यं । उत्तमनिष्ठतयोक्तगुणसमुदायत्रयमध्येअध्ययनादि शमाद्योरप्राचुर्यं विष्णुपादैकसंश्रयत्वादेः
प्राचुर्यमितिनसांकर्यमितिभावः । भाष्ये ॥ **सन्न्यस्तेति** ॥ विष्णवर्पितेत्यर्थः । ब्रह्मादिशब्देनचेतनविवक्षा-
यामाह ॥ **असर्वोत्तमत्वमिति** ॥ तल्लोकादिजडविवक्षायामाह ॥ **तत्पदादीनामिति** ॥ अत्रभागवततंत्रे
॥ **तृतीयेवक्ष्यतइति** ॥ तृतीयाध्यायेचतुर्थपादेद्वितीयाधिकरणे किंसर्वेषांज्ञानाधिकारः उतकेषांचिदेवेतिसंदेहेफ
लार्थित्वसाम्यात्सर्वेषामस्तीतिपूर्वपक्षेयथानवकोटिदेवानांदेवत्वसाम्येपितन्मध्येशतस्यैवसोमपानाधिकारःतथापुरुषा
र्थित्वसाम्येपिनसर्वेषांज्ञानाधिकारः । किंत्वध्ययनमात्रवतः । यथाशक्त्यखिलवेदाध्ययनवतएवेतिसिद्धांतितं ।
अनेनाध्ययनस्यब्रह्मविद्याधिकारत्वंगम्यते । तत्रैवतृतीयाधिकरणेकिंसर्वेषामेकप्रकारेणज्ञानाधिकारःउततारतम्येनेति
संदेहेतारतम्यकल्पनस्यव्यर्थत्वादविशेषेणैवसर्वेषामधिकारइतिप्राप्ते नाविशेषात् । अविशेषेणनज्ञानाधिकारःतथात
ज्ञानेपिसाम्यापत्तेरितिसिद्धांतितं । अनेनब्रह्मविद्याधिकारत्रैविध्यंगम्यतइतिभावः । द्वंद्वसहिष्णुःसुखदुःखाभ्यांमुच्चत्व
त्वनीचत्वहीनः ॥ **स्वस्थितमिति** ॥ आत्मनीत्यनंतरंस्थितमितिशेषइतिभावः । पश्येदितितेषामपरोक्षज्ञानसाधनत्व
मुच्यतेनश्रवणादादिरूप जिज्ञासार्थत्वमित्यतउक्तं ॥ **विद्यादिति** ॥ पश्यार्थैश्चानालोचनइत्यत्रपश्यार्थैरित्यत्रज्ञाना-
र्थैरितिव्याख्यानेनज्ञानमात्रेपिप्रयोगादितिभावः । तादर्थ्यं । ज्ञानार्थत्वं ॥ **उपनीतइति** ॥ उपनयनवानध्ययनसं

पादयोरित्यत्रयथोपनयनस्याध्ययनार्थत्वंतथेत्यर्थः ॥ **अंतःप्रकाशाइति** ॥ शरीरांतः स्थितात्मज्ञानवंतइत्यर्थः । तेषांमध्यमत्वंचमध्यमाऋषिगंधर्वाइतिप्रागेवोक्तमितिभावः । निर्विण्णः विरक्तः अकृतशब्दार्थोनित्यपुमर्थइति । कृते नेत्यस्यकर्मादिनेति । तदित्यस्यतस्मादिति ॥ **देवादीनामिति** ॥ सामान्यैर्यैस्तुविज्ञेया विशेषाममगोचराइति-पूर्वार्धः । तेषामुत्तमत्वंदेवास्तत्रोत्तमामताइतिप्रागेवोक्तमितिभावः । वृणुते स्वीकरोति । यथाभक्त्याहरिस्तुष्टइतिममा णानुसारेणतेनलभ्यइत्यस्याभिप्रायमाह ॥ **तस्यप्रसन्नइति** ॥ प्रकाशयति । श्रवणादिकंविषयीकरोति । भक्ति वाचकपदाभावादाह ॥ **अत्रेति** ॥ अभक्तस्यस्वीकाराभावादितिभावः । हरिभक्तिमात्रस्यप्रयोजकत्वेदेवतागुरुद्वेषि-णस्तत्रसाम्येनभक्तस्यवाब्रह्मविद्याधिकारप्रसंगनिरासायोदात्दतश्रुत्यर्थंव्यंजयन्नेवतामवतारयति ॥ **साचेति** ॥ अनं-नयस्यदेवेहरौपरासर्वोत्कृष्टादेवेदेवतासमूहेयथायोग्यतानुसारेणगुरौचगुरुसमुदायेतथायोग्यतानुसारेणैवभक्तिर्वर्ततेतस्य महात्मनः पूर्वंकथिताएतेअर्थाःप्रकाशंतइतिश्रुतिर्योजिताभवति । भाष्येव्योमसंहितायांचेत्यस्याधिकारश्चोक्तइतिपूर्वेण संबंधः ॥ **वर्णबाह्याइति** ॥ तेनसन्म्लेंछादीनांसंग्रहइतिभावः ॥ **अधिकारिकथनमिति** ॥ तेनायोग्या नामपिनामज्ञानेनमोक्षइतिनिरस्तमितिभावः । भाष्येब्राम्हणान्बंधून्व्यपदिशति । **स्वयंतुनब्राम्हणोयःसःब्रम्हबंधुः** तंत्रेतिनश्रुत्यर्थविचारभागेअधिकारइत्युक्तं ॥ **एकदेशइति** ॥ अत्रापिनस्वातंत्रेणेत्युक्तं ॥ **परोक्तइति** ॥ परंप्र-त्युक्तइत्यर्थः । तत्रापिविशेषोस्तीत्युक्तं ॥ **नतुग्रंथपुरःसरइति** ॥ अस्यवाक्यस्यायमर्थइति । ग्रंथार्थपूर्वकइत्यर्थः । वेदोक्तेधिकारतेतिसंबंधः । पराधमपराणदशचीवाक्यमिदं ॥ **उक्तस्यापवादमाहेति** ॥ स्त्रीणांवेदाधिकारोना-स्तीतिसामान्येनोक्तस्यसंकोचरूपबाधकमाहेत्यर्थः । भाष्ये यमी यमभार्या । देव्योमुनिस्त्रियश्चैवनरादिषुलजाअपि ।

उत्तमाइतिविज्ञेयाइतिभारततात्पर्यनिर्णयानुसारेणाह ॥ **मुनिस्त्रियोनरादिकुलजाश्चेति** ॥ मनुष्यादिकुलोत्पन्न शच्याद्याइत्यर्थः । संक्षेपविस्तराभ्यांअधिकारानांतर्यादिइतिसंक्षेपः । अधिकारश्चोक्तइत्यादिनाविस्तरः । मोक्षस्य परारीत्यैकविंशतिदुःखध्वंसादिरूपत्वेअनपेक्षितत्वमेवस्यादित्यतोमोक्षस्वरूपंनिरूपयन्नाह ॥ **सुखमेवेति** ॥ मनाक् ईषत् भाष्ये अत्यर्थप्रसादमित्यनुवादात् पूर्वत्रापितथाज्ञेयमित्याह । नारायणात्य ति । अत्यंतेत्यर्थः । अत्यर्थप्रसादस्य चेति । अनेनात्यर्थप्रसादश्चेतिसंबंधः सूचितः । अत्यर्थप्रसादस्यज्ञानसाध्यत्वेतदेवसंपाद्यंकिंजिज्ञासयेत्यतोऽपेक्षितंपूर यति ॥ **अपरोक्षज्ञानस्येति** ॥ अतएवाग्रे अपरोक्षज्ञानस्यजिज्ञासासाध्यत्वे आत्मावाअरइतिश्रुत्युदाहरणमितिभावः भाष्यस्थअतःशब्दार्थंसूचयन्नाह ॥ **अत्यर्थेति** ॥ जिज्ञासाश्रवणमननध्यानरूपोपासना । ननुविषयाद्यभावेनजिज्ञा सायाअकर्तव्यत्वात्कथंकर्तव्यत्वोक्तिरित्यतः सूत्रादिसूचितयुक्त्यापूर्वपक्षंप्रतिक्षिपति ॥ **यदुक्तमिति** ॥ प्रयोग- णसूत्रे कुत्रेत्यतआह ॥ **तद्धिजिज्ञासस्वेति** ॥ आद्यतच्छब्दस्ययतोवाइमानीत्यादियच्छब्देनान्वयः । किंनामकंत दित्यतउक्तं ॥ **तद्ब्रह्मेति** ॥ ततःकिमित्यतआह ॥ **ब्रह्मशब्दश्चेति** ॥ **अथेति** ॥ हरिःकस्मान्निमित्तात् ब्रह्म- शब्देनोच्यतइति प्रश्नः । हियस्मादस्मिन्हरौगुणाः बृहंतःपूर्णाः तस्मादितिपरिहारः । अप्रामाणिकशंकानिरासाया नुभवादित्युक्तं । तथाचविरुद्धधर्माधिकरणत्वान्नाभेदइतिभावः । अध्यासः आरोपः । उपलक्षणमेतत् । जीवनिष्ठा ल्पगुणानामपिमिथ्यात्वंबोध्यं । तथाचविरुद्धधर्मत्यागेनचिन्मात्रैक्यंयुक्तमित्याशयः ॥ **परमार्थतइति** ॥ ब्रह्मश- ब्दार्थगुणानांमिथ्यात्वेब्रह्मत्वस्यपारमार्थिकत्वायोगादितिभावः । ननुबृहवृद्धावित्यस्मान्मनिन्प्रत्ययेननिष्पन्नोब्रह्म शब्दः पूर्णत्वापरपर्यायापरिच्छिन्नत्वमात्रंप्रतिपादयति । अपरिच्छिन्नत्वरूपब्रह्मत्वंचदेशाद्यपरिच्छिन्नत्वेनापिसंभवति ।

अतोनविरुद्धधर्माधिकरणत्वेनभेदइतिशंकते ॥ **देशाद्यपरिछिन्नतेति** ॥ उक्तेति । गुणपूर्णत्वंब्रम्हत्वमित्यभि-
धायकार्थेत्यादिकेत्यर्थः । अभ्युपगमवादेनाह ॥ **देशादीति** ॥ **वक्ष्यमाणत्वादिति** ॥ उत्क्रांतिगत्यागतीनामित्य
त्रसोस्माच्छरीरादुत्क्रम्येत्यादुत्क्रांतिगमनादिर्लिंगैर्जीवाणुत्वस्यवक्ष्यमाणत्वादित्यर्थः । अतःब्रह्मणोगुणपूर्णत्वात् ।
आदिशब्देनसंबंधः सचविषयप्रयोजनयोः कार्यकारणभावादिरूपः ननुब्रह्मजिज्ञासायाः ज्ञानप्रसादद्वारामोक्षहेतु
त्वेयतोनारायणप्रसादमृतेनमोक्षइतिकुतः प्रागुक्तमित्यतआह ॥ **ब्रह्मपदेति** ॥ उभयोरप्युक्तरीत्यागुणपूर्त्यर्थत्वादि-
तिभावः । अत्रसूत्रे तथाचकर्तव्येतिपदमुत्सूत्रितमितिभावः ॥ **किन्नस्यादिति** ॥ एवमपिवाक्यपर्यवसानादिति
भावः । निरंकुशत्वात् । एवमेवनियमेतिनिर्बंधरहितत्वात् ॥ **यत्रेति** ॥ यत्रावांतरवाक्येयत्पदं विनार्थांतरघटना
भावस्तत्रतदेवपदमध्याहार्यं । यत्रावांतरवाक्येयत्पदंविनापिपदांतरेणार्थांतरघटनातत्रतदेवाध्याहार्यमिति नियमोनास्ति
तथायत्रमहावाक्येयदवांतरवाक्यंविनार्थांतरघटनाभावस्तत्रतदेवाध्याहार्यं यत्रमहावाक्येयदवांतरवाक्यंविनाप्यर्थांत
रघटनातत्रतदेवाध्याहार्यमिति नियमोनास्तीतिसतांनीतिर्निर्गलितोर्थः । नकर्तव्येत्यध्याहारेणार्थांतरघटनासंभवती
त्यतआह ॥**नकर्तव्येत्यादेरिति** ॥ अकरणस्यस्वतःसिद्धत्वेनतदर्थमधिकारादिकथनमनर्थकमितिभावः ।श्रुताविह-
अधिकारिवर्गेपरमात्मानमुक्तरीत्याजानन्मुक्तोभवति मोक्षायान्योमार्गोनविद्यतइतिज्ञानस्यैवमोक्षसाधनत्वमुच्यते ।
नप्रसादस्येत्यतआह ॥ **अत्रेति** ॥ **अनन्यथोपपत्येति** ॥ अनन्यथाप्रसादात्यागेनज्ञानस्यमोक्षहेतुत्वोपपत्येत्यर्थः
कुतइत्यतोज्ञानस्यैवमोक्षहेतुत्वेयस्यप्रसादादादितिश्रुत्यनुपपत्तेरितिचेद्व्याख्येयं । अर्थात् । अन्यथानुपपत्येत्यर्थः । श्रु तं ।
श्रुतौसाक्षादुक्तं । एषशब्दार्थः प्रसन्नससान्निति । इषुइच्छायामित्यस्माद्अर्श आदिभ्योचिकृतेगुणेचैषशब्दस्य निष्पत्तेः

प्रसादस्यापीछाविशेषत्वादितिभावः। एतेनात्रप्रसादवाचकपदाभावात् वरणंचप्रसादउच्यतइतिसुधोक्तरीत्यावृणुतइत्य-
नेनलाभेअर्थलभ्यत्वेनश्रुतंचेत्यनुपपन्नमितिनिरस्तं । एतेनैवयमेवैषतस्यैषइत्यनयोरन्यतरवैयर्थ्यमितिनिरस्तं । विवि-
क्षितार्थलाभायाह ॥ दर्शनार्थमिति ॥ श्रवणंशब्दजंज्ञानमुपपत्त्यानुचिंतनं । मतिर्निरंतरान्चितानिदध्यासनमु
च्यतइतिप्रमाणानुसारेणश्रवणादिशब्दार्थोबोध्यः । ननुश्रवणादित्रयाणांजिज्ञासारूपत्वेमननस्यैवतथात्वप्रतिपादकवि-
चारेपितत्प्रयोगादित्युत्तरग्रंथविरोधः । जिज्ञासानामयुक्त्यनुसंधानात्मकविचारापरपर्यायंमननमितिसुधाविरोधश्च ।
सुधायामेवश्रवणजंज्ञानंपूर्ववृत्तमितिश्रवणस्यजिज्ञासातः पूर्वभावोक्त्यनुपपत्तिश्च । नचश्रवणमादिर्यस्यमननस्यत-
च्छ्रवणादीत्यतद्गुणसंविज्ञानबहुव्रीहिणाश्रवणादिशब्देनमननमेवोच्यतइतिवाच्यं । तथात्वेतच्चश्रवणमनननिदध्यास-
नरूपाजिज्ञासासैवेत्युक्तमितिवक्ष्यमाणतृतीयाध्यायस्थवाक्यविरोधापत्तेरितिचेत् उच्यते । उत्तरग्रंथेअन्यनिषेधाभावे-
ननतद्विरोधः । न्यायनिबंधनात्मकशास्त्रारंभणीयत्वस्यन्यायानुसंधानात्मकमननकर्त्तव्यत्वोक्तिमात्रेणासिद्धेस्तस्यैवजि-
ज्ञासात्वंसुधायामुक्तं । अत्रतुप्रतिवाक्यमयमस्यवाक्यार्थइत्येवंरूपश्रवणजज्ञानाभावेप्रतिवाक्यमस्यवाक्यस्यायमर्थोनवे-
तिसंदेहस्यैवासंभवेनतन्निरासकन्यायव्युत्पादकशास्त्रारंभणीयत्वासिद्धेः श्रवणकर्तव्यत्वस्यध्यानस्याकर्तव्यत्वेतदंगमन-
नस्याप्यकर्तव्यत्वेनशास्त्रारंभणीयत्वासिद्धेः । निदध्यासनकर्तव्यत्वस्यशास्त्रारंभेपरंपरयाहेतुत्वमितितयोरपिजिज्ञासात्वं
भाष्योदाहृतश्रुत्यनुसारेणोक्तमितिनसुधाविरोधः । एकस्यजिज्ञासाशब्दस्यश्रवणाद्यनेकार्थत्वं द्वेवावब्रह्मणोरूपइत्या-
दावेकस्यरूपशब्दस्यस्वरूपप्रतिमापरत्वदर्शनादुपपन्नमिति । ननुधातोःकर्मणःसमानकर्तृकादिछायांवाइषिकर्मणो-
धातोरिषिणैककर्तृकात्सन्प्रत्ययोवास्यादिछायामितीछायामेवसन्प्रत्ययविधानात् ॰अनिछारूपश्रवणादेर्नसन्नंतजिज्ञा-

साशब्दवाच्यत्वमित्याशंक्यनिराकरोति ॥ **नचेति** ॥ असन्वाच्यतानसन्नंतजिज्ञासाशब्दवाच्यत्वाभावोनसन्नंत-
जिज्ञासाशब्दवाच्यत्वमस्त्येवेतियावत् ॥ **जिज्ञासितमिति** ॥ जिज्ञासितंसुसंपन्नमपितेमहदद्भुतमितिप्रथमस्कंधे-
सुसंपन्नंपरिपूर्णंमहदद्भुतं आश्चर्यतमंचब्रह्मेतिजिज्ञासितंविचारितं । खल्वितिनारदेनव्यासंप्रत्युक्तेवाक्येविचारेपिजि
ज्ञासाशब्दप्रयोगादित्यर्थः । उपलक्षणमेतत् । श्रवणंमननंचैवनिदध्यासनमेवच । विष्णोस्तुब्रह्मविद्यायांजिज्ञासे-
तिविदोविदुरितित्रिष्वपिप्रयोगोबोध्यः । व्याकरणंतुसाधुत्वमात्रपरं । यत्रार्थस्यविसंवादःप्रत्यक्षेणोपलभ्यते । स्वर
संस्कारमात्रार्थातत्रव्याकरणंस्मृतमितिस्मृत्युक्तेरितिभावः । ननुज्ञानेच्छांतर्णीतोविचारोलक्ष्यतइतिसुधायांजिज्ञासा
पदस्यविचारलक्षकत्वोक्त्याकथमत्रजिज्ञासापदस्यविचारवाचकत्वोक्तिरितिचेन्न । सुधायांपरमतानुवादात् । अत-
एवोत्तरत्रयदिचजिज्ञासाशब्दोमीमांसाशब्दवत् विचारएवोपसंख्यायतइतिस्वमतमुक्तं । व्यक्तमेतच्चंद्रिकायां ।
नन्वथापिनब्रम्हजिज्ञासाशब्दोज्ञानेच्छापरः । किंतुविचारस्योपलक्षकः सत्यं तथापितत्पूर्वकोविचारोलक्ष्यते ।
अन्यथासंबधाभावादितिप्रमेयदीपिकाविरोधः । अस्यपरमतानुवादत्वायोगात् । तथाहि । ज्ञानेछायाःअनिषि-
द्धत्वेप्रमाणत्वेनखलुगीताभाष्येब्रह्मजिज्ञासाविज्ञायप्रज्ञांद्रष्टव्यइत्यादिवचनान्युदाहृतानि । तत्रजिज्ञासाशब्दस्यवि-
चारलक्ष्यकत्वेनज्ञानेछापरत्वाभावान्नैतत्सूत्रंज्ञानेछाया अनिषिद्धत्वेप्रमाणत्वेनोदाहर्तव्यमिति । नन्वित्यादिनाशं
कते ज्ञानेछापरिहारेणविचारमात्रस्यलक्ष्यत्वेलक्षणाबीजसंबंधाभावात् । ज्ञानेछांतर्णीतविचारस्यलक्ष्यत्वेऽगीक्रिय-
माणेज्ञानेछापूर्वकमेवविचारस्यलक्ष्यत्वप्राप्त्यातदनिषिद्धत्वेप्रमाणत्वेनैतदुदाहरणंयुक्तमितिपरिहृतं । सत्यमित्यादिना
नचविचारस्यवाच्यत्वेप्रकृतोपयोगः नापिपरमताभिप्रायेणप्रमाणत्वोक्तिर्युक्तेतिचेत् सत्यं अभ्युपगमवादोयमित्यदोषः

वाचकत्वपक्षेपिविचारस्याविधेयत्वेनकाम्यत्वाद्द्रष्टव्यइत्यादिप्रमाणोदाहरणस्यैवसूत्रोदाहरणस्यप्रकृतोपयोगसूचनादिति प्रमेयदीपिकाभावबोधेस्फुटमिति । नन्विच्छायामपिजिज्ञासाशब्दप्रयोगात्सैवात्रजिज्ञासापदवाच्याकिंन्नस्यादित्यतआह ॥ **इच्छायाइति** ॥ प्रयत्नसाध्यस्यैवविधेयत्वेनपुरुषप्रयत्नागोचरेच्छायाःकर्तव्यत्वविधानायोगादितिभावः । ननुकर्तव्यत्वविधायककर्तव्यपदंसूत्रेनश्रूयते नचाध्याहारःकृतइतिवाच्यं । भवतीत्यध्याहारेणापिवाक्यपर्यवसानेनकर्तव्यपदाध्याहारनिर्बंधाभावात् । अतोत्रेच्छाग्रहणंसंभवतीत्यतआह ॥ **भवतीत्यादीति** ॥ आदिपदेनप्रशस्तेत्यादिसंग्रहः। प्रवृत्त्युपयुक्तवाक्यस्यैवसार्थकत्वेनघटोस्तीत्यादिवाग्जिज्ञासाभवतीत्युक्तेप्रवृत्त्ययोगात्तत्कथनमनर्थकमित्यर्थः । दूषणांतरमाह ॥ **सूत्रंचेति** ॥ तद्विजिज्ञासस्वेतिश्रुतौजिज्ञासाविधानात्तदनुसारेणजिज्ञासाविधायककर्तव्यपदमेवाध्याहार्यं । नभवतीत्यादीत्यर्थः अतोत्रेच्छाग्रहणायोगाच्छ्रवणादेरेवजिज्ञासात्वमितिभावः ॥ **तत्कर्महरितोषंयदिति** ॥ यद्धरितुष्टिकरंतदेवकर्मेत्यर्थः ॥ **यइति** ॥ यइमंपरमंगुह्यंमद्भक्तेष्वभिधास्यतीत्यत्राभिधापदोक्तप्रवचनस्यनचतस्मान्मनुष्येषुकश्चिन्मेप्रियकृत्तमइत्युत्तरवाक्यस्थप्रियकृत्तमपदेनप्रसादहेतुत्वलाभादितिभावः । आदिपदेन श्रवणादिग्राह्यं सिद्धेरित्यस्येत्याशंकामित्यनेनान्वयः । ननुप्रसादस्यकर्मादिसाध्यत्ववन्मोक्षस्यापिकर्मसाध्यत्वमपामसोममृताअभूम कर्मणैवहिसंसिद्धिमास्थिताजनकादयः इत्यादिसिद्धं। तत्रमोक्षस्यकर्मसाध्यत्वमनाशंक्यप्रसादस्यतत्साध्यत्वंकिमर्थमित्याशंक्यपरिहरति ॥ **यद्यपीति** ॥ **अन्यनिषेधादिति** ॥ आद्ये नान्यःपंथाइति द्वितीये तेनैवेत्यन्यनिषेधादित्यर्थः । अतएवप्राक्तेनैवेत्येवकारान्वयोदर्शितः ॥ **ज्ञानसाध्यस्यैवेति** ॥ अतएवप्राक्नचज्ञानंविनात्यर्थप्रसादइत्यर्थग्रहणमितिभावः । ननुमध्यमाज्जनलोकादिरितिश्रवणादिजन्यप्रसादाज्जनलोकादिप्राप्तिकथनमयु

क्तं । योगस्यतपसश्चैवज्ञानस्यगतयोमलाः । महर्जनस्तपःसत्यंभक्तियोगस्यमद्गतिरित्येकादशभागवते । नित्यशोभगवद्रूपस्यापरोक्ष्येणदर्शनं । मुहूर्तमात्रंज्ञानंस्यान्महाज्ञानंततोधिकं । सदैवाखंडितंध्यानं तपइत्युच्यतेबुधैः । अपरोक्षदृशायुक्तं नित्यंषणमात्रकालया । अपरोक्षदृशायुक्तं एकमात्रयुजायुतं । योगनाम्नासमुद्दिष्टं ध्यानंनित्यमखंडितं । तच्चतुर्भागयानित्यमपरोक्षदृशायुतं । पादयोगाख्यमुद्दिष्टंध्यानंनित्यमखंडितं । ज्ञानेनब्रम्हलोकस्यान्महाज्ञानाद्धरेर्गतिः । पादयोगान्महर्लोकोजनोलोकस्तुयोगतः । तपसस्तुतपोलोकः प्राप्यतेनान्यतःक्वचिदितितत्तात्पर्ये ईयुस्त्रीन्कर्मणालोकान्ज्ञानेनैवतदुत्तरान् । इतिद्वितीयतात्पर्येच । जनोलोकादेरपरोक्षज्ञान मात्रसाध्यत्वस्मरणात् । एतेनजनोलोकस्यादेरितिजनलोकादिशब्देनमहर्लोकएवगृह्यतइतिनिरस्तं । उक्तरीत्यातस्याप्यपरोक्षज्ञानसाध्यत्वावगमादितिचेत् । उच्यते । अपरोक्षज्ञानंद्विविधं । स्वयोग्यबिंबादिदर्शनं ध्यानसामर्थ्यलब्धभगवन्मूर्तिसामान्यदर्शनंचेति । अत्रश्रवणादिभिरित्यादिपदेनसामान्यदर्शनंचग्राह्यं । तथाचसामान्यदर्शनापरोक्षज्ञानसहितश्रवणादिजन्यप्रसादाज्जनलोकादिप्राप्तिरुपपन्ना । नचदर्शनद्वैविध्यं । सामान्यदर्शनस्यजनलोकादिहेतुत्वंचाप्रामाणिकं । नसामान्यादप्युपलब्धेर्मृत्युवन्नहिलोकापत्तिरितिसूत्रेणसामान्यदर्शनाल्लोकान्मुक्तिर्योग्यात्मदर्शनादितिभाष्येस्फुटत्वात् । एतदनुसारेणज्ञानसंपत्त्येतिभाष्यंयोग्यज्ञानसंपत्त्येतिव्याख्येयं । अतोनकोपिविरोधइति ॥ **आत्मेति** ॥ अतोनतद्विरोधइतिभावः । तच्छेषेण प्रमाणशेषेण ॥ **श्रवणाद्यन्वयेति** ॥ श्रवणाद्यन्वयव्यतिरेकप्रयुक्तान्वयव्यतिरेकप्रतियोगित्वादित्यर्थः । तदभावात् ज्ञानान्वयव्यतिरेकप्रयोजकान्वयव्यतिरेकप्रतियोगित्वाभावात् पारंपर्येण अंतःकरणश्रद्धयादिद्वारा । यद्यपिश्रवणमननयोरपिनिदध्यासनद्वारैवहेतुत्वंतथापिकर्मानाधिकारिणांकर्मणाविनापितंत्रादिश्रवणादिनाअपरोक्षज्ञानोदयाच्छ्रवणादिनाविनाकस्यापिज्ञानोदया-

भावाद्वैषम्यमितिभावः ॥ **बव्हर्थत्वेनेति** ॥ बृहजातिजीवकमलासनशब्दराशिष्वितिधातुव्याख्यानादितिभावः । विवक्षाविशेषस्य नारायणरूपस्य । ब्रम्हशब्दस्यबव्हर्थत्वात्कथमवधारणमित्यतआह । मुख्यइति शेषइति । यतोनारायणप्रासादेतिनारायणशब्देनप्रकृतस्यविष्णुशब्देनग्रहणेकारणमाह ॥ **सविष्णुरिति** ॥ सपूर्वोक्तोविष्णुरेवआहहिश्रुतिः । तंविष्णुंब्रह्मेत्याचक्षतेज्ञानिनइत्यर्थः द्वितीयसूत्रेतामितिविष्णुपरामर्शःकुतइत्यतउक्तं । निरंतरेति अन्योन्यव्यवधानरहितेत्यर्थः अव्यवहिताद्यसूत्रेविष्णोरुक्त्याद्वितीयेतस्यैवपरामर्शइतिभावः । यद्वानिरंतरेत्यस्यब्रह्मजिज्ञासेतिसूत्राव्यवहितेत्यर्थः। अनयोर्देवमीमांसांतिमसूत्रत्वाद्देवमीमांसाकरणानंतरमेवब्रम्हमीमांसायाआरब्धत्वात् । तदुक्तं स्वयंभगवताविष्णुर्ब्रह्मेत्येतत्पुरोदितं । सविष्णुराहहीत्यंतेदेवशास्त्रस्यतेनहीति । ब्रम्हत्वेन ब्रह्मशब्दस्यमुख्यार्थत्वेन ब्रह्मशब्दइतीतिशब्दस्यश्रुत्युक्तत्वादित्यनेनान्वयः । कवीनामित्यन्वयप्रदर्शनं तत्रकवीनामितिबहुवचनेनबहुज्ञानिप्रयोगावगमाद्विद्वद्रूढित्वंज्ञायतइतिभावः ॥ **विद्वद्रूढेरेवेति** ॥ अविद्वद्रूढेरज्ञानमूलत्वादमुख्यत्वमितिभावः । तच्छब्देन । तदेवेत्यत्रत्येन अवयंतित्यस्यार्थोजानंतीति । एतदर्थमेवतदंशोदाहरणमितिभावः । अवयंतीत्यंतएवभाष्येश्रुतिपाठः । तावन्मात्रस्यव्याख्यानात् । समुद्रांतस्थत्वमात्राक्षेपसमाधानाच्चेतिध्येयं । लिंगात्समुद्रांतस्थत्वरूपात् असाधारणधर्मोलिंगमितिवक्ष्यति । अन्यत्ररुद्रादौ । तप्यमानायसलिलइतिभारतोक्तेरितिभावः । समुद्रेंतर्नारायणइतिवक्ष्यमाणरीत्यातत्रासंभवात्कथंचिदित्युक्तं । निरवकाशश्रुतेदर्थांतरेअवकाशरहितविष्णुशब्दात् नाममात्रेणवस्तुनिर्देशःश्रुतिरितिवक्ष्यति । नारायणायविद्महेवासुदेवायधीमहि । तन्नोविष्णुःप्रचोदयादिति श्रुतिंचतुर्थीविपरिणामेनव्याचष्टे ॥ **यतइति** ॥ तदितितच्छब्दश्रवणाद्यतइत्याध्याहारः शुभंप्रतीतिच विद्महे जानीमः। धीमहि चिंतयामः चोदयतु

प्रेरयतु चुदप्रेरणइतिधातोः ॥ **तन्नोरुद्रइति** ॥ तत्पुरुषायविद्महेमहादेवायधीमहि । तन्नोरुद्रःप्रचोदयादित्यादीत्यर्थः ॥ **इतरवाचकेति** ॥ अनेनेतरेतिशब्दइतरशब्दइतिप्रतीतिनिरासाय ॥ **तेषामपिमुख्यत्वमिति** ॥ अनेनतच्छब्दस्तेषांतदितितंत्रेणोपात्तइत्युक्तंभवति ॥ **विष्णावेवेति** ॥ तदंतर्यामिरूपविशेषेणवा महादेवत्वरुद्रत्वादिगुणविशेषेणवा तत्तच्छ्रुतौविष्णुप्रार्थनाभेदान्नपौनरुक्त्यमितिभावः । अभीत्यस्यार्थोमुख्यतइति । अनृतस्येत्यस्यविष्णिवतरस्येति । तदेवर्तमितिविष्णवर्ततशब्दवाच्यत्वान्नञश्चान्योन्याभावार्थत्वादितिभावः । आङोर्थोमुख्यतइति । परमित्यस्यापरिछिन्नेति ॥ **धारकइति** ॥ दधातेःक्किबितिभावः एकएवेत्यंतएवभाष्येपाठः । इतरांशकृत्याभावात् । क्वचित्पाठेतु तंसंप्रश्नं प्रश्नविषयं अन्यानिभुवनानियंतीत्यर्थः ॥ **अन्येति** ॥ विश्वकर्मेत्यर्थः विश्वकर्माविमनेतिविश्वकर्मश्रुतेरितिभावः । ननुश्रुतिर्लिंगंसमाख्याचवाक्यंप्रकरणंतथा । पूर्वंपूर्वंबलीयइतिश्रुतितोलिंगस्यदुर्बलत्वावगमात्कथंतेननिर्णयइत्यतआह ॥ **उत्सर्गतइति** ॥ स्वभावतइत्यर्थः ॥ **सावकाशेति** ॥ नामानिसर्वाणीत्युक्त्वा भगवत्यवकाशोयुक्तइत्यर्थः ॥ **बाधेति** ॥ प्रतीतार्थपरित्यागरूपेत्यर्थः । भाष्ये अधितस्थुरितिसंबंधः । छंदांसिपरेपिव्यवहिताश्चेतिस्मरणात् ॥ **अन्यदिति** ॥ पद्ममित्यवचनादितिभावः ॥ **प्रसिद्धीति** ॥ श्रुत्यादिप्रसिद्धीत्यर्थः । एवंलिंगसमर्थनपरतयाव्याख्याय तन्निरवकाशपरत्वेनापिव्याचष्टे ॥ **विश्वकर्मश्रुतिवदिति** ॥ उभयोरेकत्रासंभवादाह ॥ **क्वचिदिति** ॥ जीवेव्यस्ताः सृष्टयादयः सर्वेपिजडेसमस्ताःसृष्ट्यादयश्चत्वारइत्यादिरूपेणेत्यर्थः । सूक्तांतरे विश्वकर्मसूक्तेन समाख्यानात् तत्प्रतिपाद्यार्थप्रतिपादनादितियावत् । निर्णीतस्थलेसमानोक्तिःसमाख्येतिवक्ष्यति । **लक्ष्मीरिति** ॥ अस्यांभ्रणीवाक्यत्वात् अंभ्रण्याश्चश्रीभूदुर्गांभ्रणीह्रीश्चमहालक्ष्मीतिकीर्तितेतिबृहद्भाष्योक्त-

रीत्यालक्ष्मीमूर्तित्वादितिभावः । भाष्येअप्सुआअंतरित्यर्थः श्रुतिंव्याचष्टे ॥ **दिवेति** ॥ एनेतिपृथवीविशेषणंअ-स्याइत्यर्थः । सुमेधसं ज्ञानिनं कृणोमि करोमीत्यर्थः तप्यमानाय तपःकुर्वाणाय एकार्थत्वात् क्रूररूपैकार्थप्रतिपादकत्वात् । आपोनाराइतिप्रोक्ताआपोवैनरसूनवः । अयनंतस्यताःपूर्वंतेननारायणःस्मृतइतिव्यासस्मृतिरंतराधिकरणे उदाहरिष्यति । अत्रयंकामयइतिवाक्ये । अपोह्यत्वात् बाध्यत्वात् प्रसिद्धपदसूचितंहेतुमाह ॥ **प्रसिद्धीति** ॥ विरोधाभावोऽसिद्धइत्याह ॥ **अत्रेति** ॥ तथात्वेतस्यरमानीचत्वप्राप्तेरितिभावः ॥ **वक्ष्यमाणेति** ॥ वेदेरामायणेचैवेत्यादिनाआनंदमयनयमारभ्यप्रतिनयंवावक्ष्यमाणेत्यर्थः । अनेनचःसमुच्चयइत्युक्तंभवति ॥ **हरिवंशत्रये ति** ॥ खिलाखिलपारिजातसंज्ञकहरिवंशभागत्रयेत्यर्थः । विरोधइत्यनंतरमत्ररुद्रग्रहणइत्यनुवर्तते । भाष्ये एषइत्यस्यएनमित्यर्थः । मोहस्यमिथ्याज्ञानरूपस्यमोहकत्वाभावादाह ॥ **मुह्यतइति** ॥ नटनंवंचनंवेति विद्यमानाकाराच्छादनेनाविद्यमानाकारप्रदर्शनंनटनं । अविद्यमानकथनंवंचनमित्युभयोः क्रियावचनरूपत्वाद्भेदः । दधीच्यादिभिः ऋषिभिः । क्वापिअविद्यमानंलिंगमूलान्वेषणादिकमतथ्यं । विष्णवादौविद्यमानंस्वातंत्र्यादिकंरुद्रादौउच्यमानं वितथ्यं। आत्मानंमामित्यनयोःकर्मणिद्वितीयात्वेप्रकाशवंतमित्यादिस्यान्नतुप्रकाशमित्यादीत्यतआह ॥ **आत्मानंमां चप्रतीति** ॥ अभितःपरितः समयानिकषाहाक्रतेप्रतियोगेष्वपीतिस्मरणात् कर्मप्रवचनीययोगेद्वितीयेतिभावः ॥ **प्रकाशंप्रसिद्धिमिति** ॥ तेनाप्रकाशमप्रसिद्धमित्यपिव्याख्यातं आत्मप्रसिद्धिंमामप्रसिद्धंचकुर्वित्यर्थः ॥ **शिवादिविषयत्वादिति** ॥ अनेनशैवइत्येतच्छिववविषयइतिव्याख्यातं । तेषांव्यासप्रणीतत्वेनमोहार्थनिर्मितपाशुपतादिविलक्षणत्वमितिभावः । भाष्ये श्वपचादितितार्कितंध्येयं करणैरिति क्रीडासाधनैरित्यर्थः ॥ **स्वविरोधेनेति** ॥ स्वप्रतिपादितवि-

ष्णूत्तमत्वविरोधेनेत्यर्थः । तत्र रुद्राद्युत्तमत्वे वैपरीत्यंस्वविरोधेनविष्णूत्तमत्वादावप्रामाण्यरूपं ॥ **असाधारण्येनेति** ॥ मुख्यप्रतिपाद्यत्वेनेत्यर्थः । असाधारण्येनरुद्राद्युत्कर्षप्रतिपादनायप्रासमविद्यमानमपितद्ब्रूयात् तदुद्देशेनप्रवृत्तेराजस्तु त्यादौतथादर्शनात् प्रासंगिकंतुविष्णूत्तमत्वं विद्यमानमेवब्रूयात् नहितत्तदुद्देशेनप्रवृत्तंयेनाविद्यमानमपितद्ब्रूयादितिभावः तथेत्यःनुवादः । उक्तशब्दार्थःप्रत्युक्तमिति ॥ **उच्यतइति** ॥ आराध्यदेवदेवेशंशंकरंलोकशंकरं । तपसातोषयि त्वातंकैलासगिरिवासिनं । रुग्मिण्यांतनयंलेभेदग्धंकामंपुनर्हरिरित्यादिनोच्यतइत्यर्थः । ब्रम्हशब्दश्चविष्णावेवेत्यादि नोक्तमुपसंहरति ॥ **तस्मादित्यादिना** ॥ अधिकरणार्थमुपसंहरति ॥ **तदेवमिति** ॥ अतइतिसिद्धांतेफल-कथनं ॥ १ ॥ **शास्त्रसंगतिरिति** ॥ ब्रम्हमीमांसाशास्त्रप्रतिपाद्यब्रह्मविचारपरत्वात् ब्रम्हमीमांसशास्त्रेंतर्भावसं गतिरित्यर्थः । एवमग्रेपि शास्त्रसंगतिर्व्याख्येया ॥ **श्रुत्यादिसंगतिस्त्विति** ॥ आदिपदेनाधिकरणं एकवचन प्रयोगश्चैकप्रदर्शनेनान्यापिसुज्ञातेतिप्रकारैक्याभिप्रायेण चतुराधिकरण्यांयतोवेत्यादिश्रुतिरेवविचार्यतइति श्रुतिसंगतिः स्फुटा । तुशब्दःशास्त्रसंगतितः आक्षेपकत्वाख्यंविशेषमाह पूर्वमाक्षिप्यतेयत्रतत्रसाक्षेपिकीमतेत्युक्तेः । एवमग्रेपि यत्रपूर्वाक्षेपस्तत्राक्षेपिकीध्येया ॥ **गुणपूर्त्यसिद्धेति** ॥ रूढ्याजीवपरत्वेयौगिकार्थगुणपूर्त्यसिध्येत्यर्थः ॥ **उभय-**त्रेति ॥ तदेवब्रह्मेतिविष्णौ । बृहजातिजीवेतिजीवइत्यर्थः ॥ **मुख्यइत्युक्तमिति** ॥ मुख्यामुख्ययोर्मुख्यस्यैवसं प्रत्ययइत्यन्यतरनिश्चयान्नोक्तसंदेहःसंभवतीतिभावः ॥ **स्वकृतेति** ॥ यतोनारायणप्रसादमृतेनमोक्षइत्यादिनेत्यर्थः । नसूत्रकारेणेत्येवशब्दः । सूत्रकारेणैवपरकीयसंभावितसंदेहात्परेणतन्निरासकन्यायस्यव्युत्पादितत्वादितिभावः । इतरकोटिप्रापकंप्रतिषेधति ॥ **यद्यपीत्यादिना** ॥ **योगेनैवेति** ॥ रूढ्यंगीकारेगुणपूर्त्यसिद्धेरितिभावः । तर्हिपं

कजादिशब्दवद्योगरूढिरस्तुतावतापिगुणपूर्तिलाभात्एवंचरूढिमात्रतोयोगरूढेःप्राबल्याद्विष्णुरेवायंब्रह्मेतिचेन्न । अथ कस्मादितिश्रुतिसिध्यर्थयोगेनैवतव्द्यवहारोपपत्तावसिद्धसमुदायशक्तिरूपरूढिकल्पनस्यव्यर्थत्वात् । पंकजादिशब्देयोग मात्रस्यभेकादावतिप्रसक्त्यारूढिकल्पनं । नचात्रतथा अन्यत्रगुणपूर्तेरनंगीकारात् तदेवाह योगेनैवेत्येवकारेण ॥ रूढेरेवेति ॥ तस्यावयवार्थसापेक्षयोगापेक्षयातन्निरपेक्षतयाशीघ्रोपस्थापकत्वादितिभावः । ननुतदेवब्रह्मेत्यत्ररूढिप्राप्तजीवत्यागेनविष्णुग्रहणवदत्रापिस्यादित्याशंक्याह ॥ **नचेति** ॥ **बाधकंविनेति** ॥ तत्रसमुद्रस्थत्वंबाधकमितिभावः । अत्रापिजिज्ञास्यत्वंबाधकमित्यतआह ॥ **नचतादृशमिति** ॥ समुद्रस्थत्ववदपरिहार्यमित्यर्थः । जिज्ञास्यत्वंतुवक्ष्यमाणरीत्याजीवेपिसावकाशमितिभावः । ननुब्रम्हशब्दस्यजीवइवजात्यादावपिरूढत्वात्कथंजीवएवेत्यवधारणमितिशंकापरिहरन्नेवोपसंहरति ॥ **तस्मादिति** ॥ मुख्यतः अवश्यं तस्यातीवप्रसिद्धेरितिभावः । जीवस्याप्यहमितिप्रसिद्धिरस्तीत्यतःस्वरूपेणसिद्धत्वेपिदेहभिन्नत्वेननसिद्धेरितिभावेनाह ॥ **देहात्मविवेकस्येति** ॥ अन्यथा भस्मीभूतस्यदेहस्यपुनरागमनंकुतइतिचार्वाकोक्तरीत्यानपुण्यपापकरणाकरणेस्यातामितिभावः । यद्यपिकमलासनस्यापिप्रसिद्धिरस्ति । तथापिनतस्यजिज्ञास्यत्वं प्रयोजनाभावादितिसुधायामेवोक्तं । ननूक्तरीत्याजीवस्य जिज्ञास्यत्वेतस्यचेत्यादिनाकथंतस्याजिज्ञास्यत्वोक्तिरितिचेत् उच्यते जात्यादिवैलक्षण्योपपादनायदेहान्यत्वादिनाजीवस्यजिज्ञास्यतोक्ता । सिद्धांत्यभिमतमोक्षफलकगुणपूर्णत्वप्रकारकाजिज्ञासानिराक्रियते । अतएवचांद्रिकायांविशिष्टाधिकारिकमोक्षफलकजीवान्यधर्मिकगुणपूर्णत्वप्रकारकपूर्वसूत्रोक्ताजिज्ञासासाक्षेपेणैवेत्याद्युक्तं ॥ ॐ **जन्माद्यस्ययतः** ॐ ॥ अस्यप्रमितस्यचेतनाचेतनात्मकस्यजगतः जन्मादि सृष्टिस्थितिलयनियमनज्ञानाज्ञानबंधमोक्षजातं यतः यस्मात्

यथायोग्यंभवति । तज्जन्मादिकारणंब्रह्मेत्यर्थः । पूर्वपक्षप्रतिबंधकयुक्तेरेववक्तव्यत्वात् लक्षणकथनमसंगतमित्यतआह ॥ निर्बाधेति ॥ श्रुत्युक्तमिति ॥ विष्णुलक्षणत्वेनप्रमितंजन्मादिकारणत्वंजिज्ञास्यब्रह्मसंबंधित्वेनाहेत्यर्थः । ॥ अस्येति ॥ इदंत्रितयकर्तृताभिधायिमायावादिव्याख्यानं । आदिपदेनजन्म आदियस्यपालनस्येत्यतद्गुणसंविज्ञानबहुव्रीहिणापालनकर्तृत्वमेवोच्यतइतिरामानुजव्याख्यानसंग्रहः ॥ निरासायेति ॥ जिज्ञासाविधायकयतोवेत्यादिश्रुतावेवचतुष्टयकर्तृत्वोक्तेरितिभावः ॥ सृष्ट्याद्यष्टकमिति ॥ ननुसूत्रेजगन्निष्टजन्माद्युच्यतेभाष्यटीकयोस्तु सृष्टासंहर्तेत्यादिप्रयोगाद्ब्रह्मनिष्टव्यापारउच्यते अतःकथंव्याख्यानव्याख्येयभावइतिचेत् उच्यते प्रयोजकव्यापारवाचिना सृष्ट्यादिशब्देन प्रयोज्यव्यापारोजन्मादिर्लक्ष्यते लक्षणाप्रयोजनंचब्रह्मणः स्रष्टृत्वमेवनतूपादानत्वमितिसूचनं अतएवयोनःपितेतिश्रुतिंतथैवावतारिष्यतीतिध्येयं। नन्वत्रजीवेरूढिमंगीकृत्यबाधकवशात्तत्परित्यागइतिनवक्तव्यं। किंतु तदेव ब्रह्मपरमंकवीनामितिपूर्वाधिकरणोक्तन्यायेनब्रह्मशब्दस्य विष्णौविद्वद्रूढेरुक्तत्वाद्विद्वदविद्वद्रूढ्योःविद्वद्रूढेरेवबलीयस्त्वाद्विष्णुरेवात्रोक्तंब्रह्मेतिवक्तव्यमित्याशंक्यपरिहरति॥ यद्यपीति॥ अभ्युपगम्येति ॥ अभ्युपगमवादप्रयोजनंतुजीवभेदकगुणपूर्तिलाभः रूढ्यंगीकारेतदलाभादितिभावः।इयमुक्तिःसौत्रीबाधोक्तिः।रामानुजरीत्याऽतद्गुणसंविज्ञानेऽष्टकालाभादाह ॥ तद्गुणसंविज्ञानइति ॥ तस्यगुणस्यअन्यपदार्थंप्रत्युपसर्जनीभूतस्यान्यपदार्थेसंविज्ञानंविशेषणत्वेनोपादानंयस्मिन्बहूव्रीहौसतद्गुणसंविज्ञानः यथालंबकर्णमानयेत्यादौ । प्रकृतेचतस्यगुणस्यान्यपदार्थं पालनादिकंप्रत्युपसर्जनीभूतस्यजन्मनोऽन्यपदार्थेपालनादौसंविज्ञानंविशेषणत्वेनोपादानंकार्यं । नतुचित्रगुमानयेत्यादाविवतत्परित्यागइत्यर्थः । ननुकथंजन्मनःस्थित्याद्यपेक्षयाआदित्वं पौर्वापर्येणेतिचेन्न । दर्शपौर्णमासतिथ्योरिवजन्मस्थितिसंहारप्रवाह

स्यानादित्वेनपौर्वापर्यानियमादित्यतआह ॥ **लब्धजन्मेति** ॥ सत्यमेवंतथापिलब्धजन्मनःस्थित्यादिरितिवन्नस्थितस्य नष्टस्यवाजन्मेत्येकव्यक्त्यपेक्षयाजन्मनःप्राथम्यमितिभावः । अज्ञानंभावरूपं ॥ **नोपलभ्यतइति** ॥ तद्विजिज्ञास स्वेत्यत्रानुपलंभादितिभावः । प्रयंति प्रयांति त्रिधात्वित्यस्यार्थः प्रकृतिपुरुषकालाधारकइति । यच्छब्दस्यतदस्यप्रियमित्यु त्तरेणान्वयः । चतुर्भिर्नामभिःसाकंवासुदेवादिभिर्हरिः । वसून्रुद्रांस्तथादित्यान्ब्रम्हणोमरुतस्तथा । बृहच्छरीरोभगवा न्नूनंशासतिनित्यशइतिप्रमाणानुसारेणश्रुतिंव्याचष्टे ॥ **बृहच्छरीरइति** ॥ बृहच्छरीरोविमिमानित्युत्तरत्रोक्तमिदं । व्यतीनित्यस्यार्थोविशेषेणाधिकानिति विशेषेणाधिकत्वेन व्यतयोदेवतास्मृता इतिकर्मनिर्णयोक्तेः वृत्तंभ्रममाणं नेत्य स्यार्थोइवेति ॥ **पर्यवर्तयदिति** ॥ विपरिवर्तनधातोरितिभावः । एकादशादित्याइति आदित्यानांद्वादशत्वेपि- विष्णुव्यतिरिक्तानांनियम्यानांएकादशत्वादियमुक्तिः । पंचाशन्मरुतइति । एकोनपंचाशन्मरुतांमुख्यवायुनासहपंचा शत्वादितिभावः तत्वप्रदीपेचेमंप्रकारमभिधाय आदित्यावसवोरुद्रामरुतश्चाश्विनावपि । बृहस्पतिश्चकामश्चमनुर्दक्षोविना यकः । भृगुश्चैवानिरुद्धश्चधर्मोनिर्ऋतिरेवच । कुबेरसहितादेवानवतिःसंप्रकीर्तिताः । अनंतोगरुडोवायुश्चत्वारोब्रम्हणास हेतिप्रमाणानुसारेणप्रकारांतरमप्युक्तं । अत्राश्विनोरेकत्वंबोध्यं ॥ **एतान्यपीति** ॥ नकेवलंस्थितिनियमनकर्तृत्वे किंत्वष्टावपीत्यर्थः । तन्वावृधानेत्यस्यार्थः स्वमूर्त्यैवापरिच्छिन्नइति । मात्रयेत्यस्यमितेरिति ॥ **अपरिमितत्वादिति** ॥ विष्णोरपरिमितत्वोक्तौमाहिम्नस्तत्स्वरूपत्वात्तस्यापरिमितत्वमुक्तमित्याशयेनेयमुक्तिः ॥ **वर्तमानेति** ॥ वर्तमानार्थ कलट्प्रयोगादितिभावः । यथाजीवमहिमासुचतुर्मुखमहिम्नः सीमात्वं यथावापरतंत्रमहिमासुरमामहिम्नः सीमात्वमेवं विष्णुमहिम्नोपिविवक्षाविशेषेणसीमात्वंनयुक्तमित्याशयेनोक्तं ॥ **परमिति** ॥ जातोजनिष्यमाणश्चवर्तमानस्तथैव

चेतिप्रमाणानुसारेणेदमुपलक्षणमित्याशयेनाह ॥ **जनिष्यमाणइति** ॥ सर्वेचवयंचवयं त्यदादीनिसर्वैर्नित्यमित्ये-कशेषत्वंमत्वाह ॥ **नःसर्वेषामिति** ॥ अस्मदादिसर्वेषामित्यर्थः । पौनरुक्त्यवारणायाह ॥ **नदत्तपुत्रवदि-ति** ॥ पितापालकः ॥ २ ॥ जन्मादिकारणत्वस्य विष्णुलक्षणत्वेनोक्तस्य तेनशास्त्रसंगतिरित्युपपन्नं ॥ **तदेवेति** ॥ अन्यथाअतिव्याप्तत्वेनविष्णुलक्षणत्वासिद्धेरितिभावः । यद्यपिलक्षणस्यविष्ण्वेकनिष्ठत्वंप्रागुक्तं तथापितद्भाष्यकारेणैवे-तिनदोषः । इतिशब्दस्याध्याहृतेनश्रुत्यादिसंगतिरित्यनेनान्वयः । एवमग्रेपि उक्तन्यायः पूर्वोक्तश्रुतिस्मृतिरूपः प्रसिद्धिः वक्ष्यमाणरीत्या ॥ **अनुमानेनेति** ॥ क्षित्यादिकं सकर्तृकं कार्यत्वादित्यनुमानेन कर्तृमात्रसिद्धावपि तस्य नावेदविदितिस्वप्रामाण्यनिषेधकश्रुत्युक्ते विष्ण्वाख्येकर्तरि पर्यवसानायोगेन पाशुपताद्यागमोक्तेशिवादौ पर्यवसाना द्वाशिवोजगत्कर्ता सर्वज्ञत्वात् व्यतिरेकेण कुलालवदित्यनुमानेनवा रुद्रादेःकारणत्वसिद्धिः । नचद्वितीयेऽसिध्धिः पाशु पताद्यागमेनतत्सिद्धेरितिभावः ॥ **श्रुतीति** ॥ यउत्रिधात्वित्यादिश्रुतीत्यर्थः युक्तिविरुद्धार्थे उक्तानुमानविरुद्धे विष्णोरेवकारणत्वरूपे ॥ ॐ ॥ **शास्त्रयोनित्वात्** ॥ ॐ ॥ जगत्कारणस्य वेदवेदानुसारिग्रंथैकप्रमाणकत्वान्नानुमान पाशुपतादिवेद्यत्वमित्यर्थः । अभिधेयत्वादिनाऽन्येषामपिअनुमेयत्वादाह ॥ **कारणत्वेनेतिशेषइति** ॥ आनुमानिकं अनुमाननिश्चेयं ॥ **शास्त्रैकेति** ॥ शास्त्रमात्रज्ञेयत्वादित्यर्थः । कारणंनानुमाननिश्चेयं शास्त्रैकवेद्यत्वादितिप्रयोगे व्या प्तिमुपपादयति ॥ **नहीति** ॥ तस्यचोदनैकवेद्यत्वादितिभावः । प्रकृतोपयोगायात्मशब्दस्यार्थांतरं सर्वकर्तारमिति । कर्तृत्वादात्मशब्दोक्तइत्यादेः सम्यक्परास्मिन्नयनंसंपरायःसंपरायएवसांपरायः । तादर्थेसप्तमीत्युपेत्याह ॥ **मोक्षा-येति** ॥ जगत्कर्तेत्यपिप्रकृतोपयोगाय । जगृहेपौरुषंरूपं आदौलोकसिसृक्षयेत्युक्तेरितिभावः । अंगीकारात्स्वतंत्रस्यपू

णगुणत्वनियमादितिन्यायविवरणे ॥ **श्रुत्यादिसहकारीति** ॥ स्वातंत्र्यानुमानमपिपूर्णोहरिर्यःस्वतंत्रःसदैवेत्यादिश्रुतिसाहाय्यमितिभावः ॥ **प्रतिपक्षादीति** ॥ विमतंसकर्तृकंकार्यत्वादित्युक्ते विमतंविकर्तृकमस्मत्संमतकर्तृरहितत्वादिति प्रतिपक्षसंभवादित्यर्थः । तादृशंश्रुतिसहाय्यरहितं श्रुतिसहाय्यरहितानुमानस्य वन्ह्यादौप्रवृत्तेः कथंनकुत्रचिदिति तत्राह ॥ **अदृष्टइति** ॥ अस्मदाद्यदृष्टइत्यर्थः । तेनप्रमाणांतरं प्रत्यक्षमित्युपपन्नं । अन्यथाकेनाप्यदृष्टविषयकश्रुतिसहितप्रत्यक्षस्याप्रसिद्धत्वेन विशिष्यनिषेधे अनर्थकःस्यादितिध्येयं ॥ **यथेश्वरइति** ॥ इदंतु यःस्वतंत्रः सदैवेतिश्रुतिबाधितं ॥ **यथारामेति** ॥ इदंतु वर्जितः सर्वदोषैरितिश्रुतिविरुद्धं ॥ **अत्रापीति** ॥ तर्कस्यपृथगभिधानादितिभावः ॥ **यशोदायाइति** ॥ तच्च यउत्रिधात्वित्यादिश्रुतिसहाय्यं ॥ **यथाविष्णुरिति** ॥ समव्याप्तत्वेनोभयोरपि परस्परं साध्यसाधनभावसूचनाय पूर्वप्रयोगाव्द्यत्यासः । भाष्ये तादृशतर्कप्रदर्शनायपूर्वोत्तरेत्याद्युक्तं । ऊहनं परामर्शजन्यज्ञानविशेषः । शुष्कः श्रुत्यसहायः ॥ **जगत्कारणत्वाभावादाविति** ॥ जगन्निष्कारणं वस्तुत्वादात्मवत् । नचेष्टापत्तिः । सकारणत्वस्ययतोवेत्यादिप्रमाणसिद्धत्वेन प्रामाणिकहानापत्तेः । शशोविषाणवान्मृगत्वात् कृष्णमृगवत् । नचेष्टापत्तिः । शशविषाणस्यसर्वथा अप्रमितत्वेनाप्रामाणिककल्पनाप्रसंगादितिभावः । ईक्षणकर्तृत्वमागमसहायस्यापि नास्तीतिकिंविशिष्यनिषेधेनेत्यतआह ॥ **उर्दाक्षयितुम्भिति** ॥ तस्मात्स्वपरपक्षयोः साधकबाधकसद्भावात्कथंशास्त्रादीश्वरसिद्धिरित्येतदुपपादनाय पूर्वभागः । ईश्वराद्यतींद्रियमेवनास्ति शास्त्रादिकमपिप्रमाणभूतंनास्तीति अनेनैवनास्तिक्यवाद इत्येतद्विवृतं ॥ **कार्यकारणभावोस्तीति** ॥ अन्यथा अपत्योत्पादनायरेतःसेकादौप्रवृत्त्यनुपपत्तिरितिभावः ॥ **नचासाविति** ॥ तस्यकालादिघटितत्वादितिभावः ॥ **अन्वयव्यतिरेकित्वाख्येति** ॥ शरीरंरेतोजन्यंतदन्वयव्यतिरे

कमयुक्तान्वयव्यतिरेकप्रतियोगित्वादित्यनुमानेनेत्यर्थः । यदधिष्ठिते येनाधिष्ठिते। परिणमते शरीरात्मना। वातादिधातु रित्यादौ नचासौप्रत्यक्षइत्यादियथासंभवमनुद्दृत्यकार्यकारणभावसाधकानुमानप्रामाण्यजीवेश्वराद्दृष्टागमप्रामाण्यसिद्धि र्व्याख्येया । कणिका बीजं। अयस्कांतेन सूचीपाषाणेन ॥ **नचाचेतनेचेष्टकत्वमिति** ॥ अतस्तत्रेश्वरोंगीकार्यइति-भावः । एवमेवनचासावितिवाक्यंयोज्यं । पच्यतइति । पचनानंतरमेवतृष्णानिवृत्तिरितिभावः ॥ **नापिजीववत्स-वंशरीरेति** ॥ व्याधिविशेषविशिष्टानां तथादर्शनादितिभावः । भूतेषु पृथिव्यादिषु वचनादित्यस्यनास्तिक्यवादा योगेहेतुत्वायोगादाह ॥ **एतैरिति** ॥ इतश्चवक्षमाणादपिप्रकारात् सांख्यमित्यादिभाष्यमाकांक्षाक्रमेणयोजयति ॥ **पंचरात्रस्येत्यादिना** ॥ अत्रेदंबोध्यं। सांख्यंयोगःपाशुपतं वेदारण्यकमेवच। ज्ञानान्येतानिभिन्नान्युताहोनेतिचो-च्यतां । सांख्यंयोगःपाशुपतं वेदारण्यकमेवच । ज्ञानान्येतानिभिन्नानि नात्रकार्याविचारणा । सांख्यस्यवक्ताकपिलः परमर्षिःसउच्यते । प्राचीनगर्भंतमृषिं प्रवदंतीहकेचन । हिरण्यगर्भोयोगस्यवक्ताचैवचतुर्मुखः । उमापतिर्भूतपतिः श्रीकंठोब्रह्मणःसुतः । उक्तवानिदमव्यग्रं ज्ञानंपाशुपतंशिवः । पंचरात्रस्यकृत्स्नस्य वक्तानारायणःस्वयं । ज्ञानेष्वेतेषु राजेंद्र सर्वेष्वेतद्विशिष्यतइत्यत्राद्यश्लोकेन सांख्यादिचत्वारिज्ञानसाधनानि किंपरस्परभिन्नार्थप्रतिपादकान्युतैकार्थप्रति-पादकानि । आद्येकिंसर्वाण्यप्रमाणानि उतैकंप्रमाणं । एकंप्रमाणंचेत्किंतदितिजनमेजयेनप्रश्नःक्रियते वैशंपायनेनतु द्वितीयपद्येनक्रमेणप्रकृतिवायुनिरोधशिवविष्णूनांमोक्षदत्वप्रतिपादकत्वेन भिन्नार्थप्रतिपादकत्वमित्याद्यप्रश्नपरिहारः क्रियते । सार्धश्लोकत्रयेणानाप्तप्रणीतत्वादितरेषामप्रामाण्यं वेदपंचरात्रयोरेकार्थत्वेन पंचरात्रप्रामाण्योक्तौवे स्यापि प्रामाण्यमुक्तंभवेदित्यभिप्रेत्य पंचरात्रस्याप्तप्रणीत्वेनप्रामाण्यमितिद्वितीयतृतीयप्रश्नपरिहारःक्रियते । नान्याप्रामाण्य-

मिति । अकथनादितिभावः । वेदस्यपंचरात्रभिन्नार्थत्वंमत्वाशंकते ॥ **तर्हीति** ॥ वेदश्चारण्यकंच तयोःसमाहारोवे दारण्यकं । अरण्येपठनीयोवेदभागः आरण्यकंसामान्यविशेषभावेनपृथगुक्तिरितिध्येयं । वेदार्थत्वेन वेदव्याख्यान रूपत्वेन ॥ **असंगतंस्यादिति** ॥ ऐक्याभिप्रायेहिवेदारण्यकशब्देनपंचरात्रस्यापिप्रसक्तत्वेनएतेषुकिंप्रमाणमिति प्रश्नोत्तरत्वेन तदाधिक्यकथनंसंगतंस्यात् । तदभावेचपंचरात्रस्यप्रागप्रकृतत्वेनतदाधिक्यकथनमसंगतंस्यादित्यर्थः । पृच्छति ॥ **वेदस्यैवेति** ॥ वेदस्यैवपृष्टत्वादितिभावः । उत्तरमाह ॥ **पंचरात्रेति** ॥ नोच्यतइत्यनुवर्तते वेदप्रामाण्यो क्तौतदलाभादितिभावः । तर्हिवेदप्रामाण्यंनोक्तंस्यादित्यतआह ॥ **पंचरात्रप्रामाण्योक्ताविति** ॥ **वाक्यार्थानु पपत्येति** ॥ ज्ञानेष्वेतेष्वितिवाक्यस्ययोर्थःपंचरात्रप्रामाण्यरूपः तस्यान्यथावेदप्रामाण्यंविनानुपपत्येत्यर्थः । तथाहि एतेषुकिंप्रमाणमितिप्रश्नस्यैतेषुपंचरात्रंप्रमाणमित्युत्तरं पंचरात्रस्यैतेष्वन्यतमत्वंविनानोपपद्यते तत्रसांख्याद्यन्यतमत्वंना- स्ति तद्विरुध्दार्थप्रतिपादकत्वात् । अतोवेदारण्यात्मकत्वंवाच्यं । नचस्वरूपैक्यंसंभवति । अतोर्थैक्यमंगीकार्यं तत्रवे दस्याप्रामाण्येतत्समानार्थकपंचरात्रस्याप्यप्रामाण्यंस्यात् । नचैवं । अतोवेदस्यापिप्रामाण्यमिति ॥ **धर्मबहुत्वादि- ति** ॥ तथाचप्रतिपाद्यबहुत्वप्रयुक्तबहुत्वव्यवहारइत्यर्थः ॥ **प्रमाणमिति** ॥ सामर्थ्यलब्धायाःज्ञप्तेःशास्त्रपदार्थ पर्यालोचनया प्रमात्वलाभइतिभावः । ननुतपोधनइत्यादौ समस्यमानपदद्वयार्थत्यागेनान्यपदार्थस्यैव तपस्विनः प्राधा न्यं राजपुरुषइत्यादौच समस्यमानोत्तरपदार्थस्यपुरुषस्याप्राधान्यं । एवंचान्यपदार्थप्रधानबहुव्रीह्यपेक्षया वृत्तिपदार्थ प्रधानतत्पुरुषस्य प्राबल्यात्सएवात्रास्त्वितिशंकते ॥ **समासप्राबल्यादिति** ॥ जन्मादिकारणत्वंकुतइत्यतः शास्त्रयो नित्वेनतत्साध्यतेअतउक्तोपयोगइत्यतआह ॥ **नहीति** ॥ **वैपरीत्यस्यैवेति** ॥ सहस्रवत्वेनैवशतवत्वसाधनंनान्यथा

व्यभिचारादितिभावः ॥ **अर्थलब्धमिति** ॥ उपादानादिज्ञानेनतदेवकर्तृत्वादितिभावः । स्फोरयति स्फुटीकरोति ॥ **अर्थलब्धशक्तीति** ॥ शक्त्यभावेकर्तृत्वांतर्गतप्रयत्नानुपपत्तेरितिभावः अभ्युपेत्येदमुक्तं । वस्तुतस्तुसार्वज्ञस्फोरण मेवनयुक्तमित्याह ॥ **अनंतेति** ॥ ननुशास्त्रस्याशेषार्थप्रतिपादकत्वात्तन्निर्माणमशेषार्थज्ञानंविनानसंभवतीतिसार्व ज्ञप्राप्तिरितिचेन्न । तथात्वेसार्वज्ञस्यपूर्ववदर्थलब्धत्वेनस्फोरणायोगात् । नकेवलमुक्तरीत्या शास्त्रकर्तृत्वकथनमनुपयुक्तं किंत्वयुक्तंचेत्याह ॥ **किंचेदमिति** ॥ **कणादेति** ॥ तद्वत्पौरुषेयत्वांगीकारे तन्मतप्रवेशइत्यर्थः । अस्त्वित्यतआह ॥ **श्रु-तीति** ॥ अपौरुषेयत्वाभिधायक वाचाविरूपनित्ययेत्यादिश्रुतीत्यर्थः ॥ **सार्वज्ञसाधकत्वाभावेति** ॥ अध्यापकव दर्थाज्ञानेप्युच्चारणसंभवादितिभावः । नन्विदमधिकरणंस्मृत्यनवकाशदोषप्रसंगइतिचेन्नान्यस्मृत्यनवकाशदोषप्रसंगादि-त्यनेनपुनरुक्तं । तत्रैवात्रापि सांख्यपाशुपतादिदुरागमानां निरासादितिचेत् । उच्यते । अत्रविष्णोरन्येषांचकारणत्वमिति समुच्चयेनलक्षणस्यातिव्याप्त्या पूर्वपक्षेविष्णोरेवेत्यवधारणेनसिद्धांतः । तत्रतुविष्णोःकारणत्वेनेत्यसंभवेनपूर्वपक्षेस्ती तिसिद्धांतः । अतएवात्रटीकायांविष्णोरिवान्यस्याप्यस्तिनवेतिसंदेहः । कारणत्वस्यभगवदेकनिष्ठत्वाभावादितिपूर्वपक्षो पसंहारश्च तत्रतुयुक्तंनवेतिसंदेहः । नविष्णोःकारणत्वंसिध्यतीतिपूर्वपक्षोपसंहारश्च सुधापिअत्रातिव्याप्तिमाशंक्येति । तत्रतुशिवादीनामेवकारणत्वमितिविस्तरस्तुचंद्रिकायांद्रष्टव्यः ॥ ३ ॥ जगत्कारणत्वेन जगत्कारणत्वमित्यनेन-प्रकारेण एवमग्रेपि । तज्जगत्कारणत्वेनशास्त्रयोनित्वं । पूर्वोक्तिः कारणस्यशास्त्रयेनित्वाद्विष्णुरेवकारणमित्युक्तिः प्रतीतिः एकोरुद्रोनद्वितीयोवतस्थे एकोनारायणआसीदित्यादिना अप्रामाण्येन नैवशास्त्रंकुवर्त्मतदित्युक्तरीत्या प्रतीति सध्रीचीनस्येति प्रतीतिसाहित्येन समीचीनस्येत्यर्थः ॥ ॐ ॥ **तत्तुसमन्वयात्** ॥ ॐ ॥ जन्मादिकारणत्वेनशास्त्रगम्यं

तत्तुविष्णवाख्यंब्रम्हैव कुतःसमन्वयात् बलाबलत्वादिनासम्यग्विचारितोपक्रमादिप्रमाणादित्यर्थः। प्रकरणादिरूपक्रमः तदंतउपसंव्हारइत्यत्रस्फुटत्वादभ्यासादेर्लक्षणमाह । एकप्रकारेत्यादिना असकृत् अनेकवारं यथाहोदर्शनीयाहोदर्शनीयेत्यादि । ननुसमिधोयजति इडोयजति तनूनपातंयजति बर्हिर्यजति स्वाहाकारंयजति इतिभिन्नप्रकारयुतेअभ्यासेइदंलक्षणमव्याप्तं । नचतत्रापियजेत्यंशे एकप्रकारोस्तीतिवाच्यं तथात्वेघटोस्तिपटोस्तिइत्यत्रातिव्याप्तेः । तत्राप्यस्तित्वांशे एकप्रकारोक्तिसत्वादितिचेत् सत्यं अभ्यासोद्विविधः तात्पर्यनिश्चायकः कर्मभेदप्रयोजकश्च । तत्राद्यः एकप्रकारासकृदुक्तिरूपः । अपरस्त्वसकृदुक्तिमात्ररूपः । इदानींतात्पर्यनिश्चायकस्यैवलक्ष्यत्वान्नेतरत्रातिव्याप्तिरिति ॥ प्रमाणांतरेणासिद्धार्थेति ॥ प्रमाणांतरेणाग्राह्यतेत्यर्थः । यथेश्वरसार्वज्ञप्रतिपादकंयःसर्वज्ञइत्यादि नन्वेतदनुपपन्नं । ईश्वरसार्वज्ञस्य स्मृतिवाक्येनकार्यत्वाद्यनुमानेनच । प्राप्तत्वेनमानांतराप्राप्तत्वाभावादितिचेन्न प्रमाणलक्षणटीकानुसारेणप्राचर्येतिपूरणात् । तथाचस्वबोधनीयपुरुषगताज्ञानादिविरोधिनास्वानुपजीविमानांतरेणाग्राह्यार्थत्वंपर्यवस्यति । अस्यार्थः स्वंशब्दस्तेनबोधनीयोयःपुरुषस्तद्गतंयदज्ञानादितद्विरोधिना स्वंशब्दस्तदनुपजीविमानांतरेणाग्राह्यार्थत्वमिति अत्रस्वानुपजीविमानांतरेणेत्यनेनोक्तचोद्यनिरासः स्मृतिवाक्यकार्यत्वाद्यनुमानयोःशब्दोपजीवित्वात् । तावन्मात्रस्य लक्षणत्वेअसंभवः सार्वज्ञादिरूपवेदार्थस्यशब्दानुपजीवीश्वरप्रत्यक्षग्राह्यत्वात् । अतःस्वबोधनीयपुरुषगताज्ञानादिविरोधेनेति । ईश्वरस्यवेदबोधनीयत्वाभावात् वेदबोधनीयास्मदादिगताज्ञानादिकं प्रतीश्वरप्रत्यक्षस्य विरोधित्वासंभवाच्चासंभवपरिहारः टीकानुसारेण प्रमाणांतराप्राप्तार्थत्वमित्युक्ते प्रत्यक्षापेक्षया पूर्वप्रवृत्ते अग्निर्हिमस्यभेषजमित्यादिवाक्येतिव्याप्तिः । तत्रापिस्वबोधनीयपुरुषगताज्ञानादिविरोधिना स्वानुपजीविना स्पार्शनप्रत्यक्षेण

वह्न्यौष्णस्याप्रासत्वात् । अतोमानांतराग्राह्येति । औष्ण्यस्यप्रत्यक्षाप्राप्तत्वेपि तद्ग्रहणयोग्यत्वेन तद्ग्राह्यत्वाभावान्नाति व्याप्तिरिति । फलवत्त्वमिति । फलप्रतिपादकत्वमित्यर्थः । यथामृतोवावसोमपोभवतीत्यादिरर्थवादइत्याभियुक्तप्र- योगोवाविधिशेषत्वंवार्थवादइतितल्लक्षणस्य स्फुटत्वात् तद्विशेषानेवाह ॥ स्तुतिरिति ॥ वायुर्वैक्षेपिष्ठादेवतेत्यादिस्तु तिः । प्लवाह्येतेअदृढायज्ञरूपाइत्यादिनिंदा । कर्तृनामनिर्देशपूर्वकमितिहासः । परकृतिः यथाजनकोवैदेहआसांचक्रे- त्यादि । सामान्यतः कथाकथनंपुराकल्पः । यथात्रयोद्गीथेकुशलाबभूवुरित्यादि ॥ युक्तिरिति ॥ पूर्णत्वापूर्णत्वाभ्यां जीवे शभेदप्रतिपादकं । भिन्नोचिंत्यःपरमोजीवसंघातपूर्णःपरोजीवसंघोह्यपूर्णइत्यादि । उपक्रमोपसंहाराविति भाष्ये प्रत्येकवि वक्षया द्वाविवसमुदायविवक्षया तदैकरूप्यमपिविवक्षितं । तट्टीकायांतदनुक्तिश्चकंठतोऽनुक्तत्वादितिध्येयं । ननूपक्र मादीनामुपपत्तेःसकाशात्पृथगुक्तिरयुक्ता । इदंवाक्यमेतत्परं अबाधेसत्येतदुपक्रमवत्वादित्यादिरूपेण तेषामपिमहावा- क्यतात्पर्ये उपपत्तिरूपत्वादित्यतआह ॥ उपक्रमादीनामिति ॥ सन्यासिनां ब्राह्मणत्वेपि ब्राह्मणेअविद्यमानदं- डमुंडत्वादिविशेषवत्वाद्यथापृथगुक्तिः तथोपक्रमादीनां तात्पर्यनिर्णये उपपत्तित्वेपि अवांतरवाक्यार्थरूपस्वार्थे आगमरू पत्वं उपपत्तेश्च अयंतात्पर्यविषयउपपन्नत्वादितितात्पर्यनिर्णयइव ईश्वरोभिन्नःपूर्णत्वादित्यादिस्वार्थेप्युपपत्तिरूपत्वं अ तोविशेषादुपपत्तेःसकाशादुपक्रमादेः पृथगुक्तिरित्यर्थः । उदाहृतवाक्ये उपक्रमस्य प्राथम्यश्रवणादन्वयउपपत्यादि लिंगमितिकथमुक्तमित्यतआह ॥ उपक्रमादीनामिति ॥ अत्रानुव्याख्यानसंमतिमाह ॥ उपक्रमेति ॥ उत्तरो त्तरप्राबल्यमुपपादयति । उपसंहारस्येत्यादिना ॥ व्याख्यानरूपत्वेनेति ॥ ततसत्यमित्युपक्रमे श्रुतसत्यशब्दव्या ख्यानंसदितिप्राणस्तीत्यन्नंयमित्यसावादित्यइत्युपसंहारेणाक्रियते । अन्यथा प्रथमप्राप्तोपक्रमेणैवार्थबोधे प्रयोजनांत

राभावेनोपसंहारस्यवैय्यर्थ्यंस्यादितिभावः ॥ **उपक्रमाप्रामाण्येति** ॥ निश्चितप्रामाण्यव्याख्यानानुसारेण निश्चेतव्य प्रामाण्यव्याख्येयन्नाधस्य न्याय्यत्वादितिभावः ॥ **प्राबल्यमिति** ॥ सत्यशब्दादन्यप्राप्तिनिषेधकोदाहृतस्थलएव-दृष्टत्वादितिभावः ॥ **बहूक्तेःप्राबल्यादिति** ॥ बहुबाधस्यान्याय्यत्वादितिभावः ॥ **प्राबल्यमिति** ॥ यथा त स्यैषएवशारीरआत्मेतिशारीरशब्दबलाज्जीवप्रापकोपसंहारापेक्षयाऽसद्ब्रह्मेतिवेदचेदस्तिब्रम्हेतिचेद्वेदेतिब्रम्हशब्दाभ्या-सस्यप्राबल्यं । अत्रोपक्रमात्प्राबल्यकथनंवस्तुस्थितिप्रदर्शनार्थंनत्वावश्यकं । उपसंहाराधिक्येनैवोपक्रमाधिक्यासिद्धेः । उपसंहाराधिक्यस्यैवोपपादनाच्च । एवमग्रेपि ॥ **मुख्यस्येति** ॥ प्राचुर्येणाप्राप्तस्येत्यर्थः । असकृदावृत्तस्यापिसं भवदनेकार्थस्य स्वारसिकप्राप्तार्थत्यागेनावैय्यर्थ्यायाप्राप्तार्थतायाः आवश्यकत्वादितिभावः ॥ **प्राबल्यमिति** ॥ यथा जीवाद्भवंतिभूतानिजीवेतिष्ठंत्यचंचलाः । जीवंतुलयमिच्छंतीतिजीवशब्दाभ्यासापेक्षया प्रत्यक्षसिद्धयत्किंचिद्भूतक र्तृजीवंविना ब्रम्हग्रहणेनापूर्वतायाः प्राबल्यं ॥ **उद्देश्यत्वादिति** ॥ अपेक्ष्यत्वादित्यर्थः । अप्राप्तेनिष्फले तात्पर्या दर्शनात् प्राप्तेपिसफले तात्पर्यदर्शनादितिभावः ॥ **प्राबल्यमिति** ॥ यथाब्रह्मोत्पत्तिप्रतिपालकत्वेनापूर्वतायुक्तादप्य सतःसदजायतेतिवाक्यात् ब्रह्मानुत्पत्तिप्रतिपादकत्वेन तत्प्रीत्यामोक्षरूपफलवतः सदेवसौम्येतिवाक्यस्यप्राबल्यं ॥ **फलमात्रादिति** ॥ इष्टानिष्टकथनशून्यादित्यर्थः ॥ **प्राबल्यमिति** ॥ यथामृतोवावेतिफलवाक्यात्काम्यकरणे अनिष्टकथनस्य एव होते अदृढायज्ञरूपाइति निंदारूपार्थवादस्यप्राबल्यं ॥ **सर्वमूलत्वेनेति** ॥ उक्तरीत्योपक्रमादेरप्यु पपत्तिरूपेण तात्पर्यनिश्चायकत्वादितिभावः ॥ **प्राबल्यमिति** ॥ यथा तस्यतावदेवचिरमित्याद्यर्थवादोपेतादप्यभे दवाक्याद्भिन्नोचिंत्यइत्यादिसोपपत्तिकभेदश्रुतेः प्राबल्यं । लिंगमित्येकवचनंघटयंश्चतुर्थपादार्थमाह ॥ **एतदिति** ॥

यदर्थमुत्तरोत्तरप्राबल्यनिरूपणं तदाह । विरोधइत्यादिना बाधइत्यंतेन । उपक्रमादिष्वन्योन्यविरोधइत्यर्थः । एतदुदाहरणं पूर्वोक्तमेवध्येयं ॥ **साम्यइति** ॥ उपक्रमादिद्वयस्योपसंहारद्वयस्यवा समस्यविरोधे निरवकाशेन सावकाशंबाध्यमित्यर्थः । यथा प्राणोब्रह्म कंब्रह्म खंब्रह्मेतिप्राणब्रम्हणोरुपक्रमेपिश्रुतिलिंगादिना निरवकाशब्रम्होपक्रमेण प्राणोपक्रमबाधः ॥ **स्वभावेनि** ॥ उपक्रमादावुत्तरत्वंस्वभावप्राबल्यनियामकं ॥ **बाधोभवतीति** ॥ यथाऽदितेरादितित्वमिति स्वभावप्रबलोपसंहारादवितिप्रतीतावपि नैवेहकिंचनेतिनिरवकाशोपक्रमेण सावकाशोपसंहारस्यबाधः । एकेनानिरवकाशेन अनेकेषां सावकाशानांबाधइति । यथा एकमेवाद्वितीयं तत्वमस्यथसंपत्स्यतइत्यभेदप्रापकाणांक्रमेणोपक्रमोपसंहारफलानां शकुनिसूत्रदृष्टांतोपपादकभेदोपपत्याबाधः । ननुबाधेसत्यर्थांतरपरत्वं सावकाशत्वं दुर्बलत्वमपीदमेवार्थांतरपरत्वाभावोनिरवकाशत्वं प्राबल्यमपीदमेवातोबाध्यत्वेसावकाशत्वंबाधकत्वे निरवकाशत्वंप्रयोजकमित्येववाच्यं । नतूभयोरुभयत्रप्रयोजकत्वमितिशंकते ॥ **नन्विति** ॥ निर्णयः । बाध्यबाधकव्यवस्था । अन्यथाद्वयोरपिनिरवकाशत्वे ॥ **वाक्येति** ॥ उपक्रमाद्यवांतरवाक्येत्यर्थः । वाक्यार्थेद्वैरूप्यायोगादितिभावः । अर्थांतरपरत्वसाम्येपि व्याख्यातृव्यापारसापेक्षत्वनिरपेक्षत्वाभ्यांविशेषइत्याह ॥ **मैवमिति** ॥ **अर्थांतरकल्पनमिति** ॥ बलाल्लक्षणादिनार्थांतरकल्पनंव्याख्यात्राकार्यमित्यर्थः । इदंदुर्बलत्वंनाम यथोपजीव्यत्वादिना प्रबलभेदग्राहिसाक्ष्यादिप्रमाणविरोधेन तत्वमसीत्यादेः साद्दश्येलक्षणा । स्वयंव्याख्यातृप्रयासमनपेक्ष्ययथानिरवकाशपरोवरीयस्त्वादिलिंगविरोधेनाकाशश्रुतेरासमंतात्काशतइत्याकाशइतियोगेनाविष्णुपरत्वं सावकाशत्वदुर्बलत्वयोर्भेदेतद्विरुद्धानिरवकाशत्वप्राबल्ययोर्भेदःस्फुटएवेतिनोक्तः । ननूपक्रमादीनांसप्तानामेव तात्पर्यलिंगत्वेकथमुत्तरत्रश्रुत्यादिनानिर्णयइत्यतआह ।

**अत्रेति** ॥ **उपपत्यादीति** ॥ भाष्यं आदिपदार्थत्वेनेत्यर्थः । तत्स्वरूपं वामनाधिकरणेस्फुटीभविष्यतीतिभावः । तर्ह्युपक्रमादिभिरेवरुद्रादिनिर्णयोस्त्वित्यतआह ॥ **तैश्चेति** ॥ कर्मविधात्री प्रातःसंध्यामुपासीतेत्यादिका । विष्णोःसिद्धत्वेनाविधेयत्वाभावादाह ॥ **मांप्रत्येवेति** ॥ मत्प्रीत्यर्थमेवकर्मादिविधत्तइत्यर्थः । इंद्राद्यभिधात्री । इंद्रश्रेष्ठानीत्यादिका । मामभिधत्ते परममुख्यवृत्या । विविधरूपत्वेन वासुदेवादिरूपत्वेन । कल्प्यः ज्ञेयः । अप्रियत्वादपोह्यइति मदप्रीतिसाधनत्वादेवसुरापानादिकंनिषिध्यतइत्यर्थः । इत्यस्याः इत्यत्रेतिशब्दंव्याचष्टे ॥ **एवं भूतायाइति** ॥ **इत्यभिप्रायमिति** ॥ अनेनास्याहृदयमित्यनयोर्मध्ये मांविधत्तइत्यादियोज्यमित्युक्तंभवति ॥ **उपलक्षितानंतेति** ॥ अस्मिन्नधिकरणे शास्त्रपदवाच्यानंतवेदादिसदागमानां जन्मादिकारणत्वादिलक्षणतदितरानंदादिगुणप्रतिपादकानां समन्वयस्योक्तत्वादितिभावः ॥ ४ ॥ **वाच्यत्वेति** ॥ उपलक्षणमेतत् । सुधोक्तरीत्या सर्वशब्दार्थसर्वशास्त्रप्रतिपाद्यत्वसमर्थनादित्यपिध्येयं । तेनसकलशास्त्रप्रतिपाद्यत्वसमर्थकगतिसामान्यसूत्रस्यैतदधिकरणांतर्भावउपपन्नः । ननूपक्रमादिलिंगबलाद्रुद्रादिशब्दोपेतशास्त्रस्यापिविष्णुरेवार्थइत्येवोक्तं नतुतस्यमुख्यत्वमित्यत आह ॥ **उपक्रमादीति** ॥ उपलक्षणमेतत् । सुधोक्तरीत्यासंशब्देनविष्णोर्मुख्यार्थत्वस्याप्युक्तत्वात् ॥ **वादीति** ॥ वाच्यत्वावाच्यत्ववादीत्यर्थः । तद्ब्रह्म नहीति वचनवृत्यालब्धस्यमुख्यार्थत्वादितिभावः । प्रकृतोपयोगायाह ॥ **तद्विषयश्चेति** ॥ शब्दत्वगाह्यविषयइत्यर्थः । एतदुपपादनायैवगुणराहित्यकथनमितिभावः । प्रोवाचेत्यनेनवचनप्राप्त्या अवचनेनेत्येतद्व्याहतमित्यतआह ॥ **वचनवृत्तिंविनेति** ॥ **उपदिदेशेति** ॥ विष्णुमितिशेषः । यच्छ्रोत्रेणेत्यत्र येनश्रोत्रमित्यनेनव्याहतमित्यतआह ॥ **पुरुषइति** ॥ भाष्ये यतोब्रह्मणःअप्राप्य अविषयीकृत्य मनसासहानिवर्तंत

इत्यर्थः । अव्ययं ह्रासरहितं । अनभ्युदितं वचनवृत्यानोक्तं । अभ्युद्यते व्यज्यते । श्रुतं ज्ञातं । यद्वाश्रुतिःस्वयंश्रोत्रशब्दं निर्वक्ति । येनेति । येनकारणेन इदंशब्दजातंश्रोत्रेणश्रुतं तेननिमित्तेन इदंश्रोत्रमुच्यते । शब्दग्राहित्वंश्रोत्रशब्दप्रवृत्तिनिमित्तमित्यर्थः । गोचराइंद्रियार्थाश्चेतिगोचरशब्दस्यपुल्लिंगत्वात्कथंगोचरमित्युक्तमित्यतआह ॥ त्रयीति ॥ स्त्रीशूद्रब्रह्मबंधूनांत्रयीनश्रुतिगोचरेतिप्रथमस्कंधेप्रयोगादितिभावः । त्रयी श्रुतिः श्रुतिगोचरा श्रवणविषयीभूता । उपलक्षणमेतत् । सुधोक्तरीत्याशब्दानां गवां ज्ञानानांचरश्चरणंवृत्तिर्यस्मिन्तच्छब्दगोचरमिति व्यधिकरणबहुव्रीहिर्वा चरश्चरणमस्यास्तीतिमत्वर्थीयाच्प्रत्ययांतत्वंवा श्रुत्यगोचरमित्यस्यसाधुत्वंद्रष्टव्यं । तेनाप्राप्यमनसासहास्पर्शमित्यादि श्रुतौ यदज्ञेयत्वमभिप्रेतंतदपिसंग्रहीतंभवति । अन्यथातदंशोदाहरणंनस्यात् । अतएवभाष्ये अवाच्यत्वादिकमित्यादि शब्दः तदवतारिकाग्रंथे अवाच्यत्वाज्ञेयत्वाभिधायकेतिटीकावचनं अतर्क्यमज्ञेयमित्यादिप्रमाणोदाहरणंचसंगच्छते । नचज्ञेयत्वसमर्थनमसंगतमितिवाच्यं । ईक्षणीयत्वहेतोरसिद्धिपरिहारार्थत्वात् । अतएवेक्षणीयत्वासिद्धिपरिहारकत्वेनगौणश्चेन्नात्मशब्दादितिसूत्रं नचगौणआत्माद्रष्टयइत्यादिनाभाष्येणव्याख्यातमितिबोद्धव्यं ॥ ॐ ॥ **ईक्षतेर्नाशब्दं** ॥ ॐ ॥ तद्ब्रह्म अशब्दं अवाच्यंन किंतुवाच्यमेव ईक्षतेः पुरुषमीक्षतेतिकर्मत्वव्यपदेशादित्यर्थः । श्रुतिमात्रं आपाततइतिशेषः ॥ **हिरण्यगर्भोपदेशेनेति** ॥ प्रणवेनहरिंध्यायन्ब्रह्मलोकंसमेत्यच । ज्ञानंचतुर्मुखात्प्राप्यमुच्यते नात्रसंशयइतिषट्प्रश्नभाष्योक्तेरितिभावः । पौनरुक्तिपरिहारायविज्ञायेत्येतद्व्याचष्टे ॥ **परोक्षतइति** ॥ ईक्षणीयत्वं ज्ञेयत्वं । ईक्षणस्य ज्ञानस्य ॥ **प्रत्यक्षादिनापीति** ॥ अतोन्यथाप्युपपत्तिरितिभावः । उक्तरीत्या शास्त्रयोनित्वादित्युक्तरीत्या ॥ **प्रत्यक्षाद्यवेद्यत्वेसतीति** ॥ आगमाननुसारिप्रत्यक्षाद्यवेद्यत्वेसतीत्यर्थः । तेनागमानुसारिप्रत्यक्षादि

वेद्यत्वाद्विशेषणासिद्धिरितिनिरस्तं ॥ **ईक्षणीयत्वान्यथानुपपत्त्येति** ॥ प्रमाविषयत्वान्यथानुपपत्त्येत्यर्थः । तेन भ्रांतिविषयत्वेनान्यथासिद्धिरितिनिरस्तं । एवमर्थापत्तिपरत्वेनव्याख्याय परिशेषपरत्वेनापिव्याचष्टे ॥ **परिशेषप्रमाणेनवेति** ॥ **प्रमाणेनेति** ॥ भ्रांतेरज्ञानावरकत्वेनप्रमाणेनमोक्षजनकेक्षणासंभवादितिभावः ॥ **अवाच्येवृत्त्यंतरेति** ॥ अवाच्येपिलक्षणांगीकारेऽनवस्थावक्ष्यतइतिभावः । अनेनावचनेनेतत्प्रकारांतरेणयोजितं ॥ **प्राबल्यमिति** ॥ तेषु त्रिष्वक्षादिकरणेषुमध्ये यदागमस्यप्राबल्यमुक्तं । तज्जात्यैवस्मृतं उत्सर्गेणैवस्मर्तव्यमित्यर्थः ॥ **श्रुतिस्मृतीचाहेति** ॥ श्रुतावाङ्गसाक्षाद्वाच्यत्वोक्तेः स्मृतौकर्मादीनामपिवेद्यत्वादहमेवेत्यवधारणानुपपत्त्यातदुपपत्तयेऽन्येषांमुख्यतयावेद्यत्वेपि हरेःपरममुख्यवृत्त्यावेद्यत्वस्यवक्तव्यत्वात्तस्यचवाच्यत्वं विनायोगात्तत्सिद्धिरितिभावः । भाष्ये वेदांतकृत् वेदनिर्णायकब्रह्ममीमांसाकर्ता । यत्प्राति यत्प्रीत्यर्थं अप्रसिद्धिनिमित्तकावाच्यत्वस्यत्रास्तव्यत्वेव्याहतिरित्यतआह ॥ **अवाच्यत्वादिव्यपदेशइति** ॥ व्यवहारइत्यर्थः । सर्वागमोक्तस्यकथमप्रसिद्धत्वमित्यतआह ॥ **साकल्येनेति** ॥ **अप्रसिद्धैवेति** ॥ पश्यंतोपिनपश्यंतीत्यनयोर्विरोधपरिहारायसाकल्येननपश्यंतीतिवाच्यं । तदेवचाप्रसिद्धत्वमितिभावः ॥ **अन्यथानुपपत्तीति** ॥ वाच्यत्वसाधकप्रमाणान्यथानुपपत्तीत्यर्थः । इयम् अप्रसिद्धत्वादवाच्यत्वादिरूपा ॥ **अप्रसिद्धिप्रसिद्धिभ्यामिति** ॥ तथाचाप्रसिद्धेरतर्क्यंमज्ञेयंप्रसिद्धेस्तर्क्यंज्ञेयंचेतिव्याख्येयमितिभावः । अत्रज्ञेयत्वमागमानुकूलप्रत्यक्षेण वचनतर्कयोःपृथगुक्तेरितिध्येयं । तदीयाधिकरणंसंक्षेपतोनुवदति ॥ **जगत्कारणत्वमिति** ॥ **सदेवेति** ॥ सदेवसौम्येदमग्रआसीत् एकमेवाद्वितीयं तदैक्षत बहुस्यांप्रजायेयेति तत्तेजोसृजतेत्यादावित्यर्थः ॥ **प्रधानमितिप्राप्तमिति** ॥ चेतनस्यब्रह्मणोऽपरिणामितया क्रियाकर्तृत्वलक्षणसच्छक्त्य

संभवात्प्रधानस्यतत्संभवादितिभावः ॥ **श्रौतेनेति** ॥ श्रुत्युक्तेत्यर्थः ॥ **ईक्षणश्रवणादिति** ॥ तस्यजडेऽसंभवा दितिभावः । अशब्दमित्यंशोक्तहेतुमाह ॥ **अशब्दमिति** ॥ प्रधानस्यश्रुत्यप्रतिपाद्यत्वात्तच्छ्रुत्युक्तकारणंनभवतीत्यर्थः । इतरशब्दस्यमायिपरत्वमुपेत्य प्रकारांतरमाह ॥ **नापीति** ॥ **श्रुतत्वादिति** ॥ तत्रलोहितशुक्लकृष्णमिति त्रिगुणात्मकत्वरूपतल्लिंगश्रवणादितिभावः । अन्यत्तेजोबन्नात्मकं अत्रोक्तरूपाणां यदग्नेरोहितंरूपं तेजसस्तद्रूपं यच्छुक्लंतदपां यत्कृष्णंतदन्नस्येति तेजःप्रभृतिषुप्रसिद्धत्वादितिभावः ॥ **नाममात्रेति** ॥ तेजोबन्नात्मकस्यैवप्रधानत्वादितिभावः । अतएवाह ॥ **अर्थांतरस्येति** ॥ इत्थंव्याख्यानंस्वव्याहतंचेत्याह ॥ **किंचेति** ॥ **ईक्षतिस्वरूपत्वादिति** ॥ क्रियारूपस्य क्रियाश्रयत्वरूपकर्तृत्वानुपपत्तिरितिभावः । ननुतदैक्षत तत्तेजोसृजतेतिजगत्कारणत्वेनोक्तस्येक्षितृत्वमंगी क्रियते जगत्कारणंचनेक्षारूपंशुद्धं किंतुमायाविशिष्टंशबलमेव अतोनोक्तदोषइत्याशंकते ॥ **जगत्कारणस्येति** ॥ जगत्कारणत्वेनोक्तंशुद्धमेवेतिपरिहरति ॥ **नेति** ॥ आदिसूत्रेजिज्ञास्यत्वेनोक्तस्यैवद्वितीयेजन्मादिकारणत्वेनोक्तत्वा दितिभावः । जिज्ञास्यंतुशुद्धमेवेतिभावः । विशिष्टमेवजिज्ञास्यमस्त्वित्यतआह ॥ **नहीति** ॥ **अप्रयोजकत्वादिति** ॥ प्रयोजनविकलत्वादित्यर्थः । विशिष्टस्यमिथ्यात्वेन तद्ज्ञानस्यभ्रमत्वेनमोक्षाहेतुत्वादितिभावः । ननुनविशिष्टमीक्षितृ येन जिज्ञास्यत्वायोगः । किंतु विशिष्टांतर्गतंविशेष्यभूतंशुद्धमेव । नचतस्येक्षारूपत्वविरोधः । केवलवन्हेः रोगनिवर्तकत्वा योगेप्ययःपिंडसमारूढस्य तथात्ववदीक्षारूपस्यापि शुद्धस्यमायासंबंधेनेक्षितृत्वसंभवादित्याशंक्य किंश्यामेप्याम्रफले सौरातपसंबंधात्पीतरूपमिवशुद्धेपि माययेक्षणंसंभवतीतिविवक्षितं उत विशिष्टगतंविशेष्ये केनचित्संबंधेनोपचर्यत इतिपृच्छति ॥ **किंचेति** ॥ माययेक्षणंचाकिमित्यर्थः । एतेनविशिष्टपक्षएवदूषणांतरप्रतिज्ञाने तेनापिविशिष्टस्यदृश्य-

त्वांगीकारेण दृश्यत्वाद्यपिकिंनस्यादितिदूषणाभिधानमसंगतमितिनिरस्तं ॥ **दृश्यत्वाद्यपीति** ॥ केवलस्यवन्हे रित्यादिन्यायसाम्यात् । तथाचमिथ्यात्वंस्यादितिभावः ॥ ॐ ॥ **गौणश्चेन्नात्मशब्दात्** ॥ ॐ ॥ पुरुषमीक्षत इत्यादावीक्षणकर्मत्वेनोक्तोगौणस्त्रिगुणसंबद्धोजीवएव नविष्णुरितिचेन्न । आत्मानंपश्येदित्यादावीक्षणकर्मणि विष्णु मात्रनिष्टात्मशब्दश्रवणादित्यर्थः ॥ **गौणेति** ॥ सत्वादिगुणबद्धेत्यर्थः । ईक्षतिश्रुत्युक्तंनिर्गुणमेवास्त्वित्यतआह ॥ **गौणग्रहणइति** ॥ भाष्योदात्हृतेविज्ञाय प्रज्ञामित्यंशे आत्मशब्दाभावात्पूर्वांशमुदाहरति ॥ **अजइति** ॥ ध्रुवः निश्चलः । आनंदादिभ्रमंवारयति ॥ **सत्वादिभिरिति** ॥ **अत्युपादेयइति** ॥ अनेनहेयत्वसहितोपादेयत्वा भाववानित्यर्थउक्तोभवति ॥ **हृदित्येषइति** ॥ अस्यजीवपरत्वंत्हृदादिहीतिसूत्रसिद्धमितिभावः । **भाष्ये अनात्मनि जीवे** ॥ **सोपचारइति** ॥ परममुख्यत्वापेक्षया नतुगौण्यावृत्या ॥ **स्वरूपप्रतिमाभिप्रायइति** ॥ आत्मनिस्वरूपाभि प्रायअनात्मनिप्रतिमाभिप्रायइत्यर्थः ॥ **सयइति** ॥ सःप्रसिद्धोयइत्यर्थः । तेननतच्छब्दांतरवैयर्थ्यमितिभावः । जी-वस्यापिनित्यत्वादाह ॥ **देहहानीति** ॥ जडामिश्रः प्राकृतदेहरहितः ॥ **गौणाश्रयणादिति** ॥ अमुख्याश्रयणा-दित्यर्थः । तर्हिकोर्थइत्यतआह ॥ **चेतनेति** ॥ किमत्रनियामकमतआह ॥ **तथाचेति** ॥ चेतनाचेतनपरत्वे आत्मा-नात्मशब्दयोश्चेतनाचेतनपरतया सिद्धत्वेनतदबाधनाद्रूपशब्दस्यप्रतिमारूपार्थत्वसंभवेन अनेकार्थत्वस्यअकल्पनाच्च द्वेवा वेतिश्रुतेः ऋजुत्वंसंभवतीत्यर्थः । आत्मशब्दस्यचेतनमात्रपरत्वे यश्चदोषविवर्जितइत्याद्यनुपपत्तिरित्यतआह ॥ **निर्दो षत्वादेरिति** ॥ जीवात्मन्यपि दुःखादिदोषऔपाधिकएवेतिभावः ॥ ॐ ॥ **तन्निष्ठस्यमोक्षोपदेशात्** ॥ ॐ ॥ तन्निष्ठस्यात्मज्ञानिनः यस्यानुवित्तःप्रतिबुद्धआत्मा तस्यलोकःसउलोकएवेतिमोक्षाभिधानान्नात्मशब्दोक्तोगौणइत्यर्थः ।

असौआत्मा ॥ **गुणबद्धेति** ॥ एतत्सूचनार्थमेवपूर्वसूत्रेजीवइत्यनुक्त्वागौणइत्युक्तमितिध्येयं । कः कुत्रत्यः विश्वकृच्छ-
ब्दार्थोवायुकर्तेति । विशतिदेहिनांहृदयगुहां वातिचश्वासोच्छ्वासादिरूपेणेतियोगाद्विश्वोवायुःसमुद्दिष्टइत्युक्तेः । विश्वोहि
रण्यगर्भइत्यादौविश्वशब्दस्यवायौप्रयोगाच्च । अतोनसर्वस्यकर्तेत्यनेनपुनरुक्तिरितिभावः । प्रतिबुद्धशब्दार्थः सर्वज्ञइति ।
संदोहशब्दार्थोदेहइति तस्यकार्यकारणसंघातत्वात् । गहनशब्दार्थोगुहाशब्दार्थइति । यस्येत्यस्य येनेति अनुवित्तइत्यस्य
ज्ञातइति । तेननप्रतिबुत्थइत्यनेनपौनरुक्त्यमितिभावः । उच्चत्वादुकारवाच्योविष्णुस्तल्लोकउलोकइत्याशयेनोक्तंवि-
ष्णुलोकइति । भाष्ये अयमितिश्रुतिः । तत्रश्रीब्रह्मादिनियामकत्वेनप्रकृतस्यायामितिपरामर्शः । वदंतितत्तत्वविदस्तत्वं
यद्ज्ञानमद्वयं । ब्रह्मेतिपरमात्मेतिभागवतवाक्यं । अनसूयातथैवात्रेर्जज्ञेपुत्रानकल्मषान् । दत्तमित्यपिभागवतवाक्यं ।
अत्रदत्तात्रेयस्य आत्मशब्दितविष्णवतारत्वमुक्तं । ब्रम्हणोनावतारोस्ति सन्निधानंतुकेवलमितितात्पर्यात्सोमस्यब्रम्हावे
शावतारत्वंज्ञेयं । जज्ञे जनयामास । चेतनस्तुद्विधाप्रोक्तइत्यत्रजीवशब्दांजीवेशयोर्भिदाचैवेत्यादाविवास्वतंत्रचेतनपरः । तेन
रमायाअपिसंग्रहः नचजीवाब्रम्हादयइत्यनुपपत्तिः । ममयोनिर्महद्ब्रह्म तस्मिन्गर्भंदधाम्यहमितितस्यामपिब्रह्मशब्दार्थप्र-
वृत्तेः प्रकृतोपयोगायाह । स्वतंत्रइति ॥ ॐ ॥ **हेयत्वावचनाच्च** ॥ ॐ ॥ नगौणआत्मशब्दोक्तः । तमेवैकंजानथा
त्मानमन्यावाचोविमुंचथेतिआत्मशब्दार्थस्यहेयत्वावचनात् । प्रत्युताहेयत्ववचनात् । अन्यस्यहेयत्ववचनाच्चेत्यर्थः
॥ **हेयत्वप्रसंगादिति** ॥ मुमुक्षुणेतिशेषः । गौणस्यवक्ष्यमाणरीत्याहेयत्वादितिभावः । अस्य तमेवेतिश्रुत्युक्तस्य
जानथ विजानथ । अन्याःभगवदितरविषयकाः । ननु सगुणानामपि ब्रह्मादीनामंगावबत्थास्वित्यादावहेयत्वंवक्ष्यति
सूत्रकारः । सत्यं अत्रप्राधान्येनहेयत्वमुच्यते । तत्रतु परिवारतयोपास्यत्वमिति नविरोधः ॥ **मोक्षदातृत्वेनेति** ॥

तथाचबाधकवशादात्मन्येवात्मानं अजआत्मा तमेवैकमित्यादौ तत्यागेपीक्षितिश्रुतौबाधकाभावाज्जीवग्रहणंसंभवतीति भावः ॥ ॐ ॥ **स्वाप्ययात्** ॥ ॐ ॥ आत्मन्येवात्मानंविलापयतीतिश्रुतिप्रतिपाद्यत्वान्नानिर्गुणमवाच्यं । श्रुत्युक्तानि गुणंकुतइतिचेत् । स्वाप्ययात् स्वस्यस्वस्मिन्लयाभिधानादित्यर्थः । तद्वताराख्यं । उद्रिच्यते बहिर्निःसरति । स्वस्य मूलरूपस्य । स्मृत्यनुसारेणतात्पर्यमाह ॥ **एकीभूयइति** ॥ अनेनभगवद्रूपाणामेकीभावएवलयइत्युक्तंभवति । अवधारणार्थोअन्यत्रालीनएवेति ॥ **श्रुत्युक्तत्वादिति** ॥ अवाच्ये वृत्त्यंतरायोगाछ्रुत्युक्तत्वंवाच्यत्वंगमयतीतिभावः ॥ **पूर्णत्वादिति** ॥ अनेनसूत्रोक्तस्वाप्ययउपलक्षकइतिसूचितं ॥ **अपूर्णत्वादिति** ॥ तथानुभवादित्यर्थः ॥ **अन्यस्मिन्निति** ॥ यत्प्रयंतीत्यादेरितिभावः ॥ **अन्यत्रालीनोपीति** ॥ तथाचगौणोद्विविधः । अन्यत्रलीनोऽन्यत्रालीनश्चेति । तत्राद्यउक्तप्रकारेणानुभवसिद्धः । द्वितीयस्त्वेतछ्रुत्युक्तइतिभावः । तर्हिनिर्गुणाभावप्रसंगइत्यतआह ॥ **निर्गुणइति** ॥ एतछ्रुत्युक्तादन्यएवकश्चिदस्तीतिभावः । इदमस्यजगतः । तत्रनिर्गुणादन्यस्यलयं विनावस्थाननिषेधादितिभावः ॥ **अवस्थानेति** ॥ अवस्थानतेत्यर्थः ॥ **यत्प्रयंतीति** ॥ तदुक्तस्य तद्विजिज्ञासस्वेतिजिज्ञास्यत्वोक्त्यानिर्गुणत्वावगमात्तस्मिन्सगुणानामिमानिभूतानीत्युक्तानांलयोक्तेरितिभावः । इयंस्वाप्ययरूपा तथाचसूत्रे चशब्देनभाव्यमितिभावः । तत्रसूत्रे प्रकृतत्वान्निर्गुणस्येतिवक्तव्ये निर्दोषस्येतिवचनंकिमर्थमतआह ॥ **अत्रेति** ॥ सूत्रादावित्यर्थः । उक्तमास्त्वित्यन्वयः । तच्चप्रतिपाद्यत्वमितिसंबंधः । तत्राप्युपक्रमादिभिर्विचारोविष्णोरेवतत्सेत्स्यतीत्यतआह ॥ **तासामिति** ॥ अनंतावैवेदाइतिश्रुतेरितिभावः ॥ ॐ ॥ **गतिसामान्यात्** ॥ ॐ ॥ नान्यत्रान्यथोच्यते । गतेःसर्वशास्त्रोत्पाद्यज्ञानस्य सामान्यात् समानत्वात् । सर्वेवेदाइत्यादावेकरूपत्वश्रवणादित्यर्थः । तथेतिहासइतिवक्ष्यमाणानुरो-

धेनाह ॥ इतिहासश्चेति ॥ वेदादिजन्यज्ञानानांव्यक्त्यैक्यायोगादाह ॥ एकविधमेवेति ॥ गतिसामान्यादिति-सूत्रस्यांतेनिवेशे पृथगधिकरणभ्रमःस्यादतोमध्येनिवेशः । नचाधिकरणांतरत्वमिष्टं । तस्यापि संशब्दार्थसमर्थनपरत्वे न पृथक्प्रयोजनशून्यत्वादितिसुधायांव्यक्तं ॥ ॐ ॥ श्रुतत्वाच्च ॥ ॐ ॥ केवलोनिर्गुणश्चेति सत्वादिगुणहीनस्य श्रुतत्वाच्छ्रुतिप्रतिपाद्यत्वाच्च नाशब्दमित्यर्थः । स्थितिमात्रं । आकाशवत् ॥ श्रुतत्वाच्चेति ॥ नन्वेतत्स्वाप्ययादि त्यनेनपुनरुक्तमितिचेन्न । तत्र स्वाप्ययत्वपूर्णत्वरूपनिर्गुणधर्मप्रतिपादनद्वारा निर्गुणस्य श्रुत्युक्तत्वमभिप्रेतं । अतएव तत्रश्रुत्युक्तत्वाच्चेत्यध्याहृतसूत्रविन्यासःप्रदर्शितः । अत्रतुसाक्षादेवनिर्गुणस्यश्रुतिप्रतिपाद्यत्वमभिप्रेतं । अतएवात्रनिर्गु-णपदोपेतश्रुत्युदाहरणमितिध्येयं ॥ वेदावाच्येति ॥ वेदगतपदवाच्येत्यर्थः । ननु घटादिपदार्थानामलक्ष्यत्वेनसपक्ष त्वात्तत्रावर्तमानोहेतुरसाधारणइत्यतआह ॥ सर्वपदार्थानामिति ॥ प्रयोगविशेषइतिशेषः । परिहरति ॥ किंप्र-योजकांतरमिति ॥ लक्ष्यत्वइतिशेषः । प्रयोजकत्वप्रकारं । वाच्यत्वस्य केवलान्वयीतिदृष्टांतार्थं । ब्रह्म वाच्यं ल-क्ष्यत्वादित्यभिप्रेतकेवलान्वयिनिर्वाहार्थंवा तदेवव्यनक्ति ॥ केवलान्वयिनीति ॥ तदिति ॥ तेन साध्याभावे-नाविनाभावोव्याप्तोयोऽभावउपाधेःप्रतियोगितासंबधेनतद्वत्वाभावादित्यर्थः । साध्याभावव्याप्ताभावप्रतियोगिनएव-उपाधित्वं । साध्याभावाविनाभावीसउपाधिर्यदत्ययइत्युक्तेः । अन्यथोपाध्यभावेनसाध्याभावसाधनायोगइतिभावः । व्याप्त्यनिश्चयात् साध्योपाध्योरितिशेषः ॥ व्याप्तिरेवेति ॥ यथा धूमस्याग्निसद्भावप्रयोजकत्वे व्याप्तिरेवनियामि का तथावाच्यत्वस्याप्युक्तलक्ष्यत्वप्रयोजकत्वेव्याप्तिरेवप्रयोजिकेत्यर्थः । असौ व्याप्तिः । धूमादिस्थलेच कार्यकारण भावनिबंधना नचात्रतथेतिभावः ॥ किंनिबंधनेति ॥ तयोःकार्यकारणभावाभावादितिभावः । ननु संयोगिताया-

द्रव्यत्वाघवच्छेद्यत्वहानिरेवविपक्षेबाधिकातयोर्व्याप्तिनिबंधनेतिचेत् । तर्हीहाप्यनवस्था विपक्षेबाधिकाव्याप्तिनिबंधनमित्यभिप्रेत्याह ॥ **अवाच्यस्येत्यादिना** ॥ **किंलक्ष्यमितिप्रश्नस्येति** ॥ सत्यज्ञानादिवाक्येसत्यपदेनकिंलक्ष्यमितिप्रश्नस्येत्यर्थः । ननुनप्रश्नस्यनिरुत्तरत्वं । तद्ज्ञापनायलाक्षणिकसत्यपदस्यैवप्रयोगादित्यतआह ॥ **नचेति** ॥ कुतइत्यतआह ॥ **नहीति** ॥ तर्हि ज्ञानपदप्रयोगोस्त्वित्याशंक्याह ॥ **अथेति** ॥ नचानंतमितिवाच्यं । तेनापिकिंलक्ष्यमितिप्रश्नापर्यवसानेनानवस्थानादितिभावः । ननु नप्रश्नोत्तरपरंपरयाऽनवस्थावक्तुंशक्या । यत्रकोटिस्मरणादिविरहेण संदेहानुदयात्प्रश्नानुदयस्तत्रपरंपराविच्छेदादितिचेन्न । तात्पर्यानवबोधात् । तथाहि । गंगापदवाच्यप्रवाहसंबंधितयाज्ञातस्यैवतीरादेर्लक्ष्यतयादृष्टत्वाद्ब्रम्हणोपिलक्ष्यत्वेवाच्यसंबंधित्वेनतद्ज्ञानमावश्यकं । नचतद्ज्ञानंप्रत्यक्षादिना । शास्त्रयोनित्वादतःशब्देनैवतद्ज्ञानंवाच्यं सोपिशब्दोलक्षकएव । अतस्तत्रापिवाच्यसंबंधितयाब्रह्मज्ञानायपदांतरंप्रयोक्तव्यं । तदपिलक्षकमेवेतिपरंपरापर्यवसानेनानवस्थेत्यत्रतात्पर्यात् । यथोक्तंसुधायां । नहिप्रश्नपरिहारक्रमनिमित्तेयमनवस्था किंतुलक्षणायाःप्रतीतिपूर्वकत्वाच्छब्देनविना प्रत्यायकांतराभावात् । तत्रापिलक्षणाश्रयणेमूलक्षतिरिति । ननुसत्यादिपदेषुब्रह्मपदंवाचकं । अतोत्रपरंपराविच्छेदान्नानवस्थेतिशंकते ॥ **अथेति** ॥ **किमपराद्धमिति** ॥ अविशेषादितिभावः । विशेषंशंकते ॥ **लक्ष्यपरेति** ॥ ब्रह्मपदप्रतिपाद्य ब्रम्हस्वरूपलक्षणमुख्यार्थबाधोनास्तीति तस्यवाचकत्वं । सत्यादिपदानांसत्यत्वादिगुणाभिधायकत्वेन गुणानांच निर्गुणेब्रह्मण्यसंभवान्मुख्यार्थबाधोस्तीतितेषांलक्ष्यकत्वमित्यर्थः । गूढाभिसंधिराह ॥ **लक्षणपदानामपीति** ॥ सत्यादिपदानां सत्यत्वादिविशेषाननर्प्यस्वरूपमात्रपरत्वेपर्यायत्वप्रसंगाद्ब्रम्हणिविशेषसमर्पकत्वेनैवतेषांप्रवृत्तिरंगीकार्या । अतोमुख्यार्थबाधकाभावाद्वाचकत्वमेवेत्यर्थः । विशेषानर्प-

कत्वेपर्यायत्वमित्यभिप्रायोत्रगूढः । अभिप्रायमविद्वान्शंकते ॥ लक्षणपदानामिति ॥ तथाचविशेषावलंबनमसिद्ध मितिभावः । आशयमुद्घाटयति ॥ पर्यायतेति ॥ स्वरूपलक्षणैकार्थत्वात् । तथाच सहप्रयोगानुपपत्तिरितिभावः । ॥ प्रयोजनबाहुल्यादिति ॥ सत्यपदेनासत्यव्यावृत्तिःक्रियते । ज्ञानपदेनाज्ञानव्यावृत्तिरित्यादिप्रयोजनभेदादि-त्यर्थः ॥ प्रश्नाननुगुण्याच्चेति ॥ ब्रह्मविदाप्नोतिपरमिति ब्रह्मज्ञानेनमोक्षेभिहिते किंतद्ब्रह्मेतिप्रश्ने लक्षणकथनस्यैव संगतत्वादितिभावः । तर्हि स्वरूपविषयएवायंप्रश्नोस्त्वित्यतआह ॥ नहीति ॥ स्वरूपज्ञानाभावे धर्मिज्ञानाभावादिति भावः । अतःपर्यायतापत्तेः । ननुवाच्यत्वपक्षेप्यनवस्था । तथाहि । वाच्यत्वेपि सत्यादिपदस्यवाच्यवाचकसंबंधरूप-संगतिज्ञानसहकृतस्यैवतत्प्रबोधकत्वंवाच्यं । अन्यथातिप्रसंगात् । वाच्यवाचकसंबंधज्ञानंच संबंधिज्ञानंविना नजायते । संबंधिनौ वाच्यवाचकावेव । वाच्यंचब्रह्मैव । नचतदज्ञानं प्रत्यक्षादिनेतिवाचकपदांतरंवाच्यं । तदपि वाच्यवाचक संबंधज्ञानपूर्वकमेवबोधकमितिपरंपरायाऽपर्यवसानादितिचेन्न । सत्यज्ञानादिपदानांयौगिकत्वेन वाक्यतुल्यत्वात् । वाक्येचवाच्यवाचकसंबंधज्ञानानपेक्षणात् । स्पष्टंचैतदभिमान्याधिकरणसुधायां ॥ ५ ॥ ब्रह्मस्वरूपनिरूपणइति ॥ आद्यसूत्रे जिज्ञास्यतयोक्तब्रह्मस्वरूपस्य द्वितीयतृतीयसूत्रोक्तलक्षणप्रमाणाभ्यांस्वेतरसकलवस्तुव्यावृत्ततया निश्चितत्वा त्तत्रप्रवृत्तबाधकानां चतुर्थपंचमयोर्निरासान्नकिमपि निरूप्यमवशिष्टमित्यर्थः । एवकारार्थमाह ॥ कृत्यांतराभावे-पीति ॥ अभ्युपगम्येदमुदितं । ब्रह्मणोवयवत्वश्रवणान्नजिज्ञास्यत्वमित्यादिबाधकानांतत्रतत्रपरिहारादितिध्येयं । समन्वयशब्दार्थः शास्त्रीयशब्दानामुपक्रमाद्यन्वयात्सम्यङ्निरूपणमिति । अनेनसम्यगन्वयः शक्तितात्पर्यावगमोये-नानिरूपणेनभवतीतियोगेनवा हेतुभूतोपक्रमादिर्लिंगवाचकसमन्वयपदेन लक्षणयावा तत्साध्यंनिरूपणंग्राह्यमित्युक्तंभव

इति । तेनान्वयोपपत्त्यादिलिंगमितिभाष्यदिशा समन्वयशब्देनोपक्रमादिलिंगग्रहणेऽध्यायशेषेणोपक्रमादिलिंगप्रकटनाभावात्प्रकटयतीत्यस्यानुपपत्तिः । सुधोक्तरीत्या शक्तितात्पर्यलक्षणावगमसंबंधज्ञानेपि तथैवेति निरस्तं ॥ प्रतिवाक्यग्रहणेनेति ॥ उदाहरणत्वेनेति शेषः । अन्यदेव रुद्राद्येव कारणमिति शेषः ॥ शंकोत्थानायेति ॥ सूत्रानुदाहरणे आनंदमयरूपविषयपरिज्ञानाभावेन अस्य विष्णुत्वसमर्थने कापूर्वसंगतिरित्येवंरूपशंकानुदयादिति भावः ॥ चतुर्थपाद इति ॥ आद्यपादत्रये स्पष्टास्पष्टलिंगसमन्वयः चतुर्थे तु प्रधानस्य अशब्दत्वनिराकरणमिति परैरंगीकारादिति भावः ॥ देवताद्यधिकरणेति ॥ तदुपर्यपि शुगस्येत्यनयोः क्रमेण देवशूद्रयोर्वेदविद्याधिकारविचारेण समन्वयानुक्तेरिति भावः ॥ एकेति ॥ समन्वयरूपेत्यर्थः । अस्मिन्पादे अन्यत्रप्रसिद्धनामात्मकशब्दसमन्वयनिरूपणे निमित्तं वक्तुमाह ॥ ॥ शब्दास्तावदित्यादिना ॥ नन्वन्यत्रप्रसिद्धा इति कोर्थः । किमन्यत्रैव प्रसिद्धा इत्युतान्यत्रापि प्रसिद्धा इति । प्रकारांतराभावात् । तत्र नाद्यः । चतुर्थपादे समन्वेतव्यान्यत्रैव प्रसिद्धशब्दसांकर्यात् । नापि द्वितीयः । उभयत्रप्रसिद्धशब्दसांकर्यात् । नच लोकतोन्यत्रैव प्रसिद्धाः अन्यत्रप्रसिद्धाः । श्रुत्यादितोऽन्यत्रैव प्रसिद्धाः अन्यत्रैव प्रसिद्धाः । अत एव लोकप्रसिध्या अन्यत्र निरूढानामिंद्रादिशब्दानां श्रुतिलिंगादिबलाद्विष्णौ समन्वयः प्राक्प्रतिपादितः । इदानीं श्रुतिलिंगादिभिरेवान्यत्रप्रसिद्धानामपि शब्दानां समन्वयनिरूपणान्नैतत्पादवैयर्थ्यं । अनेनैवाभिप्रायेणान्यत्रैवेत्युक्तिरिति चतुर्थपादीयटीकेति वाच्यं । तथात्वे । अन्यत्रप्रसिद्धत्वेनाभिमतसर्वगतत्वादेरादित्यश्रुत्यादिनान्यत्रप्रसिद्धेर्वक्ष्यमाणत्वेन तस्यान्यत्रैव प्रसिद्धतापत्तेः । नच प्रबलश्रुत्यादिभिरन्यत्रप्रसिद्धा अन्यत्रैव प्रसिद्धाः । श्रुतिलिंगादिमात्रेणान्यत्रप्रसिद्धा अन्यत्रप्रसिद्धा इति भेद इति वाच्यं । अन्यत्रैव प्रसिद्धाव्यक्तादिशब्दानामन्यत्रप्रसिद्धिसाधकाव्वरत्वादीनामि-

वान्यत्रप्रसिद्धगुहाप्रविष्टत्वादेरन्यत्रप्रसित्धिसाधकाद्वित्वादीनामप्येकस्मिन्ब्रह्मण्यसंभवाद्बलवत्त्वेन तस्याप्यन्यत्रैवप्रसि-
त्थतापातात्तस्मान्नान्यत्रप्रसित्धानामन्यत्रैवप्रसित्धेभ्योभेदइतिचेत् । उच्यते । श्रुत्यादितोलोकतोवा अन्यत्रप्रसित्धाः
अन्यत्रप्रसित्धाः । बलवल्लिंगश्रुत्यादिभिरन्यत्रप्रसित्धाः अन्यत्रैवप्रसित्धाः यथोक्तं । श्रुत्यादितोलोकतोवापीतरेषुप्र
सिद्धता । बलवछ्रुतिलिंगाद्यैरन्येष्वेवप्रसित्धतेति । अतएवपूर्वंक्कचिछ्रुत्यादिनैवान्यत्रप्रसित्धशब्दसमन्वयोक्तावपिएत-
त्पादीयश्रुत्यादीनांप्राबल्यादियमुक्तिरितिचतुर्थपादीयटीका । बलवत्त्वंचमुख्यतोभगवत्परत्वेपि अमुख्यतोऽन्यपरत्वं
विनानुपपद्यमानत्वं । यथेंद्रियेभ्यःपराह्यर्थाइत्यत्रेंद्रियादिशब्दानांमुख्यतोभगवत्परत्वेपि अमुख्यतइंद्रियाद्यभिमानिदेव-
तापरत्वं । अन्यथादेवतातारतम्याद्यसित्धेः नचैवंगुहाप्रविष्टत्वादेरन्यत्रप्रसित्धत्वसंपादकद्वित्वस्यान्यपरत्वंविनानुपपद्य
मानत्वमस्ति । येनतस्यप्राबल्यंस्यात् । अथवाएषांशब्दानांब्रह्मण्यप्रसित्धिः अन्यवस्तुषुप्रसित्धिश्चेतिद्वयंसमन्वयविरो
धितेअन्यत्रप्रसित्धाः । एषांब्रह्मण्यप्रसित्धिरन्यत्रप्रसित्धिर्ब्रह्मपरत्वेऽत्यशक्यतेतित्रयंसमन्वयविरोधितेअन्यत्रैवप्रसि
त्धाः । यथोक्तं । येषांब्रह्मण्यप्रसित्धिःप्रसित्धिश्चान्यवस्तुषु विरोधिन्यौहितेन्यत्रप्रसित्धाःकथिताइह । एषामुक्तद्वयंब्र
ह्मपरत्वस्यात्यशक्यता इतितिस्रोविरोधिन्यस्तेन्यत्रैवप्रसित्धकाइति ॥ **तत्रप्रसिद्धाइति** ॥ तत्रैवप्रसित्धाइत्यर्थः ।
तत्रापीत्यर्थत्वे उभयत्रप्रसित्धिसांकर्यात् । अतएवसुधायां ब्रम्हण्येवप्रसित्धेत्युक्तं ॥ **नामलिंगात्मकतयेति** ॥ सा-
क्षात्धर्म्युपस्थापकानामात्मकाः धर्मद्वाराधर्म्युपस्थापकाः लिंगात्मकाः ॥ **नतत्रेति** ॥ ननु तत्रैवप्रसित्धानामपि जनि
तोतविष्णोरित्यादाविवान्यपरत्वशंकायांसमन्वयोव्युत्पाद्यतएवेतिचेन्न । तत्रप्रसित्धेत्यनेन अन्यपरत्वशंकाराहित्य-
स्योक्तत्वात् । नन्वत्रकथंपादक्रमः । किंमहामल्लभंगन्यायेन अथप्रथममल्पसोपानमारोहति अनंतरंस्थूलमनंतरंस्थूलतरं

ततःस्थूलतममितिसोपानारोहणन्यायेन । नाद्यः । तथात्वे अन्यत्रैवप्रसिद्धानांसमन्वयस्यबहुप्रयत्नसाध्यत्वेन तस्यैव-प्राथम्यप्रसंगात् । नाद्वितीयः । उभयत्रप्रसिद्धस्य अल्पप्रयत्नसाध्यत्वेनतस्यैवप्राथम्यप्रसंगादित्यतआह ॥ तेष्वन्यत्रेति ॥ त्रिविधेष्वित्यर्थः । तथाचमहामल्लभंगन्यायेनान्यत्रैवप्रसिद्धसमन्वयस्यप्रथमंप्राप्तत्वेपि प्रथमंबुध्यनारोहादेवतत्परित्यागइतिभावः । पादत्रयेमहामल्लभंगन्यायेनक्रमइत्याह । उभयत्रप्रसिद्धानामित्यादिना । पराकरणमात्रस्य अमुख्यत्वेनेतिसंबंधः । अयमर्थः । उभयत्रप्रसिद्धानांहिशब्दानां अन्यपरत्वमात्रंनिरसनीयं । नतुभगवत्परत्वमुपपादनीयं स्वतःसिद्धत्वात् । अन्यत्रप्रसिद्धानांचान्यपरत्वंनिरस्य भगवत्परत्वंचव्युत्पादनीयं तस्यासिद्धत्वात् । अन्यत्रप्रसिद्धिनिरासपूर्वकं भगवत्प्रसिद्धिव्युत्पादनापेक्षया अन्यप्रसिद्धिनिरसनमात्रपरत्वममुख्यमितितृतीयेतदुक्तिरिति ॥ अमुख्यत्वेनेति ॥ धर्मधर्मिणोर्धर्मिणएवप्रधानत्वादितिभावः । ततःपरिशेषात् । अन्ये मायावादिनः ॥ उत्तराधिकरणेति ॥ उत्तरपादीयाधिकरणेत्यर्थः । एतदुत्तराधिकरणेएतद्वाक्योदाहरणाभावात् । शास्त्राध्यायपादसंगतिः शास्त्राध्यायपादेष्वंतर्भावः । तेननैकवचनानुपपत्तिःशंक्या । अत्रब्रम्हणीतिशास्त्रे समन्वयेत्यध्याये अन्यत्रप्रसिद्धानामितिपादेंतर्भावः । तत्रापिलोकतइति चतुर्थादन्यत्रेतितृतीयान्नामेतिद्वितीयाद्भेदःसूचितः । एवमग्रेपि । अतइत्यस्यविवरणंसंगतिसद्भावादिति । यद्वा अतःप्रथमाधिकरणादित्यर्थः । अत्र विप्रकीर्णनानाशाखास्थवाक्यविचारपराधिकरणेषु नाव्यवहितपूर्वाधिकरणसंगतिनियमः । किंतु येनकेनचित्पूर्वाधिकरणेनापीत्यतोत्रजिज्ञासाधिकरणताद्विषयवाक्याभ्यामेवाक्षेपिकीसंगतिरुक्ता । प्रत्यधिकरणमव्यवहितपूर्वाधिकरणसंगतिरपिचंद्रिकाभावबोधयोर्व्यक्ता । तत्रैवानुसंधेया । निश्छिद्रतया निरवकाशतया । तस्यपुरुषविधतामन्वेतस्यपुरुषविधत्वंकिंविवक्षतमतआह ॥ तस्माद्वृद्धूतइति ॥

प्रादुर्भूतइत्यर्थः । परेषामुपकारेतत्कृतप्रत्युपकारेण यत्सुखमुत्पद्यतेतत्प्रियं । क्षीरपानादिप्रकृष्टविषयजः प्रमोदः । जलपानाद्यप्रकृष्टविषयजन्योमोदः । अत्रेदंबोध्यं । प्रतीयमानेअन्नविकारेपुरुषशरीरे अन्नमयनामानिरुद्धोवर्तते । तन्मध्ये प्राणमयनामकःकोशः तत्रप्राणमयनामाप्रद्युम्नः । तन्मध्ये मनोमयनामकःकोशः तत्रमनोमयनामासंकर्षणः । तन्मध्येविज्ञानमयनामकःकोशः तत्रविज्ञानमयनामावासुदेवः । तन्मध्येचानंदमयनामकःकोशः तत्रानंदमयनामानारायणः । तत्रपूर्वपूर्वोक्तानांदेहत्वं । उत्तरोक्तानांदेहित्वं । तत्रानंदमयोदेही विज्ञानमयाख्येदेहेव्याप्यतिष्ठति । एवमन्येपि । तत्रानंदमयाद्विज्ञानमयस्यावतारः ॥ एवमन्येषामपीति ॥ ततश्चायमर्थः । ब्रह्मविदाप्नोतिपरमित्युक्तब्रह्मणः सत्यंज्ञानमनंतमितिलक्षणमुक्तं । तत्रसत्यत्वमन्नमयप्राणमयप्रकरणाभ्यां ज्ञानत्वं मनोमयविज्ञानमयप्रकरणाभ्यांव्याख्यातं । अनंतत्वं गुणतोऽपरिच्छिन्नत्वमित्याशयेन तत्प्रतिपादनायानंदमयप्रकरणंप्राप्तं । तस्माद्वाएतस्मादित्यादि तस्मात्सत्यत्वादिलक्षणोपेतादेतस्मात्प्रकृताद्विज्ञानमयात् अन्यः आनंदमयः विज्ञानमयस्यांतरः अंतर्विद्यमानः। अभेदेपिविशेषबलाद्भेदव्यवहारः। तेनानंदमयेनैव विज्ञानमयःपूर्णः ईषदवकाशराहित्येनव्याप्तः। सएषआनंदमयः पुरुषविधः पुरुषाकारएव। वाशब्दः प्रसिद्धौ। अयंविज्ञानमयः तस्यानंदमयस्यपुरुषविधतां पुरुषाकारतां अनु अनुसृत्य पुरुषविधः पुरुषाकारः तस्मात्प्रादुर्भूतइतियावत्। तस्यानंदमयस्यप्रियंशिरः मोदोदक्षिणबाहुः प्रमोदोवामबाहुः आनंदोमध्यभागः ब्रह्म पुच्छाख्यावयवः। पुच्छं नलांगूलमित्याह ॥ प्रतिष्ठेति ॥ प्रतितिष्ठत्याभ्यामितिप्रतिष्ठापादौ। सुपांसुलुगितिद्विवचनस्याकारइति ॥ ब्रह्मणोन्यइति ॥ अनन्यत्वेत्वेकैकावयवंध्यायेदित्युक्तरीत्यानानुपपत्तिरितिभावः॥ अयोगादिति ॥ अवयवमात्रस्यफलदानासमर्थत्वादितिभावः। अयुक्ताचेन्मास्तुब्रह्मजिज्ञासेत्यतआह ॥ ब्रह्मजिज्ञासेति ॥ यतोतइति ॥ अनेनेत्यतआहे-

तिभाष्यं । इतियतःशंकामात्पाअतआहेतियतःशब्दाध्याहारेणयोजितंभवति । ब्रह्माणिजीवाःसर्वेपिपरब्रह्माणिमुक्तिगाइ तिश्रुतिः । ब्रह्माणि ब्रम्हशब्दवाच्या इत्यर्थः । ममयोनिर्महद्ब्रह्मतस्मिन्गर्भंदधाम्यहमितिगीतावचनं । महद्ब्रम्ह चित्प्रकृतिः । महतीब्रह्मणीद्वेतुप्रकृतिश्चमहेश्वरइत्युक्तेः । ममयोनिर्भार्या । योनिर्भार्येतिगीतातात्पर्योक्तेः । तस्मिन्ब्रम्हाणि अहंगर्भंदधामी त्यर्थः । पंचभिःपंचभिर्ब्रम्हचतुर्भिर्दशभिस्तथा । एतच्चतुर्विंशतिकंगणंप्राधानिकंविदुरितिभागवतवचनं । पंचभिः महाभूतैः । पंचभिः तन्मात्राभिः । चतुर्भिः महदहंकारमनोबुद्धिभिः । दशभिरिंद्रियैश्चब्रह्म पूरितमेतच्चतुर्विंशतिकंगणंप्रधानकार्यंविदुरित्यर्थः । तदेवंब्रम्हपरमंकवीनामितिहरौप्रयोगः स्फुटइत्यादिशब्देनतद्ग्रहणं । इत्यादिनाक्रमेणजीवादिषुप्रसिद्धब्रम्हशब्दस्य आनंदमयेप्रयोगइत्यर्थः । अधिकृत्य उद्दिश्य ॥ **आनंदमयशब्दार्थत्वादिति** ॥ आनंदमयशब्दस्य बव्हानंदत्वंतद्युक्तेत्यर्थः । मयट्शतशब्दयोः बव्हर्थकत्वादितिभावः ॥ **हिरण्यगर्भेविद्यमानेनेति** ॥ शतानंदःशतधृतिरित्युक्तेरितिभावः ॥ **सूर्याधिष्टातृत्वादिनेति** ॥ तेषांसूर्यादुत्तमत्वेन नियामकतयातदंतर्गतत्वादिनेत्यर्थः । आदिशब्देनसाधारणब्रम्हशब्दोविवक्षितः । अनेनैवमन्येषां इत्येतच्चतुर्मुखरुद्रव्यतिरिक्तसूर्याधिष्टातृमात्रपरं । अन्येषांसर्वजीवानामितिपृथगुक्तेरित्युक्तंभवति । बहुधाविकारित्वाख्यबहुभावः कथंनिर्विकारचित्प्रकृतौसंभवतीत्यतआह ॥ **तदभिमानित्वादिति** । **बहुभावादेवेति** ॥ तदभिमानित्वेनेत्येवार्थः ॥ **तत्तद्देहगतेति** ॥ अनेन अन्नमयत्वादेश्चेत्युक्तोहेतुर्देहाभिमानित्वेनजीवेवर्ततइत्युपपादितंभवति ॥ **प्रायपठितेति** ॥ सहपठितेत्यर्थः ॥ **विरोधादिति** ॥ अवयवावयविभावस्यभेदव्याप्तत्वादितिभावः ॥ **अन्नत्वेनेति** ॥ एतेनेदंनिरस्तं । अत्रचतुर्मुखादिष्वेकएवेतिनपूर्वपक्षः । अनेकप्रापकसद्भावे निर्णयायोगात् । नापिसर्वेपीति विरोधान्नतेष्वन्यतमइति अनिर्धारणेसंशयाविशेषप्रसंगा

दिति । विशिष्टनिर्णयायोगेपि ब्रम्हान्यत्वप्रकारेणान्यएवेतिनिर्णयोपपत्तेः । सूत्रमनुपन्यस्य व्याख्यानेन्यूनतास्यादि-त्यतउक्तं ॥ उदाहृतेति ॥ तत्रव्याख्यानस्याकृतत्वादुदाहरणंव्यर्थइत्यतउक्तं ॥ संगत्यर्थमिति ॥ श्रुत्यधिकरणसं-गतिप्रदर्शनार्थमित्यर्थः ॥ ॐ ॥ आनंदमयोभ्यासात् ॥ ॐ ॥ आनंदमयइत्युपलक्षणं । अन्नमयादयःपंच ब्रह्मैव अ-भ्यासात् ब्रम्हशब्दाभ्यासात् । अभ्यासशब्दार्थंचाग्रेविवेचयामः । भाष्ये इत्यादिषुब्रह्मशब्दाभ्यासादित्यन्वयभ्रमं वारयंस्तदर्थमाह ॥ असन्नेवेत्यादिना ॥ ब्रह्म जीवादन्यंनास्तीतिवेदजानातिचेत्सोधिकारी । असन्दुःख्येवभवति यदिब्रह्म जीवातिरिक्तमस्तीतिवेद ततएवएनमधिकारिणंसंतंसुखिनंविदुरित्यर्थः। बुध्याविहिंसन्पुष्पैर्वाप्रणवेनसमर्चयेत्। वासुदेवात्मकमितिव्याससस्मृतिः॥ ॐ॥ विकारशब्दान्नेति चेन्नप्राचुर्यात् ॥ ॐ॥ विकारार्थकमयट्शब्दान्नान्नमयंब्रह्मे तिचेन्न प्राचुर्यात् प्राचुर्यार्थत्वादत्रमयट्शब्दजातस्येत्यर्थः अविकारित्वादतभिमानित्वाच्चेति। निर्विकारोक्षरःशुद्धइत्यादे र्विकारित्वंस्वतंत्रेहरौपराधीननियामकत्वरूपमाभिमानित्वंचनसंभवतीत्यर्थः । तत्र गीताभाष्योक्तप्रमाणमाह ॥ तादा त्म्यार्थइति ॥ ननु सूत्रेप्राचुर्यादित्युक्तेरानंदस्येत्यर्थाल्लभ्यते । तथाच तद्व्याख्यानभाष्ये आनंदप्रचुरत्वादित्येववक्त-व्ये कुतः प्रचुरानंदत्वादितिविपरीतोक्तिरित्यतआह ॥ आनंदप्रचुरइति ॥ इत्यादिवदिति ॥ तत्र यथाप्रा-चुर्यस्य ब्राम्हणविशेषणत्वेन तद्विरोधिईषच्छूद्रप्रसक्तिरेवमत्रप्राचुर्यस्यानंदविशेषणत्वे तद्विरोध्यनानंदस्याप्यल्पस्यप्रस क्तिरित्यर्थः ॥ इत्येवप्रतीतेरिति ॥ सूत्रे प्राचुर्यस्यविशेष्यतयोक्तावपि स्वयंविशेषणत्वेनतदभिदधता यथाप्रचुर प्रकाशोरविरित्युक्ते प्रकाशविरोध्यंधकारलेशाप्राप्तिवत्प्रकाशप्रचुरइत्युक्तेपितदप्राप्तिःप्रत्यक्षविरोधात् । तथाप्रचुरानंदइ त्युक्ते दुःखलेशाप्राप्तिवदानंदप्रचुरइत्युक्तेपि तदप्राप्तिः श्रुत्यादिविरोधादितिसूचितंभवतीत्यर्थः। शंकते॥ नायमिति ॥

सहपठितत्वादिति ॥ तथाचप्रायपाठविरोधइतिभावः ॥ अल्पत्वादिति ॥ तस्यलोकसाधारण्यादितिभावः । कुतइतिप्रश्नस्योत्तरमाह ॥ अद्यतेत्तिचेति ॥ स्वयंप्राणिभिर्भुज्यते प्राणिनोभुङ्क्तेच यस्मात्तस्मात्तद्ब्रह्मान्नमित्युच्यत इत्यर्थः । अभिसंहितं अभिमतं । नाशप्रसंगादितिभावः । शंकते ॥ औषधीभ्यइति ॥ धान्येभ्योन्नंसमुद्भूतं तस्मात्पुरुषदेहःसमुद्भूतइत्यर्थः उक्त्वा आत्मनआकाशइत्यादिना । नन्वथापिप्राणमनःशब्दयोःश्वासवाय्वंतःकरणपरत्वेन तदुभयप्राचुर्योक्तावल्पार्थत्वंस्यादित्यतआह ॥ एवमिति ॥ चेष्टकत्वावबोधनार्थत्वेति ॥ अनचेष्टायां मन्ववबोधनइतिधातुव्याख्यानादितिभावः । विज्ञानप्राचुर्यस्यसार्वज्ञतयाल्पताशंकानुदयाद्द्वयोरेवोक्तिः ॥ श्रुतिविरोधइति ॥ तस्यछांदोग्यभाष्यदिशा स्वगतभेदानिषेधार्थकत्वादितिभावः । येन्नमित्यादि एतेषांतेन्नमाप्नुवंति तेआयुर्यंतीतिपूर्ववाक्याभ्यांनबिभेति नप्रमाद्यति संतमेनंततोविदुरित्युत्तरैःक्रमेणान्वयोबोध्यः ॥ अन्नमयादीनीति ॥ अन्नमयादिपंचकंनिरूप्यतद्ब्रह्मज्ञातुः फलनिरूपणायोदाहृतेत्यर्थः ॥ अनन्यथासिद्धेति ॥ विष्णुमात्रनिष्ठेत्यर्थः । समभिव्याहारात् सहोच्चारात् । सावकाशस्यमयट्पदस्य । अन्ये रामानुजाः ॥ आनंदमयएवेति ॥ विज्ञानमयोजीवः अन्नमयादित्रयःकोशाइत्येवशब्दार्थः ॥ क्लिष्टत्वादिति ॥ प्रायपाठविरोधादेवेतिभावः ॥ सूत्रविरोधइति ॥ तत्रानंदमयमात्रस्यब्रह्मत्वोक्तिविरोधः अनुजज्ञे ज्ञापयामास । तथैवपंचमयटांप्राचुर्यपरत्वेन । अन्यथा पंचानामब्रह्मत्वे ॥ कथमिति ॥ व्यभिचारादितिभावः । ननु सूत्रकारेणानंदमयस्यब्रह्मत्वेब्रह्मशब्दाभ्यासस्यैवहेतूकृतत्वेनतस्यान्नमयादिष्वभावात्कथंव्यभिचारइतिचेत् । विज्ञानंदेवाःसर्वे ब्रह्मज्येष्ठमुपासते विज्ञानंब्रह्मचेद्वेदेति विज्ञानमयेब्रह्मशब्दाभ्याससद्भावात् । तथा ब्रह्मवल्लीभृगुवल्योः श्रुतान्नमयादेश्चैकत्वेन येन्नंब्रह्मोपासते अन्नंब्रह्मेतिव्यजानादित्यादिश्रवणे-

नामिलिता प्रतिप्रकरणं द्विर्ब्रम्हशब्दश्रवणस्यचंद्रिकायांप्रदर्शितत्वेन अन्नमयादावपिब्रम्हशब्दाभ्याससद्भावात् । यत्तु सुधायां अन्नमयादिषु असकृदुक्तिमातृरूपा मुख्याभ्यासप्रदर्शनंतदेकप्रकर्ण्यामेवाभ्यासप्रदर्शनायेत्यदोषः । यद्वासूत्र कृतोपिब्रम्हशब्दएवहेतुत्वेनाभिमतः । तस्यविष्ण्वेकनिष्ठत्वेनव्यभिचाराभावात् । अभ्यासोक्तिश्चयदाश्रुतितएवविष्णुत्व निश्चयस्तदाभ्यासरूपतात्पर्यलिंगात्सुतरामित्यभिप्रायइतिनकोपिदोषः । तत्र पंचानामपिब्रह्मत्वे पंचमयटांप्राचुर्यार्थत्वेच बाधकंशंकते ॥ **अन्नमयादीनामपीति** ॥ तर्हि अन्नमयोभ्यासादितिवाच्यं प्रथमातिक्रमेकारणाभावादित्यतआह ॥ **आदिमत्वेपीति** ॥ अल्पाक्षरत्वेपीत्यपिज्ञातव्यं ॥ **संगतत्वेनेति** ॥ जिज्ञास्यब्रह्मणआनंदमयावयवत्वेनोक्त त्वान्नतस्यजिज्ञास्यत्वमितिशंकापराकरणायानंदमयस्य विष्णुत्वसमर्थनस्यपूर्वसंगतत्वेनेत्यर्थः । रामानुजमतवन्मायिमतं कुतोननिराक्रियतइत्यतआह ॥ **पक्षित्विति** ॥ पूर्वपक्षीकृतः पूर्वपक्षित्वेनकृतः । निराकृतइतियावत् । आनंदमयस्यब्र म्हत्वंसाधयता पंचानामब्रह्मत्वपक्षनिराकरणादितिभावः । प्रत्याक्षिपत् निराचक्रे । प्रयोगात् विशेषणविशेष्यभावव्य वहारात् । यद्वा भिन्नेविशेषणेप्रचुरशब्दप्रयोगादिति ॥ **विशेषणेति** ॥ विशिष्यते विविच्यते अयंगुणः अयंगुणीत्या दिरूपेणवस्तुयेनसविशेषः वस्तुनःस्वरूपसामर्थ्यं तेनेत्यर्थः । विशेषोनाम काचनवस्तुनःशक्तिरिति तत्वनिर्णयटीका क्तः ॥ ॐ **तद्धेतुव्यपदेशाच्च** ॐ ॥ आनंदमयोब्रह्मैव तस्यविष्णोस्तत्रपूर्णानंदत्वे तत्रानंदमयप्रकरणे कोह्येवा न्यात्कःप्राण्यादिति लोकचेष्टकत्वाख्यहेत्वभिधानादित्यर्थः ॥ **कारणाभावादिति** ॥ सुखोद्रेकात्नृत्यगानादौप्रवृत्तिः सुखार्थंभोजनादौ दुःखोद्रेकाद्रोदनादौ दुःखनिवृत्तये कंटकोद्धरणादौचेतिकारणचतुष्टयंलोकदृष्टं । तत्रांत्तरत्र याणामभावादित्यर्थः । अन्यादित्यस्यार्थश्चेष्टयेदिति । प्राण्यादित्यस्यार्थःप्रवृत्तयेदिति । अनचेष्टायामितिधातोः

सूत्रेतदितितंत्रमित्याशयेनत्रेधार्थमाह ॥ **आनंदमयप्रकरणइति** ॥ **आनंदपूर्णत्वएवेति** ॥ अनेननकेवलमत्रसूत्रे
आनंदमयस्यविष्णुत्वंसमर्थ्यते किंतु मयटःप्राचुर्यार्थत्वमेव । आनंदपूर्णत्वाभावे उक्तरीत्यालोकचेष्टकत्वानुपपत्तेरिति
सूचयति । स्पष्टंचैतन्महानंदत्वएवास्येत्याद्यनुव्याख्याने । अपरब्रह्मणि प्रकृत्यादौ ॥ ॐ **मांत्रवर्णिकमेवचगी
यते** ॐ ॥ मंत्रवर्णःसत्यंज्ञानमनंतंब्रह्मेतिलक्षणवाक्यात्मकोवेदः तेनप्रोक्तंमांत्रवर्णिकं तथाचमंत्रवर्णेसत्यत्वादिलक्ष-
णवत्तयाप्रोक्तंपरंब्रह्मैवान्नमयादिशब्दपंचकेनप्रतिपाद्यते यतोतश्चपंचापिब्रह्मैवेत्यर्थः । अनुसंधाने आलोचने ॥ **एका
र्थत्वप्रतीतेरिति** ॥ अस्तेःशत्रंतस्यरूपंसदित्येतज्जीवनवाची । अस्तिदेवदत्तइत्युक्ते जीवतीतिप्रत्ययात् । तथाषद
ॢविशरणगत्यवसादनेष्विविस्मरणात् । किंवंतस्यसदेश्वरूपमेतच्छैथिल्यलक्षणाविशीर्णत्वंवक्ति । भावप्रधानंचैतत् तथा
चसत् सत्वं जीवनं विशरणंवा भूतानांयापयति प्रापयतीतिसत्यशब्दार्थःसर्वभूतानांजीवनविनाशहेतुत्वं । अन्नशब्दस्यो
पजीव्यतालक्षणाद्यताविनाशकत्वलक्षणात्वार्थेतिसत्यान्नशब्दयोरेकार्थत्वं । सदेर्गत्यर्थेपिपाठात् सत्वंभूतानांगतिंया
पयतिप्रापयतीतिगतिप्रदत्वंसत्यशब्दार्थः । प्रपूर्वादनचेष्टायामित्यस्मान्निष्पन्नप्राणशब्दस्यापि सएवार्थइतितयोरेकार्थत्वं।
मन्ववबोधनइत्यस्माद्भावे असुन्प्रत्यये मनइति निष्पन्नत्वान्मनोज्ञानशब्दयोरेकार्थत्वं ज्ञानविज्ञानशब्दयोरेकार्थत्वंस्फुट
मेव । अनंतत्वंच गुणतोपरिछिन्नत्वं । आनंदमयत्वंतदेकदेशभूतमितितयोरेकार्थत्वमिति सत्यज्ञानानंतपदानामन्नमया-
दिपदानांचैकार्थत्वप्रतीतेरित्यर्थः ॥ **परब्रह्मेति** ॥ अन्यवेदनेनान्यप्राप्तेरयोगाद्वेदनाप्त्योर्विषयैक्यावश्यंभावेनपरंब्र-
ह्मवित्परंब्रम्हाप्नोतीत्याभिमतत्वादितिभावः ॥ **किंतदिति** ॥ किंलक्षणकमित्यर्थः नहिलक्षणेनविनावस्तुसमस्तव्यावृ
त्तया ज्ञातुंशक्यमित्यर्थः ॥ **कथंतद्वेदनमिति** ॥ नह्यपरिछिन्नपरिमाणस्य तस्यज्ञानमस्माकंयुज्यतइतिभावः ॥ की-

दर्शीचतत्प्राप्तिरिति ॥ तस्यसर्वगतत्वेननित्यप्राप्तत्वादितिभावः ॥ **योवेदेतिवेदनमिति** ॥ अपरिच्छिन्नपरिमाणस्यापिभक्तानुकंपयाल्पपरिमाणप्रकटनसंभवादित्याशयेनतत्रगुहानिहितत्वोक्तेरितिभावः॥ **सोऽश्नुतइतिप्राप्तिरिति** ॥ नवस्तुसंयोगमात्रंतत्प्राप्तिःकिंतुतद्व्यक्तिस्थाने सत्यकामत्वादितत्सारूप्याभिव्यक्तिरेवेत्याशयेनतत्रसर्वकामभोगोक्तेरितिभावः ॥ **युक्तिसमुच्चयार्थइति** ॥ नकेवलमभ्यासादेःकिंतुमांत्रवर्णिकगानाच्चेतिसमुच्चयार्थइत्यर्थः। भाष्ये संदोहो मध्यभागःप्रमाणेन आगमेन। असिद्धत्वात् अभावात् ॥ **बाधकोवेति**॥प्रकृतेतर्कस्यबाधकत्वेनानाशंकितत्वादितिभावः ॥ **इतिभावेनेति** ॥ अनेनाप्रमेये अपरिमितशक्तिमतिप्रमा परिमितशक्तिःकुतइतिभाष्यार्थउक्तोभवति। तदभावात्। पुरुषपदेनाप्रकृतत्वात्। द्विरुक्तेन द्विवारमुक्तत्वेननिमित्तेनभेदश्रुतिंभेदबोधकशब्दं॥ **आकाशादीति** ॥ आत्मनआकाशः संभूतः आकाशाद्वायुः वायोरग्निरग्नेरापः अद्भ्यःपृथिवी पृथिव्याओषधयः ओषधीभ्योऽन्नं अन्नात्पुरुषइत्यत्रोक्तेरित्यर्थः ॥ ॥ **सारभूतमिति** ॥ आकाशादिशब्दार्थानांभूततदभिमानितद्देहतदंर्नियामकहरिरूपाणांमध्येश्रेष्ठमित्यर्थः। चिन्मात्रमेवेत्येवशब्दार्थोऽन्यद्विहायेति। प्रकृतिंपुरुषंचैवविध्यनादीउभावपीतिगीतावाक्यं। द्वयोः जीवपरयोः ॥ **दुःखानुभवितृत्वविशेषणेनेति** ॥ भुङ्क्तेप्रकृतिजान्गुणानितिवाक्यशेषादितिभावः ॥ **सारान्नमयेति** ॥ अन्नशब्दार्थेषुयत्सारंश्रेष्ठंभूताद्यत्वंतदत्तृत्वरूपं तत्प्रचुरत्वाविशेषणेनेत्यर्थः। रससारवरश्रेष्ठशब्दाःपर्यायवाचिनइत्युक्तेः। दृष्टांतमात्रंनसाधकमित्यतोत्रएकादशतात्पर्यसंमतिमाह ॥ **उक्तंचेति** ॥ बहुपदार्थानामेकेनशब्देनोद्देशेपि तेषांमध्ये एकं तेनैवशब्देनपरामृश्य तस्य किंचिद्विधीयतइत्यर्थः। नन्वाकाशादिपुरुषांतपदैर्ब्रह्मग्रहणे संभूतशब्दोक्तसृष्ट्यनुपपत्तिरित्यतआह ॥ **एतच्चेति** ॥ उत्तरप्रस्थाने अनुव्याख्याने। तदेवाह ॥ **ब्रह्मशब्देति** ॥ ब्रह्मशब्दोदितेतास्मिन्नात्मशब्दंप्रयुज्यच । तस्मादा-

काशसृष्टिंचप्रोवाचात्रचतुर्विधां । भूतंभूताभिमानीचतद्देहांतर्नियामकः । हरिश्चाकाशशब्दोक्तइत्यादिनाकाशपुरुषांतश
ब्दवाच्यभगवद्रूपाणामपि प्रादुर्भावोक्तेर्नोक्तशंकावकाशइतिभावः । स्थानांतरे नारायणपन्ने ॥ प्रार्थितशुद्धीना-
मिति ॥ अन्नमयादयःकोशाःशुध्यंतामितिजीवेनप्रार्थितपावित्र्यवतामित्यर्थः । अत्र ब्रह्मवल्यां । तत्तत्कोशगतं । अन्न
मयादिसंज्ञकदेहगतं । आदौ अन्नमयप्रकरणे । अंते आनंदमयप्रकरणे ॥ वैय्यर्थ्याच्चेति ॥ स्वस्यापरोक्षीकृतब्रह्मत्वे
न शब्दानपेक्षणात्परस्यचापरोक्षशून्यत्वेनतंप्रतितथानिर्देशायोगादितिभावः ॥ वस्त्रप्रावृतजानुवदिति ॥ वस्त्रेणा
वृतस्यजानोरप्रत्यक्षत्वेपि प्रत्यक्षीभूतवस्त्रांतर्गतत्वात् यथेदंजान्वितिनिर्देशस्तथेत्यर्थः । अन्नादिशब्दानांप्रसिद्धार्थत्या-
गात्कथंचिदित्युक्तं । अर्थांतरं उपजीव्यत्वरूपं ॥ लाक्षणिकत्वमिति ॥ इदंशब्दस्यतदंतर्गतेलक्षणांगीकारादितिभा
वः ॥ स्पष्टमिति ॥ आकाशपदेनतल्लाभेपिस्फुटंतद्वाचकशब्दाभावादितिभावः । दुर्बलत्वेन स्वभावात् ॥ सावका
शत्वादिति ॥ विरिंचादावपिस्वारस्रष्टत्वादिसत्वादितिभावः ॥ ॐ नेतरोनुपपत्तेः ॐ ॥ विण्चितरश्चतु-
र्मुखादिर्नान्नमयादिशब्दवाच्यः। तस्य ब्रम्हविदाप्नोतिपरमित्युक्तमोक्षहेतुज्ञानविषयत्वानुपपत्तेरित्यर्थः। इत्यादावित्या
दिपदेनैतमन्नमयमात्मानमुपसंक्रामतीत्यादिग्रहणं ॥ ॐ भेदव्यपदेशाच्च ॐ ॥ तेयेशतं यतोवाचामित्यादिना
परिमितापरिमितानंदत्वादिरूपविरुद्धधर्मोक्त्या आनंदमयादेर्विरिंचादेर्भेदाभिधानाच्चनानंदमयश्चतुर्मुखादिरित्यर्थः॥ ते
येशतमिति ॥ प्रजापतेः रुद्रस्य तेप्रसिद्धाःयेशतमानंदाःसतावान्ब्रह्मणश्चतुर्मुखस्यैकआनंदः । तथाविधशतानंदव-
त्वंतस्येत्यर्थः ॥ यतोवाचइति ॥ ब्रह्मणः आनंदंयोजानाति स कदाचननबिभेति सआनंदः किंप्रकारोज्ञातव्यइ-
त्याकांक्षायां वागाद्यगोचरतयाज्ञातव्यइत्याशयेनोक्तं ॥ यतइति ॥ वाचोवाक्यानि मनसासह अप्राप्य अपरिमित

त्वात्साकल्येनाविषयीकृत्य आनंदान्निवर्ततइतियोजना ॥ **एषामिति** ॥ तेयेशतंदेवानामानंदाः । सएकइंद्रस्यानंदः । तेयेशतमिंद्रस्यानंदाः । सएकोबृहस्पतेरानंदइत्यूनानंदत्वोक्तेरितिभावः । तेभ्योदक्षश्चेंद्रनामासहींद्रुरापयत्पुरा । तस्माद्बृहस्पतिर्नाममहेंद्रत्वात्पुरंदरइतितैत्तरेयभाष्योक्तेरत्रेंद्रबृहस्पतिशब्दाभ्यांक्रमेणदक्षशचीपत्योर्ग्रहणं । आत्मनः स्वामिनः अयं आत्म्यः सनेत्यनात्म्यइत्यस्यफलितोर्थः ॥ **स्वामिरहितइति** ॥ आत्मनोजीवस्येमआत्म्याः जीवसंबंधिगुणाः तेनसंतियस्येतिभावेनोक्तंजैवगुणविधुरइति । प्रतिष्ठां पूजांविंदते । पुरुषपदोपलक्षितेष्वपकृष्टजीवेषु आदित्यपदोपलक्षितेषूत्कृष्टजीवेष्वितिविवेकः ॥ **सकलस्वामित्वेनेति** ॥ यदधीनायस्यसत्तातत्तदेवेतिभण्यतइत्युक्तेरितिभावः ॥ **इदमिति** ॥ भगवान्स्वयमितरोपिसन्निदंविश्वमिवोच्यते । पुरुषएवेदमित्यादावित्यर्थः ॥ **वेदगर्भइति** ॥ आद्यः स्थिरचराणांयोवेदगर्भःसहर्षिभिरितिपूर्ववाक्यादितिभावः ॥ **आनंदादीति** ॥ कर्तृत्वात्सगुणंब्रह्मपुरुषंपुरुषर्षभं । स संगत्यपुनःकालेकालेनेश्वरमूर्तिना । जातेगुणव्यतिकरेयथापूर्वंप्रजायतइत्युत्तरवाक्यादितिभावः ॥ **तदेतदिति** ॥ तदेतत्सत्यं । मंत्रेषुकर्माणिकवयोयान्यपश्यन्नित्यादिनोक्ताखिलकर्माराध्यत्वप्रकारेणेत्यर्थः ॥ **अंतर्यामितयेति** ॥ त्वमित्यस्यत्वदंतर्यामीत्यहमित्यस्यमदंतर्यामीत्यर्थतयेत्यर्थः । असर्वोपिसर्वात्मकत्वेन प्रतीयतइत्यत्रहेत्वाकांक्षायामंतर्यामित्वंहेतुत्वेनाभिप्रेत्यासिद्धमंतर्यामित्वमनंतर्यामित्वेनप्रतीतेरित्याशंकायांतत्परिहारार्थमात्मैवेत्याद्युक्तमितिपूर्वपूर्वत्रोत्तरत्रोक्तानांहेतुत्वादितिभावः ॥ **विशिष्टेति** ॥ विशिष्टमुत्तमंवस्त्वेकमेवेत्यर्थतयेत्यर्थः । इदमेकमेवेत्याद्यपेक्षया । तत्वमसीत्यादौ विशिष्टैक्याप्रतिपादनादितिध्येयं । अत्र विशिष्टैक्यंनप्रतीयतइत्यत आह ॥ **अत्रेति** ॥ विवक्षितार्थप्रतिपादकस्यादिपदेनोपात्तत्वादितिभावः । तर्हि बहूनामित्यत्रेवोदाहर्तव्यं किमनेनेत्यतउक्तं ॥ **पुरुषैक्यंनिराकृत्येति** ॥ मोक्ष

धर्मेहि बहवः पुरुषाः ब्रह्मन्नुताहोएकएवतु । कोह्यत्रपुरुषश्रेष्ठस्तंभवान्वक्तुमर्हमीतिजनमेजयेनपृष्टे वैशंपायनेन नैतदिच्छं तिपुरुषमेकंकुरुकुलोद्भवेतिपुरुषैक्यमतंनिराकृतं । कथंतर्ह्येकमेवाद्वितीयमित्यादौ पुरुषैक्यव्यपदेशइत्यतउक्तं । बहूनांपु रुषाणांवैयर्थकायोनिरुच्यते । तथातंपुरुषंविश्वमाख्यास्यामिगुणाधिकमितिकारणत्वेनाभिमतानां बहूनांसत्त्वेपि द्यावाभूमीजनयन्देवएकइतिश्रुतौ यथाविशिष्टकारणस्यैकत्वादेकंकारणमित्युच्यते तथैक्यश्रुत्यर्थत्वेन तंविश्वंपूर्णंगुणाधिकंपुरुषमाख्यास्यामात्यर्थः ॥ तस्याप्रत्यक्षत्वेनेति ॥ ईश्वरधर्मिकेश्वरप्रातियोगिकस्यैक्यस्येश्वरप्रत्यक्षत्वेनप्रत्यक्षत्वादित्यर्थः । अनुमानंतु नस्वातंत्र्येणप्रवर्ततइतिभावः ॥ श्रुत्यर्थेति ॥ ऐक्यश्रुतेर्योर्थः स्वमित्यादिरूपः तदपरिज्ञाने नेत्यर्थः ॥ प्राप्तिविरोधादिति ॥ प्राप्तृप्राप्ययोर्भेदव्याप्तत्वादितिभावः । प्रमाणानांनेति ॥ भेदश्रुतीत्यर्थः । ननु जीवस्य परब्रह्मत्वेपि न तत्प्राप्तकथनंविरुद्धं । पूर्वमज्ञातब्रह्मत्वोजीवः इदानीं विद्यमानब्रह्मत्वंजानातीत्यभिप्रायेण प्राप्तकथनोपपत्तेः यथा कश्चिद्विस्मृतस्वकंठस्थितमणिः पूर्वमेव विद्यमानकंठमणिज्ञानाल्लब्धकंठमणिरित्युच्यतइत्यत आह । ननुविस्मृतकंठमणाविति इत्यवोच्यतेनन्विातिसंबंधः । तथाचज्ञानाभिप्राये ब्रह्मजानातीत्येवनिर्देशःस्यान्नप्राप्नोतीतिभावः । ननु परमंसाम्यमुपैतीत्यत्र यथा प्रागपिविद्यमानस्यैवसाम्यस्य प्राप्तिरुच्यते तथा प्रागपिविद्यमानस्य ब्रम्हत्वस्यप्राप्तिरुच्यतामित्यतआह ॥ परमंसाम्यमुपैतीति ॥ विमुक्तश्चेति । प्राङ्मुक्तएवमुक्तोभवतीत्यर्थः ॥ तदन्यथानुपपत्त्येति ॥ जीवस्यपरब्रह्मत्वे खलु अबद्धेतस्मिन्बंधस्य मिथ्यात्वात्प्रागपिमुक्तव्यवहारःसंभवतीतिभावः ॥ बंधस्याज्ञानमूलत्वेनेति ॥ अनादिबंधस्याज्ञानाधीनत्वंचाद्वैतानांअविद्याधीनजीवब्रम्हविभागवत्तार्किकानांच गुणवत्वाधीनद्रव्यत्ववदनादेरपीश्वराधीनत्वोपपत्तेरितिसुधोक्तरीत्याध्येयं ॥ दर्शनादिति ॥ जपाकुसुमसन्निधिव

शात्स्फटिकेप्रतीयमानस्यापिलौहित्यस्य अत्राविद्यमानत्वव्यवहारदर्शनादित्यर्थः ॥ **आहेति** ॥ तत्रबंधस्यान्यथारूप मित्यस्वाभाविकत्वस्मरणादितिभावः ॥ **विमतानीति** ॥ यद्यप्यनेनजीवानांमन्योन्याभेदःसिध्यति । नब्रह्मै- क्यं तथापिविशिष्टरूपस्यैक्यायोगेनशुद्धस्यैक्येवाच्येशुद्धस्यैवब्रह्मत्वाद्ब्रह्मैक्यमपिसिध्यतीतिभावः । भाष्ये । तत्र भेदाक्तौ तदनुमानविरोधः ऐक्यानुमानविरोधइत्यर्थः ॥ ॐ **कामाच्चनानुमानापेक्षा** ॐ ॥ चोवधारणे । अदृष्टेर्थे शुष्कानुमानापेक्षानकार्या कुतः कामात् कामचारित्वादेवेत्यर्थः ॥ **पृथगिति** ॥ केवलेत्यर्थः ॥ **उक्तत्वादिति** ॥ अनेनैतदर्थमेवनचतत्वमसीत्याद्युद्ग्रंथप्रदर्शनमितिसूचितं । आअपेत्युपसर्गद्वयमित्याशये- नाह ॥ **आनेयेति** ॥ ॐ **अस्मिन्नस्यचतद्योगंशास्ति** ॐ ॥ अस्मिन्प्रकरणे अस्यजीवस्य तेन आनंदमयादिरूपेण ब्रह्मणासह योगंसंबंधं मुक्तावपि सोश्नुतइतिश्रुतिः शास्ति शंसति । यतोतऐक्यायोगान्नानंदमया- दिरितरइत्यर्थः । भेदएवेत्यत्रहेतुमाह ॥ **संबंधस्येति** ॥ **सोश्नुतइति** ॥ सब्रह्मवित् स्वयोग्यसर्वकामान् सर्वज्ञेन ब्रह्मणासहैवभुङ्क्तइत्यर्थः । भाष्ये युक्तिसमुच्चयइतिसामान्येनोक्तत्वादाह ॥ **अथवेति** ॥ तत्कथमित्यतएतत्सूत्र व्याख्यानरूपानुव्याख्यानमुदाहरति ॥ **तदुक्तमिति** ॥ यद्यस्मात् अस्य सएवंविदित्युक्तस्य ब्रह्मविदः फलत्वेना न्नमयादिभिर्योगं तत्प्राप्तिस्थानद्वये एतमन्नमयमात्मानमुपसंक्रामतीत्यादौ एवमन्नमयमात्मानमुपसंक्रम्येत्यादौचानु वाकद्वये शंसति कथयति श्रुतिरतएतेन्नमयादयः कोशाइति व्याख्यानमतिसाहसं पूर्वोत्तरापरामर्शमूलमित्यर्थः । आद्यव्याख्यानंतु मुक्तेशभेदसमर्थनाय सोश्नुतइतिश्रुत्युदाहरणंतत्स्वारस्यानुरोधेनेति ॥ ६ ॥ ॥ **नामसमन्वयसि द्ध्यर्थमिति** ॥ अतएवतत्पादांतर्भावइतिभावः । श्रुतेः स्वभावतःप्राबल्याल्लिंगस्यापिवक्ष्यमाणरीत्यानिरवकाशत्वेनश्रु

तित:प्राबल्यादन्यतरनिर्णयएवस्यान्नसंदेहइत्यतउक्तं ॥ **प्राबल्याद्यविवेकेनेति** ॥ ईशेईष्टास्वामीय: तंनविजानंती त्यन्वय: । अदृश्यत्वाद्यभिधायिपदंनास्तीत्यतआह ॥ **सहैवेति** ॥ स्वै:सहैवेत्यर्थ: ॥ **सूर्यलिंगादिति** ॥ एकच-क्रंरथंप्रति सप्तनामाऽश्व:संबध्यतइति सप्ताश्ववत्वैकचक्ररथित्वरूपादित्यर्थ: ॥ **वरुणलिंगादिति** ॥ जलनियामक त्वरूपादित्यर्थ: ॥ **त्वष्टारमिति** ॥ रूपाणिविविधतयाकुर्वंतंत्वष्टारंनिचिक्युरित्यन्वय: ॥ **ब्रह्मेंद्रमित्यादिरिति** ॥ ब्रह्मेंद्रमग्निंजगत:प्रतिष्ठांदिवआत्मानंसवितारंबृहस्पतिमित्यादीत्यर्थ: । अत्रादिवआत्मत्वं वायुलिंगं ॥ योगेनैतेषांवि-ष्णुपरत्वमित्यतआह ॥ **नचेति** ॥ तेषामित्यादि । तथाच योगरूढिभ्यांयोगमात्रस्यबाधइतिभाव: । पृथक् स्वातंत्र्येण ॥ ॐ **अंतस्तद्धर्मोपदेशात्** ॐ ॥ अंत:प्रविष्टमित्यादौ अंत:प्रविष्टतया श्रुतंब्रह्मैव । तस्यब्रह्मणोधर्माणांसमुद्र-स्थत्वब्रह्मांडवीर्यत्वादीनां अंत:श्रुतेरंत:समुद्रे यस्यांडकोशमित्यादिनाभिधानादित्यर्थ: । होतारं हुदानादानयोरिति धातो: । बहुवचनंघटयति ॥ **भूतेति** ॥ नचात्रसमुद्रस्थत्वंनाम क्षीरसमुद्रशायित्वंवा प्रलयसमुद्रशायित्वंवा । नाद्य: । आपोनाराइतिप्रमाणोदाहरणासंगते: । नद्वितीय: । साहिक्षीरसमुद्रशायीतिप्रतिज्ञासंगतेरित्यतआह ॥ **अत्रेति** ॥ भाष्ये अभिध्याय ध्यात्वा । अहमित्यस्यार्थ: अहेयमिति । नञुपपदादोहाक्त्यागइत्यस्मात्कर्मणिडप्रत्ययइतिभा-व: । रश्मीन्निधयतिदीपयतीतिरश्मीत् । तत्फलितप्रदर्शनंरश्मिप्रेरकमिति ॥ ॐ **भेदव्यपदेशाच्चान्य:** ॐ ॥ तच्छब्दार्थोविष्णुर्नकेवलमंत:श्रुत:किंत्विंद्रादिभ्योन्यश्च । इंद्रस्यात्मेत्यादिनांतर्यामित्वोक्त्या तेभ्योभेदाभिधानादि-त्यर्थ: । सावकाशत्वात् । परमैश्वर्यादितिवक्ष्यमाणरीत्या ॥ **विद्वद्रूढेरिति** ॥ इंद्रंमित्रंवरुणमग्निमाहुरितिप्रयोगबाहु ल्यश्रवणादितिभाव: । किमु महायोगसहितायाइत्येवशब्द: । महायोगोद्विविध: । प्रवृत्तिनिमित्तपौष्कल्यतत्वं अन्य-

प्रवृत्तिनियामकत्वंच । तत्राद्यमुक्तं । द्वितीयमाह ॥ **अन्यगतेति** ॥ सर्वहृदयेष्वितिशेषोक्तिः । अत्र श्रुतौ । तथाच-भेदव्यपदेशोसिद्धइतिभावः ॥ **औपचारिकत्वेति** ॥ षष्ठ्यर्थसंबंधस्यभेदव्याप्तत्वेन तदभावे घटस्यस्वरूपमित्या-दिवदिंद्रस्येत्यादिषष्ठ्यर्थस्यचोपचारिकत्वप्रसंगादित्यर्थः । इंद्रादिनामसमन्वयसिध्यर्थमितिप्रागुक्तमुपपादयितुंस्मारय ति ॥ **अत्रेति** ॥ नन्विंद्रनामसमन्वयकथने तत्प्रकरणपठितसर्वनामसमन्वयःसिध्यतीतिकिमनेनेत्यतआह ॥ **नाम-निर्णयेनेति** ॥ **संगतत्वादिति** ॥ अंतस्थस्यविष्णुत्वेनद्रूतत्वेनश्रुनादृश्यत्वस्यान्यनिष्ठत्वेन तद्युक्तानंदमयोपि अ न्यइतिपूर्वोक्तरीत्यासंगतत्वादितिभावः । अत्रविशेषाभावबोधबाधः ॥ **अधिदैवेति** ॥ देवाधिकाराख्यग्रंथप्रतिपा-द्यदेवेत्यर्थः । यथोक्तं । अधिदैवतं । देवाधिकारगंसर्वमिति ॥ ७ ॥ **अस्यलोकस्येति** ॥ अस्यलोकस्य पृथिव्याभिमानि नोब्रह्मणः कागतिरितिशालावत्येनपृष्टे आदौप्तत्वादाकाशनामकोविष्णुरितिहोवाचप्रवाहणः । कथमेतस्यपृथिव्यभि मानिब्रम्हणोगतित्वमित्यतस्तस्यमाहात्म्यमाह ॥ **सर्वाणीति** ॥ सर्वाणि इमानि प्रमाणप्रसिद्धानिभूतानि ब्रह्मरुद्रा दीनि आकाशादेवसमुत्पद्यंते इवाइत्यस्यार्थस्यवैदिकप्रसिद्धिमाह । आकाशप्रति अस्तं अदर्शनंयांति यत्रैव प्रलयेमु क्तौच लीनाभवंति कुतः हियस्मादाकाशएवैभ्योब्रह्मरुद्रादिभूतेभ्योज्यायान् तदपिकुतः आकाशःपरायणं उत्तमाश्रयः। नैतस्मादप्युत्तमंवस्त्वाशंक्यमित्याशयेनाह ॥ **सइति** ॥ सएषआकाशनामाभगवान् परोवरीयान् सर्वोत्तमः उद्गीथः उच्चैर्देवैर्गीथः सएषोनंतः देशतः कालतः गुणतश्चपरिच्छेदशून्यत्वादनंतनामकइत्यर्थः ॥ **आकाशस्येति** ॥ तथाचत त्स्वभावभूतप्रवृत्तिनिमित्तस्यापिभगवदधीनत्वमितिभावः । अत्रकाशे अव्याकृताकाशे ॥ **अनेनैव** ॥ आकाशस्येत्या दिभाष्यंणैव कथमित्यतआह ॥ **रूढेरिति** ॥ तस्यापि आनंदमयप्रयुक्ताकाशशब्दस्यापि ॥ ॐ **आकाशस्तल्लिं-**

गात् ॐ ॥ आकाशइतिहोवाचेत्याकाशशब्दवाच्योविष्णुरेव सएषपरोवरीयान्सएषोनंतइत्यादिना आकाशेश्रुत
परोवरीयस्त्वानंतत्वादिविष्णुलिंगादित्यर्थः । परोवरीयव्याख्यानरूपां छांदोग्यभाष्योदाहृतांस्मृतिमुदाहरति ॥ पर
स्मादिति ॥ परशब्दितभारत्युत्तमोब्रह्मा परोइत्युच्यते उशब्दस्योत्तमार्थकत्वात्तदुमारमापरोवरामिति तदुत्तमोहरिःपा
रोवरीयकइतिछांदोग्यभाष्योदाहृतस्मृत्यर्थः । उच्चत्वेन उत्तमत्वेन ॥ सएवेति ॥ निर्वचनत्वात्तकारस्यथकारइतिभावः ।
योपिसोपिनप्रवक्तीत्यर्थः ॥ अनंतत्वमुच्यतइति ॥ गुणतोनंतत्वस्याप्यनंतशब्दार्थत्वादितिभावः ॥ सर्वोत्तमत्व
मिति ॥ मात्रशब्देनपरिमितसर्वजगद्ग्रहणादितिभावः । स्मर्यतेभाविष्यत्पर्वणि ॥ महायोगेपि ॥ सर्वभूतगुणैर्युक्तंदेवत्वं
ज्ञातुमर्हसीत्युक्तेः । पुरुषादाकाशः यावान्वाअयमाकाशः आकाशोवैनामेति वैदिकप्रयोगबाहुल्याच्चेतिभावः ॥ नभइ-
ति ॥ अदोनभः यस्य हरेःप्रेरणाच्छासंकुर्वतांमार्गंददातीतितृतीयस्कंधवाक्यार्थः ॥ विष्णावेवेति ॥ सर्वाणिहवेति-
भूतकारणत्वमाकाशस्योच्यते । तच्चाकाशपदेनविष्णोरेवग्रहणेसंभवति । आत्मनआकाशःसंभूतइत्यादिना विष्णोरे
वसर्वभूतकारणत्वेनप्रमितत्वात् । भूताकाशस्यतुस्वव्यातिरिक्तभूतकारणत्वेनतद्ग्रहणे सर्वशब्दस्यसंकोचःकार्यइतिभावः ।
इदमभ्युपेत्योक्तं । उक्तरीत्याभूतशब्दस्यब्रह्मादिपरत्वात् । उशब्दस्योत्तमार्थत्वाच्च ॥ आधिभौतिकेति ॥ महाभू-
ताधिकाराख्यग्रंथप्रतिपाद्यंदेहाद्यात्मकृत्यंतंजडमधिभूतंतद्गतेत्यर्थः । यथोक्तंमहाभूताधिकारगं । तत्कारणंतथाकार्यम-
धिभूतंतदंतिकादिति ॥ ८ ॥ अन्यत्राप्येवमिति ॥ अत्रादाविति ॥ व्याख्येयसूत्रमेवादौपठ्यं अन्यथासंगत्याकांक्षा
नुदयात् । पश्चाद्विषयादिकंवाच्यमितिसूचयितुमित्यर्थः । क्वचित्संगत्यादिपूर्वकत्वपाठस्तुश्रोतृबुद्धिसौकर्यायेतिभावः
॥ ॐ अतएवप्राणः ॐ ॥ तद्वैत्वंप्राणइत्युक्तप्राणोविष्णुरेव । श्रीश्चतेलक्ष्मीश्चपत्न्याविति निरवकाशश्रीलक्ष्मीपतित्व-

लिंगादेवेत्यर्थः । लिंगनिरवकाशत्वमेवकारार्थः । यत्तच्छब्दयोरावृत्तिंमत्वाश्रुत्यर्थमाह ॥ **यस्मादिति** ॥ अभवइ-त्यतीतार्थकळङ्कघटनायकरिष्यमाणइत्येतदुपलक्षणमित्याशयेनाह ॥ **कुर्वाणोऽकार्षीच्चेति** ॥ हेतुहेतुमद्भावं-व्यनक्ति ॥ **स्वस्येति** ॥ इंद्रियाभिमानिदेवानांदशत्वादाह ॥ **पायुगुह्यैक्येनेति** ॥ ऐक्यविवक्षयेत्यर्थः । द्वितीया ध्यायभाष्योदाहृतस्मृतिमुदाहरति ॥ **यत्प्राप्तिरिति** ॥ यथाक्रममन्वयः ॥ **सुतरामिति** ॥ स्वभावतएवबाधेनिरव काशत्वादिनाकिम्वितिभावः । वायुरेवेत्यवधारणानुपपत्तिमाशंक्याह ॥ **प्राणशब्दस्येति** ॥ चेष्टायांवाह्यवायौचमु-ख्यवायौचगीयते ॥ प्राणशब्दस्त्रिषुह्येषुमुख्येमुख्यःप्रकीर्तितइतिद्वितीयाध्यायभाष्योदाहृतःस्मृतिः ॥ **श्रीलक्ष्मीति** ॥ यद्यपिह्रीश्चतइतितैत्तरयाः पठंति तथापिशाखांतरमप्यत्रोदाहर्तव्यमित्याशयेनशाखांतरस्थवाक्यमत्रोदाहृतमितिध्येयं । रमारूपविशेषयोःस्थानविशेषाकांक्षायामाह ॥ **वक्षस्थलाश्रिताश्रीरिति** ॥ लक्ष्म्यास्त्वंकगतत्वंप्रसिद्धमितिभा वः । ननुकथमयंनिर्णयः । नचत्राच्यंतस्याःश्रियःसजगतोजनकोजनन्यावक्षोधिवासमकरोत्परमांविभूतेः । श्रीःस्वाप्र जाःस्वकरुणेननिरीक्षणेनयत्रास्थितैधयतिसाधिपतींस्त्रिलोकानितिभागवतवचनेननिर्णयइति । नकेवलमेकगायाःश्रियोऽ हमितिभगत्पादैःश्रियोंकगतत्वोक्तेः । नापिश्रयतेवक्षस्थलमितिश्रीरितितन्निर्वचनेनतन्निर्णयः । श्रयतेंकामित्यपिसंभवात् वक्षसिलक्षणभूतालक्ष्मीरितितत्वप्रदीपोक्तनिर्वचनानुसारेणवैपरीत्यसंभवाच्च तस्मात्कथंश्रियोवक्षस्थलाश्रितत्वनिर्णय-इत्यतआह ॥ **इतिसंप्रदायविदइति** ॥ तथाचसंप्रदायएवात्रनिर्णायकप्रमाणमित्युक्तंभवति । अतएवश्रीवत्सइत्ये वभगवल्लिंगस्यनामनलक्ष्मीवत्सइति । व्यामिश्रोक्तिस्तु लक्ष्मीःपद्मालयापद्माकमलाश्रीर्हरिप्रियेतिश्रीलक्ष्मीशब्दयोः पर्यायत्वादुक्ता । स्मरणीयमुरोविष्णोरिंदिरावासमित्यादिवत् । यात्वंकाश्रिताश्रीःवक्षसिलक्षणभूतालक्ष्मीरितिनिरुक्तिः

सारूपविशेषयोरभेदाभिप्रायेणवस्तुस्थितिकथनायनस्थाननियमाभिप्रायेणेत्यर्थः । एतेनैवस्त्रोक्तार्थेभगवद्वाक्यरूपाग-
ममनभिधायसंप्रदायोक्तौकिंबीजं । नचतयोरभेदएवेतिवाच्यं । आगमोग्रंथनिबंधनंवाक्यं । संप्रदायस्तूपदेशपरंपरामा
त्रमिति भेदइतिप्रमेयदीपिकोक्तेरितिनिरस्तं । उक्तरीत्याभगवद्वाक्यस्यस्त्रोक्तार्थानिर्णायकत्वशंकानिरासायसंप्रदाय
ग्रहणादिति ॥ **महायोगस्यचेति** ॥ प्राणशब्दप्रवृत्तिनिमित्तजीवनप्रदत्वस्यतत्रैवनिरवधिकत्वादितिभावः ॥ **नप्रा
णेनेति** ॥ कश्चनमर्त्योजीवः प्राणादिनानजीवति किंतुयस्मिन्हरावेतौप्राणापानावुपाश्रितौ तेनेतरेणहरिणासर्वेजीव-
यंतीत्यर्थः ॥ **आध्यात्मिकेति** ॥ आत्माधिकाराख्यग्रंथप्रतिपाद्यमत्यंतात्माभिमानविषयांतःकरणादिदेहपर्यंतमध्या
त्मंतद्गतेत्यर्थः । **यथोक्तं** । अत्माभिमानाधिकारस्थितमध्यात्ममुच्यते । देहाद्धाह्यविनातीवबाह्यत्वादिति ॥ १ ॥
ननुगुहानिहितत्वंमंत्रवर्णेश्रूयते नत्वानंदमयप्रकरणे । अतःकथंतदानंदमयनिष्ठतयोच्यतइत्यतः प्रागुक्तंस्मारयति ॥ **मं
त्रवर्णेति** ॥ पततः चरतः वीदमित्यत्रकंपार्थोत्यंतमिति । दूरइत्यस्यार्थोअतीवेति । आङर्थोव्याप्तिः । दूरआधीत्य-
स्यैकपदत्वेपिदुखंडदर्शनाद्दूरइत्येतत्पृथक्कृतस्यपूर्वत्रान्वयकरणमुपपन्नं । नुशब्दार्थइदानीमिति । प्रकरणमात्रस्यलिंगतो
दौर्बल्येपि श्रुतिसहितस्यप्राबल्यंसंभवतीत्याशयेनाह ॥ ज्योतिःश्रुतेरिति ॥ यावता येनप्रकारेण ॥ ॐ **ज्यो
तिश्चरणाभिधानात्** ॐ ॥ ज्योतिर्हृदयइत्युक्तंज्योतिर्ब्रह्मैव । विमेकर्णेत्यादिनाकरणादीनांविरुद्धचरणोक्तेः ।
कर्णादिसर्वेंद्रियदूरत्वलिंगादित्यर्थः । वैय्यधिकरण्यनिरासायकर्णादिविदूरइत्युत्तरभाष्यानुरोधेनाह ॥ **कर्णादिवि-
दूरत्वेति** ॥ अत्र कर्णादिविदूरत्वंनाम इयदितिपरिच्छेदरहितवैभवत्वंबोध्यं । मापयति ज्ञापयति ॥ **महायोगेति** ॥
निरवधिकप्रकाशवत्वात् अग्न्यादिनिष्ठप्रकाशनियामकत्वात् । ज्योतिषांज्योतिः । नारायणपरोज्योतिः । विष्णुरेव-

ज्योतिरित्यादिवैदिकप्रयोगबाहुल्याच्चेतिभावः ॥ **निरवकाशलिंगेनेति** ॥ अग्निर्वैदेवानामवमइत्यवमतया भीषा स्मादाग्निस्तपतीतिसभयतया परिहोनेम्रियंतेविद्युद्वृष्टिश्चंद्रमाआदित्योग्निरितिमरणादिमत्तयाचश्रुतस्याग्नेरपरिच्छिन्न- वैभवासंभवादितिभावः ॥ १० ॥ ॐ **छंदोभिधानान्नेतिचेन्नतथाचेतोर्पणनिगदात्तथाहिदर्शनं** ॐ ॥ गायत्रीवेत्युक्तगायत्रीछंदोविशेषएवस्यात् । गायत्रीपदेनछंदसोभिधानात् तस्मान्नतद्ब्रह्मेतिचेन्न । किंतुब्रह्मैवगायत्री कुतः हियस्मात्तथादर्शनं गानत्राणकर्तृत्वलिंगबोधकगायतित्रायतिचेतिश्रुतिरस्ति तस्मादित्यर्थः । विष्ण्वादिप्रसिद्धप दानिविहायाप्रसिद्धगायत्रीपदेनतन्निर्देशेकिंनिमित्तमित्यतउक्तं ॥ **तथेति** ॥ तथागानादिकर्तृत्वगुणविशिष्टतया चेत सि अंतःकरणे अर्पणार्थं ध्यानार्थं उपासनार्थमितियावत् । निगदात् गायत्रीवाइदंसर्वमितिकथनादित्यर्थः ॥ अथे ति ॥ अथद्वारपोपास्तिकथनानंतरंपुनर्भगवन्माहात्म्यमुच्यते । यच्छ्वेतद्वीपानंतासनवैकुंठगतमूर्तित्रयंतत् । अतः बुद्धि स्थतयाविवक्षितायादिवःपरः । ज्योतिः तेजोमयं विश्वतः मेरुवैजयंतसत्यलोकाख्यब्रह्मसदनेभ्यः पृष्ठेषु क्रमेणोच्चेषु सर्वतः भूर्भुवःस्वरात्मकसर्वलोकेभ्यः पृष्ठेषु अनुत्तमेषु नविद्यतउत्तमोलोकोयेभ्यस्तेषु स्वयमेवोत्तमेषु अनंतासनश्वेतद्वी पवैकुंठेषु दीप्यते प्रकाशते तत्सर्वलोकेषुदीप्यमानंतेजः इदंवाव इदंखलु इदंकिं यदिदमस्मिन्नंतःपुरुषे पुरुषहृदये ज्यो- तिरस्तितदित्यर्थः ॥ **गायत्रीवेति** ॥ अत्रभगवतःषड्विधरूपेषुगायत्रीनामकंस्त्रीरूपंहयशीर्षकंप्रथमरूपापेक्षयाद्वितीयं रूपमुच्यते । यदिदंकिंच भूतंहीबहुपूर्णतायामित्युक्तेः भूतंपूर्णमत्स्यादिसर्वांतस्थितंच तादिदंसर्वंगायत्रीनामाभगवानेव । एवंचभूतशब्दाभिधेयंमत्स्यादिसर्वांतस्थितंद्वितीयंरूपमित्युक्तंभवति । अस्यैवतृतीयंरूपमाह ॥ **वागिति** ॥ गायत्री नामाभगवान्वाग्वैव वाक्संस्थोवचनाद्वाङ्नामास्त्रीरूपोहयशीर्षाख्यएव । नतुतद्भिन्नइत्यर्थः । वाङ्नामकस्य भगव

ब्रूपत्वंकुतइत्यतस्तल्लक्षणयोगादित्यतआह ॥ **वाग्वेति** ॥ इदं सर्वंप्राणिजातं वाग्वै वाङ्नामकभगवदधीनमेव वाचा-
हिप्रवर्ततेनिवर्ततेचलोकः । सर्वलोकप्रवर्तकत्वंचभगवल्लक्षणंचप्रसिद्धमेवेति ॥ **छंदोविशेषइति** ॥ गायत्रीछंदोपेतमं-
त्रविशेषइत्यर्थः ॥ **वाग्विधानाच्चेति** ॥ नह्यशब्दात्मकस्यतत्संभवतीतिभावः । तेजः कांतिः । **ब्रह्मवर्चसं** अध्ययन
लब्धकांतिविशेषः । तदुभयसाधनंगायत्रीत्यर्थः ॥ **योगस्येति** ॥ गायतिवेदान्त्रायतेचाध्यापकान्पापेभ्यइतिनिर्व
चनादितिभावः । नित्यस्येति । अनादिनित्यस्येत्यर्थः । अन्यथोत्पत्तावीश्वराधीनत्वापरिहारात् । अतएवन्यायविवर
णटीकायां वेदस्यनित्यत्वेनानादित्वादित्युक्तं । वेदस्यनित्यत्वादनादित्वाच्चेतिसुधाग्रंथाच्च । यद्यपि कृतकक्रमविशिष्टस्य
वर्णात्मकस्यवेदस्यनानादित्वं । तथापीश्वरबुद्धिघटितस्यतथात्वेनवाकृत्वाचिंतयावातदुक्तिरित्यदोषः । **स्वपदानि** स्वो-
क्तपदानि । सूत्रार्थोवर्ण्यतेयत्रपदैःसूत्रानुकारिभिः । स्वपदानिचवर्ण्यंतेभाष्यंभाष्यविदोविदुरित्युक्तेरितिभावः । गा-
यत्र्यादीति । गायत्र्यादिशब्दार्थोगानत्राणकर्तृत्वादिः सएवगुणः तत्स्वरूपत्वेनेत्यर्थः । आदिपदेनवाचोग्रहणमिति । वा
ग्वैगायत्रीतिश्रुतौ वाक्शब्दार्थगुणवत्तया उपासनार्थं विष्णुर्वागित्युक्तं । नथाचवाक्त्वविधानंनविष्णुत्वपक्षेबाधकमितिभा
वः ॥ **एतन्यायस्येति** ॥ तत्तच्छब्दसमन्वयकथनं तदर्थगुणस्वरूपत्वेनोपासनार्थमितिन्यायस्येत्यर्थः ॥ **यावैसेति** ॥
चतुर्थरूपमनेनोच्यते । यावैगायत्रीतत्संस्थतन्नामाभगवान् साऽयंवावऽयंखलुइयंकेत्यपेक्षायामाह ॥ **येयमिति** ॥ पृथु
त्वात्पृथिवीनामापृथिवीसंस्थोभगवानित्यर्थः । तथाचात्र यावैसेत्यादिना गायत्र्याः पृथिव्यभेदमुक्त्वा अस्यांहीदंसर्वंप्रति
ष्ठितमितिपृथिव्याःसर्वाधारत्वमुक्तं । तच्चविष्णोरेवगायत्रीपथिव्यादिशब्दार्थत्वेयुक्तंनान्यथेतिभावः ॥ **श्रुत्युक्तेति** ॥ गाय
तीतिश्रुत्युक्तेत्यर्थः । कर्माणिपुण्यपापानि । क्रिया चेष्टा । स्मृतिविशेषोदाहरणप्रयोजनमाह ॥ **अत्रेति** ॥ ॐ **भूतादिपाद**

व्यपदेशोपपत्तेश्चैवं ॐ॥ एवंगायत्रीब्रह्मैव। पादोस्यसर्वाभूतानित्रिपादस्यामृतंदिवीतिगायत्रीधर्मतयाव्यपदिष्टजीवामृ ताख्यरूपत्र्यंशकत्वस्यतस्मिन्नेवोपपत्तेरित्यर्थः॥ सैषेति॥ सैषाषड्विधागायत्रीभूतवाक्पृथिवीशरीरहृदयभेदेनषड्रूपगाय त्रीचतुष्पदाभूतमूर्तित्रयाख्यांशवतीत्यर्थः। व्यपादिश्य विहिता तत्रैवचतुष्पादत्वएव॥ तदेतादिति॥ तदेतद्भगवतःचतुष्पा दत्वं ऋचामंत्रांतरेणअभिकथमेतदितिशंकामभितदुत्तरत्वेनेतियावत्। आनुकूल्येनोक्तमित्यर्थः। ज्यायान् अधिकमहिमा। भूतानि जीवाः। पादत्रयं नारायणवासुदेववैकुंठाख्यं। दिवि अनंतासनश्वेतद्वीपवैकुंठेषु। पादत्रयस्यैवभूतानामपिस्व- रूपांशत्वमुच्यतइतिभ्रांतःशंकते॥ नन्विति॥ भिन्नंचेत्यंतग्रहणाय सुवर्णमित्यादीत्यादिशब्दः भाष्यमाकांक्षाक्रमेण योजयति॥ नायमिति॥ विश्वचतुष्टयसमइति॥ विश्वबलचतुष्टयसामर्थ्यवानित्यर्थः। साकला। उत्तरभा- ष्यंसंगमयितुमाह॥ नकेवलमिति॥ तदभावात् यज्ञश्रुत्यभावात्। अध्याहारेगौरवात्प्रकारांतरमाह॥ पुरुषसूक्तेति॥ पृथक् भूतादिपादत्वापेक्षया॥ ॐ उपदेशभेदान्नेतिचेन्नोभयस्मिन्नप्यविरोधात् ॐ॥ गायत्रीज्योतिषोर्द्युस्थ त्वदिवःपरत्वविरुद्धधर्मोपदेशात्तद्द्वयंब्रह्माख्यैकवस्त्वनुपपन्नमितिचेन्न। विवक्षाभेदेनोभयथोपदेशोपपत्त्याविरोधाभा- वादित्यर्थः। प्रसंगयोः प्रकरणयोः। विरोधादिति॥ द्युस्थत्वदिवःपरत्वयोरेकत्रविरोधादित्यर्थः। सप्तमीपंच म्योः तद्घटितवाक्ययोः लोकत्रयविवक्षायांपरतालक्षयोजनात्। सर्वेद्यौरितिविज्ञेयंततस्तेदिविसंस्थिताः। दिवःपरश्च भगवान्सप्तलोकविवक्षयेति प्रमाणानुसारेणाह॥ भूरिति॥ अंतरिक्षस्यद्युत्वलाभायलक्षयोत्तनोक्तित्वोक्तिः॥ सप्ते ति॥ भूः भुवः स्वःमहः जनः तपः सत्यमितिसप्तेत्यर्थः। पृथिव्यांद्यौर्महामेरुराकाशेसूर्यमंडलं। दिवोंद्रसदनंचैवतत्परंतुदि वःपरइतिप्रमाणानुसारेणाह॥ इंद्रसदनस्येत्यादि॥ अत्रत्रिलोकविवक्षायामपिमेवादिपरत्वेनादिवःपरत्वसिद्धावपि वैकुं

ठस्यदिवःपरत्वसिद्धयेसप्तलोकविवक्षोक्तिः । विशेषस्तुचंद्रिकाभावबोधयोर्द्रष्टव्यः । पौनरुक्त्यवारणायसर्वतःपृष्टविश्वतः पृष्टशब्दौव्याचष्टे ॥ एवमिति ॥ पृथिवीस्थेषुसर्वोच्चोलोकोनंतासनात्मकः । अंतरिक्षात्मकेभ्यश्चश्वेतद्वीपस्थितोहरिः। द्यात्मकेभ्यश्चसर्वेभ्योवैकुंठश्चोच्चउच्चतइतिउक्तेरितिभावः । पृथिव्यांब्रम्हणामेरौजयंतंत्वंतरिक्षगं । तृतीयंसत्यलोकंच सदनंत्रिविधंस्मृतं । तेभ्योनंतासनाद्यायत्परतो विश्वतःपरइतिप्रमाणानुसारेणाह ॥ तथेति ॥ ११ ॥ तावाएताइति ॥ ताएताःश्रियःशीर्षशिरः श्रिताः आश्रिताः कास्ताःश्रियइत्यतउक्तं चक्षुरित्यादि ॥ प्राचीनप्राणइति ॥ ननुश्रीपतित्वादिनातत्रत्यप्राणस्यविष्णुत्वात्कथमेतदितिचेत् । अत्रत्यलिंगानांवक्ष्यमाणरीत्याबलवत्वेनतद्विरुद्धश्रीपतित्वादीनामन्यथायोज्यत्वान्नतैर्विष्णुत्वनिश्चयइतिभावः । पूर्वोक्तन्यायः महायोगविद्वद्रूढिसत्वात्प्राणशब्दोविष्णुवाचकइतिन्यायः । वाय्वादिरेवेत्यादिशब्दंनेंद्रजीवयोर्ग्रहणं ॥ नचैतदिति ॥ सर्वोत्तमस्यचक्षुरादिभिःसहपाठायोगादितिभावः ॥ उपपद्यते चेति ॥ मुख्यप्राणस्येंद्रियस्वामित्वादिंद्रस्यहस्तेंद्रियाधिष्ठितत्वात्जीवस्येंद्रियफलभोक्तृत्वादितिभावः ॥ ॐ प्राणस्तथानुगमात् ॐ ॥ यथातद्वत्वंप्राणइत्ययंप्राणोविष्णुः तथैतरेयश्रुतःप्राणोपिविष्णुरेव । ब्रह्मशब्ददेवोपास्यत्वदेवोपदेशत्वादितच्छ्रुतिलिंगानामस्मिन्प्रकरणेऽनुगमादनुवृत्तेरभ्यासादित्यर्थः । नीतवंतः उपदिदिशुरितियावत् । सएषभगवान्दैत्यनिरसनादसुनामासएषः प्रकृष्टानंदत्वात्प्राणः सतांज्ञानैश्वर्यादिभूतिदातृत्वाद्भूतिः असतामज्ञानाद्यनैश्वर्यदातृत्वादभूतिः तंभगवंतंदेवाभूतित्वेनोपासनांचक्रिरइत्यर्थः ॥ तावाइति ॥ ऋगादयःसर्वेप्राणेपरमात्मविषयैकैवव्याहृतिर्व्याहरणं । एकमेवनाम निर्दोषगुणपूर्तिवाचित्वादेकप्रकारत्वं ऋचःविशेषेणप्राणपराइतिविजानीयादित्यैतरेयभाष्योक्तदिशार्थः। टीकाकारास्तु। प्राणएवेत्यत्रप्राणशब्दस्यप्रथमांतत्वमंगीकृत्ययास्ताएताःसर्वाऋचःतासामेकैवव्याहृतिः एकमेवव्या

हरणं तच्चप्रतिपाद्यंप्राणएव किंचयेसर्वेवेदाः । तेषामपीश्वरएवप्रतिपाद्यःकिमुऋचां अपिच येसमुद्रादिघोषाः तेषामपीश्वरएवप्रतिपाद्यःकिमुवेदानां । ऋचस्तुविशेषेणप्राणप्रतिपादकाइति । जानीयादितिज्योतिरूपक्रमादित्युत्तरव्याकरिष्यंति ॥ अथदेवरथइति ॥ देवाधीनोदेहाख्यरथउच्यते । तस्यदेवरथस्यवाक्तदभिमानीउमाउद्धिःउद्धारणरज्जुः । श्रोत्रे तदभिमानिचंद्रतद्वार्यै पक्षसीपार्श्वनियुक्ताश्वौ । चक्षुषीतदभिमानिसूर्यतद्वार्ये युक्ते अग्रतोनियुक्ताश्वौ मनःप्रनोभिमानीरुद्रःसंगृहीता रथयंता प्राणस्तादृशंरथमधितिष्ठतीत्यर्थः । रथप्राणशब्दयोः पुंल्लिगत्वात्तदितिपरामर्शानुपपत्तिरित्यतआह ॥ सचासाविति ॥ आहुः बह्मतर्के । तयोःबहुत्वस्वभावाभ्यांबलवतोर्मध्ये कोयंस्वभावइत्यतउक्तं ॥ उपजीव्येति ॥ सःस्वभावउपजीव्यत्वनिरवकाशत्वादिरूपइत्यर्थः । अनन्यथासिद्धतां निरवकाशत्वं अभ्युपेत्यपूर्वपक्षलिंगस्य निरवकाशत्वं ॥ अंतर्यामीति ॥ वाय्वादीनामिंद्रियैःसहगणितत्वेतदंतर्यामिणोपि तैःसहगणितत्वमितिभावः ॥ प्रकारद्वयेन ॥ एकत्वसावकाशत्वाभ्यां ॥ ॐ नवक्तुरात्मोपदेशादितिचेदध्यात्मसंबंधभूमा ह्यस्मिन् ॐ ॥ ब्रहतीसहस्रंवक्तुःविश्वामित्रस्यतंप्रतीतियावत् । प्राणोवा अहमस्मिऋषइतींद्रेणस्वात्मनएवप्राणतयाअभिधानान्नप्राणोब्रह्मेतिचेन्न अस्मिन्निंद्र आधिकात्मनःपरमात्मनः संबंधभूमा संबंधबाहुल्यंहियस्मादस्ति अतस्तदपेक्षयाप्राणोवाअहमस्मिऋषइत्युक्तिर्नस्वात्मापेक्षयेत्यर्थः ॥ तमिंद्रइति ॥ विश्वामित्रोक्तब्रहतीसहस्रंश्रुत्वातुष्टइंद्रोविश्वामित्रंप्रत्युवाच हेऋषे मेधामग्रहंप्रत्यागाः । आगछ तेप्रियंवरंददामि । त्वांत्वदंतर्यामिणं मयिस्थितःप्राणःप्रकृष्टचेष्टकत्वात्प्राणइति । अहेयत्वादहमिति । असनान्निरसनान्मिनुतंज्ञानाच्चास्मीतिचनामवानित्यर्थः । बृहतीसहस्रंबृहतीछंदोपेतऋक्सहस्रं महाव्रताख्योयज्ञः ॥ नचेति ॥ त्वामेवजानीयामितिपूर्ववाक्यविरोधादितिभावः ॥ प्राणस्त्वमिति ॥ प्राणस्त्वयिसर्वभूतेष्वपिवर्ततइत्यर्थः ।

आत्मशब्दस्यदेहपरत्वमुपेत्यव्याख्यायजीवपरत्वमुपेत्यप्रकारांतरमाह ॥ **अथवेति** ॥ **ज्ञातपूर्वेंद्रेति** ॥ अन्यथात्वामित्यनुवादानुपपत्तिरितिभावः। सामान्यज्ञानेपिविशेषजिज्ञासयाप्रश्नःसंभवतीत्यतआह ॥ **संभवेवेति** । **असंगतिरिति** ॥ तेनस्वस्वरूपादेरपृष्टत्वादितिभावः ॥ ॐ **शास्त्रदृष्ट्यातूपदेशोवामदेववत्** ॐ ॥ तुरेव । शास्तीतिशास्त्रमंतर्यामीतदृष्ट्यातदपेक्षयैवाहमित्युपदेशः । नतादात्म्येन वामदेववत् वामदेवोपदेशवत् । यथावामदेवोप्यंतर्याम्यपेक्षया अहमनुरभवंसूर्यइत्याह तद्वदित्यर्थः । भाष्ये सम्यङ्निर्दोषमात्मानंवेत्तीतिसंवित् । शास्त्रमंतर्यामी पश्यतुइतिपदं उत्तमंप्रासव्योत्तममितिप्रथमभागवतार्थः । साक्षात् विशिष्टयोरेवलक्षणया । विशिष्टांशत्यागेनचिन्मात्रलक्षणयावा ॥ **समम्मिति** ॥ अंतर्यामिणिलक्षणांगीकारादितिभावः ॥ ॐ **जीवमुख्यप्राणलिंगान्नेतिचेन्नोपासात्रैविध्यादाश्रितत्वादिहतद्योगात्** ॐ ॥ शतायुष्ट्वादिजीवलिंगात्प्राणसंवादादिमुख्यप्राणलिंगाच्चनप्राणोविष्णुरितिचेन्न । यस्माज्जीवमुख्यप्राणलिंगोपदेशोंतर्याम्यपेक्षयैवयुक्तइतिपूर्वसूत्रादनुवृत्त्यायोज्यं । किमर्थमंतर्याम्युक्तिरित्यतउक्तं ॥ **उपासेति** ॥ अंतर्यामित्वेनबहिश्चेतिभेदेन ब्रह्मोपासनायास्त्रैविध्यात् । त्रैविध्यस्यचेहप्रकरणेसएवंत्यादिना आश्रितत्वादुक्तत्वादित्यर्थः । एकयैवोपासनयालं किंत्रैविध्येनेत्यतउक्तं ॥ **तद्योगादिति** ॥ तस्याधिकारित्रैविध्यस्याधिकारिभेदेनयोगाद्युक्तत्वादित्यर्थः । तावंतीत्यादिश्रुतौशतायुष्ट्वस्यप्राणनिष्ठतयानुक्तत्वादाह ॥ **एषइमामिति** ॥ एषइमंलोकंब्रह्मादिशरीर । पुरुषरूपेणांतर्यामिरूपेण । अभ्यार्चत प्रविवेश । तदेवकार्यलिंगेनदर्शयति । यएषआदित्येस्थितत्वातपतीति । एतच्छब्दार्थवदन्नेवदार्ढ्यायोक्तमेवपुनरेवाह ॥ **प्राणइति** ॥ तत् शरीरं । कःप्राणइत्यतउक्तं ॥ **प्राणोह्येषयएषतपतीति** ॥ यस्मादयंप्राणस्तंदेहंशतंवर्षाणि अभ्यार्चतप्रविश्यस्थितः तस्मात्पुरुषायुषः आयूंषिशतंवर्षाणि-

इतिप्रसिद्धानिभवंतीत्यर्थः । बृहतीसहस्र वर्णानांसहस्राणियावंतिषट्त्रिंशतिसंख्याकानि तावंतिसहस्राणिशतसंवत्सर-
स्यान्हांभवंतीत्यर्थः ॥ ताइति ॥ ताश्चक्षुरादिश्रियोहंश्रेष्ठोस्म्यहंश्रेष्ठोस्मीत्येवंकलहमकुर्वंतेत्यर्थः ॥ प्राणइति ॥ प्राणो
मुख्यवायुः विराड्देहादुत्क्रांतः प्राणउत्क्रांतेसति तच्छरीरंपतितं प्राणः पुनस्तच्छरीरंप्रविवेश । प्राणेप्रविष्टेसतितच्छरीरमु
त्थितमित्यर्थः॥ प्राणोवंशइति ॥ प्राणोमुख्यवायुर्वंशः सर्वाश्रयइतिस्थविरःशाकल्यमुनिराह । तद्यथा तृणादिनिर्मि
तगृहस्यप्रधानवंशेनावांतरवंशवःसम्यक्स्थापिताआश्रिताः एवमस्मिन्प्राणेचक्षुरादींद्रियाणि शरीरंतदभिमान्यात्मा
जीवइत्येतेसर्वेसमाहिताइत्यर्थः ॥ अथेति ॥ प्राणाः इंद्रियाभिमानिदेवाः अहंश्रेयसीश्रेयानित्यर्थेकलहमकुर्वंतेतिछंदो-
गवाक्यार्थः । एतल्लिंगानांनिरवकाशत्वमैतरेयभाष्योदाहृतस्मृत्यादर्शयति ॥ उदासीनाविति ॥ ननुप्राणंविनान
चब्रह्मातंविनाप्राणएवच अन्योन्यापाश्रयाच्छक्तौस्थातुमन्येकुतस्ततइतिब्रहद्भाष्येप्राणंविनाब्रह्मणोऽनवस्थानोक्त्या
कथंप्राणउत्क्रांतेतस्मिंछरीरंब्रह्मणऔदासीन्येनावस्थानमितिचेदुच्यते । अंशेनसुप्तोब्रह्मातुअंशेननिरगात्पुनः ।
स्वदेहाद्वायुसहितोविष्णुनाचजगत्प्रभुरिति तृतीयस्कंधतात्पर्यानुसारेणांशेन निर्गतत्वेप्यंशेनदेहस्थितस्यानिर्व्यापाररू-
पोदासीन्यांगीकारात् ॥ भगवद्विषयतयेति ॥ बाह्यरूपेणोदासीन्योपपत्तेरितिभावः । लिंगं ज्ञापकं मस्तकसीमानं
शिरोमध्यभागं ॥ सप्राणंतस्थइति ॥ तंप्रपदाभ्यांप्रापद्यतेत्यादिनाप्रपदाभ्यांप्रविष्टोनारायणइत्यर्थः । एतमित्यस्या
र्थः प्राप्तमिति । इणगतावित्यस्माद्धातोः सुषुम्नयाहृदयंप्राप्तवासुदेवमात्मानंस्वात्मस्वरूपंततमं अतिशयेनव्याप्तंब्रह्म पूर्ण
मपश्यदित्यर्थः । तकारस्यव्याप्त्यर्थत्वात् । तमपश्चातिशयार्थत्वात्ततमित्येतत्ततममित्यर्थकमितिभावः ॥ बहिरूपास्त्य
र्थमिति ॥ तस्यबहिष्टमूर्तित्वादितिभावः ॥ नोपासनार्थमिति ॥ उपासनापदाश्रवणादितिभावः । एतद्ब्रह्मवैत-

द्विद्वानाहहिरण्यदन्वैदइत्यादिवन्माहिदासोपिऋषिनयोच्यतांनोपासनार्थमित्यतआह ॥ **नहीति** ॥ एतदुपनिषदऐतरेयसंज्ञयैवेतरापुत्रस्यमाहिदासस्यऋषित्वमित्थ्यानदुक्तिनैष्फल्यादित्यर्थः ॥ **विशेषप्रमाणमिति** ॥ पूर्वंतुकेषांचिदित्येवोक्तत्वात्सामान्यप्रमाणमितिभावः । नन्वत्रोपासनाचतुष्टयमुच्यतेबहिरुपामनंचनोच्यतइत्यतआह ॥ **अत्राविति** ॥ १२ ॥ ॥ **इति श्रीमत्तत्वप्रकाशिकावाक्यार्थमंजर्यांशंकरायां श्रीनिवासविरचितायां प्रथमाध्यायस्यप्रथमःपादः** ॥ १ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ श्रीगुरुभ्योनमः ॥ शब्दानांलिंगात्मकत्वंनाम तत्स्वरूपत्वंवातद्वाचकत्वंवा । नाद्यः शब्दस्यार्थस्वरूपत्वापत्तेः। नद्वितीयः लिंगवाचिनांसर्वगतत्वमित्यादीनांभगवतिसमन्वयानभिधानादित्यतआह ॥ **धर्मविशिष्टेति** ॥ **सहपठितेति** ॥ स्वतःप्रसिध्यभावादियमुक्तिः । अत्रलिंगात्मकेतिपादसंगतिः । शेषंपूर्ववत् ॥ **तदेवेति** ॥ तदेकदेशभूतमेवेत्यर्थः । एतमेवेत्यवधारणेनविष्णोरन्यस्यैवसर्वभूतगतत्वावगमात् विष्णोर्भूतान्यत्रसत्वोपेनपूर्वोक्तानिरुपचरितसर्वगतत्वमितिभावः ॥ **एतंह्येवेति** ॥ ऋग्वेदिनएतमेवपरमात्मानंमहदुक्थनामकब्रहतीसहस्रे यजुर्वेदिनोग्नौ सामवेदिनोमहाव्रताख्यकर्मांगभूतस्तोत्रे मीमांसंते विचारयंति । अस्यां पृथिव्यां । वनस्पतिषु वृक्षेषु । भूतेषु प्राणेषु ब्रह्म पूर्णं आचक्षतेवदंति आम्नायते अभ्यस्यते अभिधीयतइतियावत् ॥ **एकप्रकरणत्वादिति** ॥ ब्रम्ह ततमं एतंह्येवेत्यनयोरेकप्रकरणस्थत्वादित्यर्थः । ब्रह्मततममपश्यदित्युक्तिः प्राणाख्यहरौतेनवाक्येनसर्वगतत्वोक्तिः आदित्यश्रुतिरुपलक्षणं । चक्षुर्मयत्वादिजीवलिंगंचेत्यपिग्राह्यं । तस्यैतस्यासावादित्योरसः सयश्चायमशरीरःप्रज्ञात्मा यश्चासावादित्यएकमेतदितिविद्यात् त

स्मात्पुरुषंपुरुषंप्रत्यादित्योभवतीत्यस्यार्थः । तस्यैतस्यसंवत्सरस्यसर्वस्यादित्वात्सर्वस्मिंस्ततत्वात्सर्वजीवनियामकत्वा-दादित्यनामाप्रद्युम्नोरसःश्रेष्ठः । सयश्चायमशरीरः प्राकृतदेहरहितः । प्रज्ञात्मा ज्ञानात्मकोनिरुद्धः । यश्चासावादित्यगतःप्रद्युम्नः एतस्थानद्वयगतंभगवद्रूपमेकमितिजानीयात् । तस्मात्पुरुषगतानिरुद्धस्यादित्यगतप्रद्युम्नस्यचैक्यादादित्यःपुरुषंपुरुषंप्रतिपुरुषमभिमुखोभवतीति ॥ सूर्यइति ॥ सूरिभिःप्राप्यत्वात्सूर्योहरिः जगतः जंगमस्य । तस्थुषःस्थावरस्यात्मांतर्नियामकइत्यर्थः । विशिष्यादित्येऽनुक्तत्वलिंगनादित्यशब्दस्यादित्यानंतर्गतपरत्वावगमेनतदंतर्गतांतर्यामिपरत्वकथनमयुक्तमितिभावः । छंदोमयः वेदप्रचुरः ॥ अल्पौकस्त्वेति ॥ अल्पंओकःस्थानंयस्यतस्यभावअल्पौकस्त्वं तच्चसर्वगतस्यांतर्यामिणोब्रंह्माडस्यसर्षपस्थत्वमिवायुक्तमित्यर्थः ॥ चक्षुर्मयत्वाद्ययोगाच्चेति ॥ नित्यज्ञानवदंतर्यामिणोज्ञानकरणचक्षुरादिप्राचुर्यायोगाच्चेत्यर्थः ॥ ॐ सर्वत्रप्रसिद्धोपदेशात् ॐ ॥ सर्वत्रपृथिव्यादिषूच्यमानंब्रह्मैव । श्रुत्यादौब्रह्मण्येवप्रसिद्धब्रम्हशब्दस्य एतमेवब्रम्हेत्याचक्षतइत्यादिनातत्रोपदेशादित्यर्थः । नारायणपदोपादानसूचितांश्रुतिमाह ॥ तथाचेति ॥ यत्किंचिदल्पंयच्चसर्वंमहत्जगत्प्रत्यक्षेणदृश्यतेशब्देनज्ञायतेऽपिनारायणस्तत्सर्वमंतर्बहिश्चाभिव्याप्यास्थितइत्यर्थः । स्वतइत्यनेनश्रौतत्वादौव्यभिचारपरिहारः ॥ ॐ विवक्षितगुणोपपत्तेश्च ॐ ॥ विवक्षितानांवक्तुंयोग्यानांवक्ष्यमाणानामुपसंहारेश्रुतानांगुणानामश्रुतत्वादिधर्माणामुपपन्नत्वाच्चसर्वगतंब्रह्मैव नादित्यादिः तेषांतत्रानुपपत्तेरित्यर्थः ॥ सयोतइति ॥ योभगवानतोव्याप्तः अन्यैःसाकल्येनाश्रुतः अगतः अप्राप्तः। अमतः अविचारितः। अनतःस्वतंत्रः। अदृष्टः प्रत्यक्षेण। अविज्ञातः विशेषज्ञानाविषयः । अनादिष्टः उपदेष्टुमशक्यः । स्वयंचसाकल्येनश्रोतामंताविचारयिताद्रष्टादेष्टोपदेष्टाघोष्टाशब्दकर्ता । वि

शेषेणज्ञातामकर्षेणज्ञाता मनारायणः सर्वेषांभूतानामंतरपुरुषः अंतर्यामी पूर्णश्चेत्यर्थः ज्ञानावांतरविशेषसद्भावान्नात्रपुनरुक्तिःशंक्या ॥ विवक्षिताइति ॥ अस्येतिशेषः ॥ वक्तुंयोग्याइति ॥ इत्यर्थइतिशेषः मुखतःकंठतः श्रोत्रादिनेतिपूरणीयत्वादितिभावः । अश्रुतत्वादिकिंसाकल्येनैवनसर्वात्मनेतिसूचयितुंभाष्येऽनंतइत्युक्तं ॥ सर्वगतत्वानतिरिक्तत्वेनेति ॥ अतसातत्यगमनेतिधातोः सततोह्यतउच्यतइतिवचनाच्चातत्वंसर्वगतत्वानातिरिक्तमित्यर्थः । अन्यथासाध्याविशेषप्रसंगइतिभावः । संबंधभाष्येण सूत्रसंगतिप्रदर्शकप्राचीनभाष्येण ॥ ॐ अनुपपत्तेस्तुनशारीरः ॐ ॥ शारीरःशरीरसंबंधि आदित्योजीवोनसर्वगतः सर्वगतत्वानुपपत्तेरेवेत्यर्थः । प्रत्येकं एकैकस्य ॥ तुशब्दइति ॥ तेनानुपपत्तेरपरिहार्यत्वकिंतत्रयुक्तिगवेषणयेतिसूचितामितिभावः। उपपत्तिमाशंक्यनिराकरोति ॥ नचेति ॥ स्वर्गादवाग्गतस्यस्थूलशरीरसंबंधार्थंव्रीह्यादिशरीरगतस्यापिजीवांतरस्यछेदादिनादुःखाभावात्स्वकर्मनिर्मितशरीरमेवभोगसाधनमंगीकार्यं नचसर्वशरीराण्येककर्मनिर्मितानि येनतस्यसर्वशरीरजन्यदुःखादिप्रसंगइत्यर्थः । कर्मभेदस्य अस्यैवेदंकर्मनैतस्येतिविवेकस्यदृष्टांततुपौर्वापर्यसत्वान्नैवमितिभावः ॥ भवदभ्युपगमादिति ॥ तस्यतत्त्वाभिमानित्वादितिभावः ॥ ब्रह्मादीति ॥ ननुतद्देहस्यापिचतुर्विंशतितत्वात्मकत्वेनास्त्येवतत्रसूर्यप्रवेशः । अन्यथाविराड्देहेतत्वाभिमानिनांप्रवेशानिर्गमाभ्यांवायुश्रेष्ठत्वनिश्चयानुपपत्तिरितिचेन्न अत्रभूतानामंतरपुरुषः सूर्यआत्मेत्यादिनादित्यस्यप्रेरकत्वश्रवणेनब्रह्मादिशरीरप्रेरकत्वेनतत्प्रवेशायोगस्योक्तत्वात् बहिस्थपुन्नामकब्रह्मदेहस्यमहत्तत्वमात्रात्मकत्वेनतत्प्रवेशाभावाच्च । तदेतदाह ॥ सर्वशरीरेति ॥ ॐ कर्मकर्तृव्यपदेशाच्च ॐ ॥ एतमस्याभित्यादिनासर्वत्रोच्यमानस्यात्मानमितिकर्मत्वेनशारीरस्यशंसतीतिकर्तृत्वेनाभिधानाच्चनशारीरः सर्वगतइत्यर्थः । घटज्ञानेकर्तुरेवदेवदत्तंयज्ञदत्तोजानातीत्यत्रकर्मत्वदर्शनादाह

॥ **एकस्यांक्रियायामिति** ॥ मामहंजानामीत्येकस्यांक्रियायामेकस्योभयदर्शनादाह ॥ **उत्सर्गतइति** ॥ बाधकैकापोद्यत्वमुत्सर्गः । सतिबाधकेनियमस्यसंकोचोप्यस्ति तत्रतुतयोरभेदेनसाक्षिसिद्धत्वमेवबाधकमितिभावः । तर्ह्यत्रापि बाधकेनैवसंकोचोस्त्वित्यतआह ॥ **अत्रेति** ॥ व्यभिचरितनियमस्यकथंसाधकत्वमितिचेत् यथानहिंस्यात्सर्वाभूतानीतिऔत्सर्गिकभूताहिंसानिषेधोऽग्नीषोमीयपशुहिंसाविधिनापोद्यते । भवतिचानपोदितेब्रम्हाहिंसाद्यकरणीयत्वेप्रमाणंतथात्रापीतिभावः ॥ **सर्वगतत्वेति** ॥ एतमस्यामितिवाक्यमात्मानमितिवाक्यंचैकविषयमितितावदविवादं । एतमस्यामित्युक्तस्यैवैतमात्मानमितिपरामर्शात् । तत्रयद्यात्मानमित्यत्रैकोजीवः कर्मतयास्वीक्रियेततर्ह्येतमस्यामित्यत्रापिसएवसर्वगततयोच्यमानःस्यात्नसर्वेजीवाः तथाचयत्पूर्वपक्षेसर्वजीवानांवैतत्सर्वगतत्वमितिसर्वगततयासर्वजीवग्रहणंतन्नस्यादित्यर्थः ॥ **तथाप्रतीत्यभावेनेति** ॥ कर्मीभूतात्मनोजीवविशेषविषयत्वेनप्रतीत्यभावेनेत्यर्थः । आत्मविशेषणेनचक्षुर्मयत्वादिनाजीवसामान्यलिंगेनजीवमात्रत्वप्राप्तेरितिभावः । गीतावाक्यमुदाहरति । श्रुत्वेति । **एनंअथचैनंनित्य-जातमित्यनेनप्रकृतंजीवंसामान्येनश्रुत्वापिविशेषतः कश्चिदपिनवेदेत्यर्थः** ॥ **साम्यादिति** ॥ तस्यापिसर्वशरीरस्थत्वेनतद्गतदुःखादिप्रसंगसाम्यादित्यर्थः । बाधकेनविष्णुरूपभिन्नग्रहणे । तथाचापवादकारणाभावोऽसिद्धइतिभावः । इत्याशंकांब्रम्हशब्दस्यजीवेपिसंभवादित्याशंकांशिष्टपरिहारोग्रेभविष्यतीतिभावः ॥ ॐ **शब्दविशेषात्** ॐ ॥ शब्दस्यब्रह्मशब्दस्यविशेषादेतमेवेतिसावधारणत्वरूपाद्विशेषापेतत्वान्नतेनेतरग्रहणमित्यर्थः । मुख्यब्रम्हत्वंपूर्णत्वरूपं तमेवेत्युक्तेऽन्येषामपितद्वाच्यचयत्वात्कथमेतदितिशंकापरिहारायमुख्यतास्यवाच्यत्वमन्येषाममुख्यतइत्यवश्यंवक्तव्यत्वादितिभावः । श्रुतावुशब्दोवधारणे । ब्रह्मैवेत्याद्येवकारसंबंधः ॥ ॐ **स्मृतेश्च** ॐ ॥ **विष्णोःसर्वगतत्वप्रतिपा**

दकस्मृतिसत्वाच्चसएवसर्वगतइत्यर्थः । स्मृतौगुडाकेशः अर्जुनः ॥ **भूताशयेति** ॥ भूताख्याश्रयेत्यर्थः ॥ **परोक्ते-ति** ॥ तस्याःकृष्णार्जुनसंवादरूपत्वादितिभावः ॥ **इतिप्रतिपादितइति** ॥ सक्रतुंकुर्वीतमनोमयःप्राणशरीरोभारूपःसत्यसंकल्पइतिवाक्येमनोमयत्वादिनोपास्योजीवोवाब्रह्मवेतिसंदेहेजीवस्यैवमनः प्राणसंबंधात्तस्यैवान्नमनोमयत्वादिनोपास्यत्वमितिप्राप्ते ब्रह्मैवात्रमनोमयत्वादिनोपास्यंनजीवः सत्यसंकल्पादितल्लिंगादितिप्रतिपादितइत्यर्थः । अप्रामाणिकत्वमुपपादयितुंभेदेऽनुमानमाशंक्यनिराकरोति । जीवेश्वभेदइत्यादिनाऽलमित्यंतेन । अत्रमिथ्यात्वं असत्वंवानिर्वचनीयत्वंवासत्वाभावोबाध्यत्वंवेतिविकल्पान्क्रमेणदूषयति ॥ **मिथ्येत्यस्येत्यादिना** ॥ **अप-सिद्धातादिति** ॥ सदसद्विलक्षणत्वांगीकारादितिभावः ॥ **अप्रसिद्धविशेषणत्वेति** ॥ तस्यमांप्रतिकुत्राप्यप्रसिद्धत्वादितिभावः । ततएव सत्वाभावादेव । चतुर्थमपिविकल्पपूर्वकंदूषयति ॥ **बाध्यत्वसाधनइत्यादिना** ॥ अन्यथाज्ञातस्य अन्यधर्मावछिन्नतयाज्ञातस्यस्वधर्मवत्वावछिन्नतयाज्ञातत्वमित्यर्थः ॥ **सिद्धसाधनमिति** ॥ मिथ्यात्वेन ज्ञातस्यभेदस्यसत्यत्वेनज्ञातत्वांगीकारादितिभावः ॥ **त्रिकालेति** ॥ नास्तिनासीन्नभविष्यतीतिबोध्यमानाभावप्रतियोगित्वमित्यर्थः । प्रतीतस्येत्यनंतरंत्रिकालेत्याद्यनुवर्तते । तथाचामतःप्रतीत्यभावान्नोक्तदोषइतिभावः ॥ **वाच्य-त्वादिति** ॥ धर्माधर्मादेरपीश्वरादिप्रत्यक्षगोचरत्वेन नतत्रव्यभिचारइतिभावः । अत्र यद्यपिप्रतीतस्येतिचेदित्युक्तत्वादसतः प्रतीतिरेवसाधनीया तथाप्यपरोक्षतयाप्रतीतस्येति पुनःपरेणोक्तेपरोक्षप्रतीतेरपिसाधनेगौरवंस्यादित्यपरोक्षप्रतीतिरेवसाधिता । अतएवप्रकृताभिप्रायेणप्रतीतिसिद्धेरित्येवोक्तं । उक्तबाध्यत्वसाधनेऽपसिद्धांतंसूचयित्वादोषांतरमाह ॥ **भेदाभावेनेति** ॥ भेदप्रयोजकाविरुद्धधर्मस्फुरणायाविद्यानिवृत्तिरूपेतिमोक्षस्वरूपनिरूपणं । अविद्यास्तमयो

मोक्षइत्युक्तेरितिभावः । मिथ्याभूतोभेदःकिंनिवर्तते उतन । आद्यआह ॥ मोक्षनिवृत्तीति ॥ भेदनिवृत्तिर्हिभेदिनि
वृत्तिनियता । भेदिनोःसत्वेभेदस्याप्यनुवृत्तेः । तत्रनात्मानिवर्ततेसत्यत्वात् । अतोमोक्षस्यैवनिवृत्तिर्वक्तव्येत्याशयः ।
द्वितीयेत्वाह ॥ मिथ्याभूतेति ॥ तथात्वं अनिवृत्त्यविरोधिमिथ्यात्वं ॥ नचेति ॥ तथाचक्रुत्रव्यभिचारइतिभावः ।
बाधकमप्याह ॥ द्वासुपर्णेति ॥ नचात्रभेदमात्रंश्रूयतेनतत्सत्यत्वमितिवाक्यं । स्वतःप्रमाणश्रुत्यासत्यस्यैवप्रतिपाद-
नात् । अन्यथातत्प्रतिपादितब्रह्मणोपिमिथ्यात्वंस्यादितिभावः । यद्यपि प्रमाणविरुद्धार्थप्रतिज्ञाप्रतिज्ञाविरोधइतिबाध
स्यप्रतिज्ञादोषत्वावगमात्प्रतिज्ञादूषणमेवएवेदंवाच्यं । तथापिहेतुदोषत्वमंगीकुर्वतांनैय्यायिकानांरीतिमाश्रित्योक्ति
रविरुद्धा । साध्यवैकल्येनदृष्टांतमपिदूषयति ॥ अन्यतरचंद्रस्यैवेति ॥ नन्वनारोपितचंद्रे भेदमात्रारोपेणैवचंद्रा-
विति द्वित्वमात्रप्रतीत्युपपत्तौ चंद्रांतरारोपोव्यर्थः । नचैवंशुक्तिकायांरजतभेदमात्रारोपेणेदंरजतमितिप्रतीत्युपपत्तौरज-
तारोपांगीकारोपिव्यर्थःस्यादितिवाच्यं । तत्राधिष्ठानस्यारजतत्वेनरजतोपस्थित्यर्थंरजतारोपांगीकारात् । रजतानुप
स्थितौरजतभेदारोपायोगात् । नचैवंप्रकृते अधिष्ठानस्यचंद्रत्वादितिचेन्न । अनारोपितचंद्रे आरोपितभेदस्यैवदृष्टांतत्वे
तस्यारोपितत्वेनात्यंतासत्वात्तत्रहेतुवृत्त्यसंभवेनसाधनवैकल्यापातात् । तदेतदाह ॥ अन्यतरचंद्रस्यैवारोपितत्वे-
नेति ॥ सत्यत्वेनेति ॥ सत्यत्वादिति ॥ अत्रारोपितप्रतियोगिकानारोपितधर्मिकएकएवभेदोविवक्षितोनत्वनारो-
पितप्रतियोगिकारोपितधर्मिकः । भेदस्यधर्मिस्वरूपत्वेनारोपितधर्मिस्वरूपभेदस्यसत्यत्वायोगात् । यद्वासद्घटोनेत्यबा
धितप्रतीतिबलादसत्यधर्मिकोपिभेदोस्त्येव । नचोक्तदोषः । असत्वात्मकत्वसंभवात् । नचवैषम्यं । यथा न्यायमते अ-
त्यंताभावादेःप्रतियोगिविरोधित्वेप्यन्योन्याभावस्यप्रतियोगितावच्छेदकाविरोधित्वं तथासद्धर्मिकान्योन्याभावस्यधर्मि-

स्वरूपत्वंप्यसद्धर्मिकान्योन्याभावस्य धर्मितावच्छेदकस्वरूपत्वेविरोधाभावादिति । किंचप्रातिभासिकत्वमुपाधिः । सचन पक्षेसाधयितुंशक्यः व्यावहारिकत्वांगीकारविरोधात् । अभेदोमिथ्याऽभेदत्वाद्देहात्माभेदवदित्याभाससमानयोगक्षेमत्वं । नचदृष्टांतस्यसाध्यवैकल्यं तथात्वेन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्येतिभाष्यस्योन्मत्तप्रलापितत्वप्रसंगादित्येतत्पूर्वादिनिधायाह ॥ अलमिति ॥ ॐ अर्भकौकस्त्वात्तद्व्यपदेशाच्चनेतिचेन्ननिचाय्यत्वादेवं व्योमवच्च ॐ ॥ सर्वेषुभूतेष्विति ॥ सर्वप्राणिहृदयगुहाख्याल्पस्थानस्थत्वव्यपदेशात्तद्व्यपदेशात्तस्यशारीरस्यादित्यश्रुतिचक्षुर्मयत्वादिना व्यपदेशाच्च नसर्वगतंब्रह्मेतिचेन्न । किंब्रह्मणोऽल्पौकस्त्वाद्युक्तिर्व्यर्था अयुक्तावा । नाद्यइत्याह ॥ निचाय्यत्वादिति ॥ अर्भकौकस्त्वेन चक्षुर्मयत्वादिनोपास्यत्वान्नव्यर्थेत्यर्थः । अंत्यआह ॥ व्योमवदिति ॥ यथाव्याप्तस्याप्याकाशस्यैकदेशस्थत्वंतथाब्रह्मणोपियुक्तेत्यर्थः । उपास्यत्वात् अधिकारिविशेषैः ॥ इंद्रियस्वामित्वेनेति ॥ तथाचसर्वप्राणिपुप्रेरकत्वेनास्थितत्वात्सर्वेंद्रियमयः । मयटोविकारादेरिवस्मार्तत्वात्स्वामित्वमप्यर्थइत्युक्तंभवति । सर्वप्राणिपुसंस्थितइत्यस्यहेतुगर्भत्वमाह ॥ आदित्यादिगतस्यैवेति ॥ तथाचयश्चासावादित्यइत्यनेनैवादित्येप्युक्तिर्लब्धेतिभावः ॥ ॐ संभोगप्राप्तिरितिचेन्नवैशेष्यात् ॐ ॥ समानोभोगःसंभोगः । ब्रह्मणःसर्वजीवशरीरस्थत्वे तत्समानभोगप्रसंगइतिचेन्न । वैशेष्यात् सामर्थ्यातिशयादित्यर्थः ॥ अग्निस्तंभनवत इति ॥ मणिमंत्रादिना अग्निदाहनिरोधशक्तिमतइत्यर्थः । भवत्वेवप्राप्त्याज्ञानदशायां इदानींशब्दविशेषादितिसूत्रावतारिकाग्रंथोक्तमतिदेशेनदूषयति ॥ एवमिति ॥ भाक्तत्वकथनं अमुख्यत्वकथनं । जीवनिष्ठाश्रुतत्वस्यौपचारिकत्वादितिभावः ॥ १ ॥ अत्तुं भक्षणार्थं । अध्रियत दधार । अदच्चेतिशेषोक्तिः अभक्षयदित्यर्थः । कुतइतिप्रश्नोत्तर-

माह ॥ **सर्वमिति** ॥ अदितित्वं अदितिशब्दवाच्यत्वं हियस्मादतः सासर्वात्रीत्यर्थः । अन्यथासर्वात्तृत्वाभावेतत् अदितित्वं अदितेः देवमातुः उक्तन्यायात् अंतर्यामिपरत्वादिरूपात्। अदितित्वं अदितिस्वरूपत्वं त्वाप्रत्ययस्यव्यक्त्यभेदे नजातिपरत्वायोगे आकाशत्वमित्यादाविवस्वरूपपरत्वस्यैववक्तव्यत्वादितिभावः ॥ **बाधइति** ॥ वक्ष्यमाणरीत्यालिंगस्यापिसावकाशत्वादितिभावः। पुंशक्तिः पुरुषशक्तिः॥ **सोहमिति** ॥ सोहं दिशां दिङ्नामकचतुर्दिगवस्थितभगवद्रूपाणांवत्संपुत्रंवायुमेवमुक्तरीत्यावेदेतिरमावाक्यं। आहुःछांदोग्यभाष्ये ॥ **प्रकृतेति** ॥ ससंवत्सरोभवदितिसंवत्सरशब्देनप्रकृतचतुर्मुखपरामर्शादित्यर्थः। तृतीयांततया तृतीयांततेनेतिशब्देन प्रथमतयासइत्यनेन इतियोजनायां ॥ **अस्तिचोद्यावकाशइति** ॥ यद्यपिबृहद्भाष्येसयद्यदेवेत्यत्रसइत्यस्यसंवत्सराख्यचतुर्मुखपरत्वमेवोक्तं। तथापिसमानविभक्तिकत्वंपरामर्शेतंत्रमितिभ्रमेणसइत्यनेनादित्याख्यमृत्योरेवपरामर्शइतिपूर्वपक्षेपुल्लिंगानुपपत्तिचोद्यावकाशोस्तीतिभावः । अतएवेतियोजनायामित्युक्तं॥ ॐ **अत्ताचराचरग्रहणात्** ॐ॥ सर्वंवाऽत्तीत्यत्रोक्तोत्ता संहर्ताविष्णुरेव। नादितिः सर्वमितिचेतनाचेतनजातस्यभक्ष्यतयाग्रहणादभिधानादितियावत्॥ **विसंवादेति** ॥ श्रुतौचराचरेत्यश्रवणादितिभावः। अस्यव्याख्यानस्य व्याहतिंपरिहरति ॥ **अस्वातंत्र्येणेति** ॥ आयुरर्थे आयुष्यार्थं उक्तरीत्येति सृष्टापातेति भाष्योक्तरीत्या सावकाशत्वादितियाप्राणेनसंविशत्यादितिर्देवतामयीतितत्रापिप्रयोगादितिभावः॥ **अदितिशब्दवाच्यत्वमिति** ॥ पाचकत्वमित्यादाविवादनक्रियाकर्तृत्वमेवादितित्वं तद्धितभावश्चशब्दप्रवृत्तिनिमित्तमितिभावः ॥

ॐ **प्रकरणाच्च** ॐ॥ अप्संवत्सरसृष्ट्यादिना वैष्णवत्वेनानिश्चितनैवेहकिंचनेत्यादिप्रकरणबलाच्चात्ताविष्णुरेवेत्यर्थः ॥ **नैवेहकिंचनेति** ॥ अग्रे प्रळये । इह अस्वतंत्रवर्गे। किंचनजीवजडरूपंनैवासीत्। अनादिसिद्धजीवादेः सत्वात्कथमे

तदित्यतउक्तं ॥ मृत्युनैवेति ॥ पृथङ्नासीदितिभावः । मृत्योरावरकत्वेहेतुः ॥ अशनायेति ॥ अश्यतइत्यशंजगत् तंनयतीतित्यशनाया । अन्यत्रनेतृत्वमतीतावपिश्रुतिषुप्रसिद्धेःसएवनेतेत्याह ॥ अशनायाहीति ॥ मृत्युरशनाया-हीतिश्रुत्यादिप्रसिद्धमित्यर्थः । यस्मान्मृत्युःस्वयमेवासीदन्यन्नैवासीत्तस्मादात्मन्वी आत्मवान् । जगद्रूपशरीरवान् स्यामितिमनोकुरुत ऐछत् । समृत्युः शरीररूपजगत्सिसृक्षयासृष्ट्यर्थंमनोकुरुतेतिशेषः । तदनंतरंसमृत्युरर्चन् आत्मानंपूजयन् अचरत् चचार । तस्य अर्चतः पूजयतः मृत्योःसकाशात्पूजासाधनभूता आपोजायंतइत्यर्थः ॥ तद्यदिति ॥ तत् तत्राप्सु । यअपांशरःफेनरूपोमंडआसीत् । सशरः मृत्युनास्वरेतसासमहन्यत । संघातत्वंघनीभावमितियावत् । प्रापितः यःसंघातःसापृथिवीब्रह्मांडरूपाभवत् । मृत्युनामा जनार्दनःतस्यांपृथिव्यामश्राम्यत् शिश्यइत्यर्थः । सोकामयतेतिसमृत्युनामाभगवान् मेममात्माब्रह्माद्वितीयोवाय्वपेक्षयाजायेतेत्यकामयत् ऐछत् । तत् तदनंतरं । अशनायां द्वितीयाप्रथमार्थे । सर्वाशननेता मृत्युर्मनसास्वेछयैव वाचंवेदाभिमानिनींश्रियंमिथुनंद्वंद्वभावंसमभवत् । तत्तेन मिथुनीभावेन यद्रेतआसीत्सतदुपादानकदेहवान्संवत्सरः । सम्यगात्मनोवत्सान्पुत्रान्देवादीन्रमयतीतिसंवत्सरनामाचतुर्मुखोभवादित्यर्थः ॥ तंजातमिति ॥ मृत्युःजातंतंसंवत्सरमभि अभिलक्ष्य अत्तुमितियावत् । व्यददात् स्वमुखंव्यददार । ससंवत्सरोभयात् भाणंभणितिवाचअकरोत् निःसारितवान् । यद्भणितिवचःसैवतदभिमानीसरस्वत्यभवत् । अभिमन्यमान-शब्दोच्चारणकालएवाभिमानिनीदेव्यभवदितियावत् ॥ सइति ॥ समृत्युः कृतनवंकुमारमालोक्य ऐक्षत् विचारमकरोत् । किमिति यदीमं जातं संवत्सरं अभिमंस्ये लीनंकरिष्ये तदाकनीयोल्पमन्नंकरिष्ये अतोबव्हन्नंभवत्वित्यालोच्यसमृत्युस्तया पूर्वोत्पन्नयावाचागायत्र्यातेनात्मना चतुर्मुखेनचेदंसर्वमसृजत् जनयामासेत्यर्थः । स्मृतौसोत्मनः सआत्मनः मंत्रेष्वादे

रित्यकारलोपः ॥ २ ॥ एकस्येत्येतद्द्विवचनानुपपत्तिस्फुरणायोक्तं कर्मफलात्तृत्वंनप्रतीयतइत्यतआह ॥ पातृत्वशब्दवाच्यमिति ॥ षष्ठ्यर्थोजन्यजनकभावसंबंधइत्याह ॥ सुकृतनिर्मितइति ॥ आऋद्धः अर्द्धः परेभ्योप्यर्द्धः परार्धइत्याशयेनपरार्धशब्दार्थमाह ॥ अतिपूर्णेति ॥ पंचमहायज्ञेति ॥ देवपितृभूतमनुष्यब्रह्मयज्ञरूपपंचमहायज्ञेत्यर्थः । यद्वा दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमइतिपंचमहायज्ञेत्यर्थः ॥ द्युपर्जन्येति ॥ द्युपर्जन्यपृथिवीपुरुषयोषिद्रूपपंचाग्निविद्येत्यर्थः । नाचिकेताः नाचिकेतनामकेष्टिवंतः । छायातपौ विद्वदविद्वत्सुखदुःखकरौ । अन्यस्यैव द्वयोर्बुद्धिजीवत्वपक्षे नतस्यसर्वात्तृत्वं तथात्वासंभवइतिभावः । अन्यस्यापि द्वयोर्जीवेश्वरत्वपक्षे गुहांप्रविष्टत्वादिविष्णुलिंगसहचरितकर्मफलभोगवतः सर्वात्तृत्वस्यापिसंभावयितुंशक्यत्वादितिभावः ॥ विष्णोरन्यस्यवेति ॥ किंविष्णोरेवोतान्यस्यापीत्यर्थः ॥ निरवकाशत्वादिति ॥ तद्वाच्यद्वित्वस्यानिर्भेदेहरौ कथमपिघटयितुमशक्यत्वादितिभावः । बहुरूपत्वाच्चेत्यानंदमयनयोक्तरीत्याद्विवचनश्रुतिः सावकाशेत्यतोनिमित्तांतरमाह ॥ कर्मेति ॥ हरिःकर्मफलाभोक्ता तद्बंधविधुरत्वाद्घटवदितियुक्तिविरोधमभिधायश्रुतिविरोधंचाह ॥ अनश्नन्निति ॥ जीवादन्योहरिः पिप्पलंकर्मफलं अनश्नन्नेवाभिचाकशीतीत्यर्थः ॥ छत्रिन्यायेनेति ॥ छत्र्यछत्रिसमुदाये यथा छत्रिणोगच्छंतीत्यौपचारिकप्रयोगः एवंभोक्त्रभोक्तृसमुदायेप्यौपचारिकापिबंताविति प्रयोगइत्यर्थः । विरोधईश्वरस्यभोगानंगीकारे कोहेतुरितिप्रश्नस्योत्तरमाह ॥ एकस्येति ॥ न्याय्यत्वात् । अस्यगोरितिवक्ष्यमाणरीत्या ॥ भोक्तृजीवद्वयेति ॥ तच्छरीरजन्यकर्मफलभोक्तृजीवद्वयेत्यर्थः । तेन पिशाचावेशवत्किंनस्यादितिनिरस्तं । ननु जीवस्यैवमुख्यतःपातृत्वमीश्वरस्यतूपचारतस्तदंगीकारे युगपद्वृत्तिद्वयप्रसंगइत्यतआह ॥ द्वयोरपीति ॥ द्वित्वावच्छेदेनोभयत्राप्युपचारइत्यर्थः । अतएवपूर्वंतादृशएवछत्रिन्या

यउदाहृतः ॥ ॐ गुहांप्रविष्टावात्मानौहितद्दर्शनात् ॐ ॥ कर्मफलभोक्तारावात्मानावेव। आत्मांतरात्माख्य भगवद्रूपविशेषावेव नजीवेश्वरौ । कुतः हियस्माद्गुहांप्रविष्टौ गुहांप्रविष्टत्वंच योवेदनिहितंगुहायामित्यादिनातत्रैवप्रसिद्धमित्यपिहिशब्दार्थः । रूपद्वयस्यगुहास्थत्वंकुतइत्यतउक्तं तद्दर्शनात् तस्यात्मनोगुहास्थत्वस्यधर्मासमंतेत्यादिश्रुत्युक्तेरित्यर्थः । वीत्युपसर्गार्थोविशेषेणगुहास्थानइति आवृत्तिमत्वाह ॥ त्रिवृतमिति ॥ आत्मा देहस्थः । अंतरात्मा जीवस्थः । कर्मफलभोगस्येंद्रियसाध्यत्वाद्धृदयप्रविष्टस्यकथंतदित्यतआह ॥ तथाचेति ॥ अर्थबाहुल्याद्बहुवचनं । अधिष्ठाय तत्रस्थित्वा उपसेवते भुङ्क्ते ॥ पूर्णानंदत्वादिति ॥ पूर्णानंदत्वेनदुःखावकाशाभावात् । प्राप्तव्यसुखापेक्षाभावाच्चेतिभावः । शुभाशुभशब्दौसुखदुःखपरौ । अंतरंगज्ञापकंचाह ॥ तथाहीति ॥ योभगवानग्रे अग्र्यःसर्वतः श्रेष्ठः तस्येत् तस्यैव पिप्पलं कर्मफलं स्वादुशुभमाहुः । यस्तुजीवःपितरंजगज्जनकंभगवंतं उत् उत्कृष्टत्वेननवेद । अतएव नशत्नरकाद्यनर्थरूपनाशंप्राप्नुवानोपुरुषार्थनाशवान्वा तस्यपिप्पलंनतुस्वाद्वाहुरित्यर्थः। इत्यादिनेत्याद्यनुवादः। विष्णोरेवेत्यादिव्याख्या ॥ ॐ विशेषणाच्च ॐ ॥ एकवचनसेतुत्वब्रह्मत्वादिना पिबतोर्विशेषितत्वाच्चताबात्मानावेव नजीवेशावित्यर्थः । स्मारयति स्मृत्यादर्शयति। अतइत्यनंतरमपेक्षितंपूरयति॥ तस्मिन्ब्रह्मशब्दःप्रयुज्यतइति॥ ॥ यतइति ॥ अनेनयतःशब्दावृत्तिर्दर्शिता । अत्र काटके॥ समन्वयासंगतत्वादिति ॥ समन्वयाभिधायकैतदध्यायासंगतत्वादित्यर्थः ॥ छायातपत्वविशेषणादिति ॥ तयोःक्रमेणविद्याविद्यावद्वाचकत्वेनतादृशयोश्चजीवेशान्यत्वायोगादितिभावः । विनिगमनाविरहादुक्तमेवास्त्वित्यतआह ॥ नहीति ॥ अनुशासनाभावात् अस्मत्पक्षेतु छायेवाविदुषांप्रभुः आतपःपापिनामितिविनिगमकमस्त्येवेतिभावः । नकेवलमेतदसंगतं किंतु व्यर्थंचेत्याह ॥ किंचेति ॥

समन्वयसिद्धिरित्यनंतरंलब्धेतिलिंगव्यत्ययेनानुवर्तते । **एवं** एवंसति । मयेश्वरेलिंगस्यौपचारिकत्वांगीकारेणजीवमा
त्रेसमन्वयसिद्धावपितन्मतंकथमित्यतआह ॥ **तेनापीति** ॥ शंकते ॥ **नात्रेति** ॥ तथाचजीवेसमन्वयईश्वरएवसिध्य
तीतिभावः । अराः दोषाः तद्वंतःअरवः स्वरूपसतःकारणत्वायोगादाह ॥ **तथैवज्ञातेनैवेति** ॥ ३ ॥ **अर्थादिति** ॥
अक्ष्यादित्ययोरेकविधत्वादितिवक्ष्यमाणरीत्येतिभावः ॥ **यएषइति** ॥ यएषोक्षिण्यंबः पुरुषोदिव्यदृष्ट्याद्दश्यते एष
आत्मावामनाख्यः परमात्मेतिहोवाच एतद्भगवद्रूपममृतं स्वतएवमरणरहितं । अभयं स्वतएवभयरहितं एतद्ब्रह्मगुणपू-
र्णमित्यर्थः ॥ **अग्निश्रुतिरिति** ॥ अथहाग्नयःसमुदिरइत्यादावितिशेषः ॥ **यएषआदित्येपुरुषइति** ॥ आदित्ये
सूर्ये यएषपुरुषःपूर्णषड्गुणोभगवान्दिव्यदृष्ट्याद्दश्यतेसोहमहंयत्नादहंनामागार्हपत्याग्निस्थोस्मि । आदित्यस्थस्यमदंतर्या
मिणश्चनविदुरधर्मादिवदभेदः किंतुनकोपिविशेषइत्यतआह ॥ **सएवेति** ॥ गार्हपत्याग्निनोपकोसलंप्रत्युपदिश्यते
॥ **आदित्यइति** ॥ आदित्यः आदित्यमंडलाभिमानी । चक्षुर्भूत्वा रूपांतरेणचक्षुर्देवताभूत्वाक्षिणीगोलकेप्राविश
दित्यैतरेयभाष्यश्रुतावादित्यमंडलस्ययद्देवताकत्वंचक्षुर्गोलकस्यापितद्देवताकत्वरूपैकविधत्वोक्तेरित्यर्थः । तथाचभाष्ये
एकपदमेकचेतनाधिष्ठितत्वरूपैकविधत्वपरं । अक्ष्यादित्यपदेतुजडपरइतिभावः । समूदिरे ऊचुः । औपचारिकं आदि
त्यस्थविष्ण्वाश्रयत्वेन ॥ **श्रुतीति** ॥ आनंदमयस्यादित्यस्थत्वप्रतिपादकसमाख्याश्रुतीत्यर्थः ॥ **बलवत्वादिति** ॥
स्थानांतरस्थसमाख्यापेक्षयाएकस्थानस्थाभ्यासस्यशीघ्रोपस्थितिकरत्वादितिभावः ॥ **अपूर्वतयेति** ॥ लोकप्रसिद्धा
ग्नित्यागेनात्यलौकिकब्रह्मग्रहणेऽपूर्वतेत्यर्थः ॥ **बाधइति** ॥ एकत्रानेकवारोक्तिरूपतया ज्ञातज्ञापकाभ्यासादपिप्रमाणां
तराप्रापकत्वरूपापूर्वतायाः प्राबल्यादितिभावः ॥ **सयएनमिति** ॥ योधिकारी एतत् अग्न्यंतर्यामिरूपमेवंविद्वान्जान

नुपास्ते । सपापकृत्यां अपहते विनाशयति लोकी भगवल्लोकीभवति सर्वमायुर्मोक्षमाप्नोतीत्यर्थः ॥ **प्राबल्यादिति** ॥ अपूर्वतापेक्षयोद्देश्यत्वेनाधिकफलापेक्षया करणाकरणयोरिष्टानिष्टकथनरूपार्थवादस्यापूर्वतायाःप्राबल्यस्यसुतरांसिद्धेरितिभावः । यद्यपि अपहतेपापकृत्यामितिफलं तथापिस्तुतिरूपार्थवादित्वमप्यस्तीतिवा । वस्तुतः फलवत्वंफलंफलोक्तिस्त्वर्थवादइतिवाभिप्रेत्यैवमुक्तिरितिध्येयं । भाष्ये पलाशे पत्रे ॥ **तदन्यथानुपपत्त्यैवेति** ॥ मोक्षंविनासर्वपापाश्लेषासंभवादितिभावः । ननुनेतरानुपपत्तेरित्यादौविष्णुज्ञानान्मोक्षइत्युक्तं । समोक्षस्तद्यथापुष्करपलाशइतिवाक्येन यएषोंतरक्षिणीत्युक्ताक्षिस्थज्ञानात्प्रतीयतइतिऋजुसंगत्यैतदधिकरणारंभसंभवे यएषआदित्येपुरुषः यएषोंतरक्षिणीपुरुषइत्यनयोर्वाक्ययोरादित्यश्चक्षुर्भूत्वेतिश्रुत्यैकार्थत्वमुपपाद्य यएषआदित्यइतिवाक्यस्ययश्चासावादित्यइतिवाक्येनसंगत्या तदर्थार्थकयएषोंतरक्षिणीतिवाक्यस्यापि तेनसंगतिरितिवक्रसंगत्याधिकरणारंभेकिंनिमित्तमित्यतआह ॥ **अत्रादित्येति** ॥ यद्यप्युक्तरीत्याऋजुसंगत्यधिकरणारंभेपि । पूर्वपक्षेग्नेरेवाक्षिस्थत्वे आदित्यस्थत्वस्यहेतुत्वेनोपपादने सिद्धांतेतस्यविष्णुनिष्ठत्वस्यसमर्थनीयत्वात्तस्यापिसमन्वयसिद्धिस्तथापिपूर्वपक्षहेतोःसिद्धांतिनासावकाशत्वोक्त्याप्यविरोधकत्वस्यवक्तुंशक्यत्वेनसमन्वयएववक्तव्यइतिनियामकाभावात्तदर्थमेतदितिभावः । ननुभाष्ये प्रथमादिपदं अथहैनमन्वाहार्यपचनोनुशशास यएषचंद्रमसिपुरुषोदृश्यतेसोहमस्मि अथहैनमाहवनीयोनुशशास यएषविद्युतिपुरुषोदृश्यतेसोहमस्मीत्यनयोर्वाक्ययोःसंग्राहकं । द्वितीयादिपदंचचंद्रविद्युतोःसंग्राहकं । बहुवचनंचान्वाहार्यपचनाहवनीययोर्वाक्यसंग्राहकमितिप्रतीयते । इदंचानुपपन्नं चंद्रविद्युतोरक्ष्णैकविधत्वाभावेनान्वाहार्यपचनाहवनीययोस्तदुभयस्थत्वस्याक्षिस्थत्वसाधकत्वाभावेनप्रकृतानुपयोगात् अतोयएषआदित्येपुरुषइत्यग्नेरादित्यस्थत्वमुच्य

रायणाभिमानिदेवतालोकं मासेभ्यस्तेभ्यः संवत्सरं संवत्सराभिमानिदेवतालोकं संवत्सरात्तद्द्वारेण प्रजापतिप्राप्तिद्वारा दित्यमादित्याच्चंद्रमसं चंद्रमसो वैश्वानरं ध्रुवद्वारा विद्युतं विद्युन्नाम्नीं भारतीं प्राप्नुवंति ततस्तस्याः पुरुषो भर्ता मानवो मनना न्मनुर्भगवांस्तस्यायंप्रियभृत्यो मानवो मुख्यवायुस्तं गच्छति । सवायुरेनान्स्वप्राप्तान्प्रतीकालंबनान्कार्यब्रह्म अप्रतीकालंब नान्परंब्रह्म गमयतीत्यर्थः ॥ **मनननिदिध्यासनोपलक्षणमिति** ॥ श्रवणमात्रस्यब्रह्मप्राप्तिहेतुत्वासंभवादितिभावः । वायुः कइतिशब्दितइतिसंबंधः ॥ **अथवेति** ॥ तथाचनोपलक्षणमितिभावः ॥ **सामीप्यादिति** ॥ श्रुतैतद्विद्याफला- भिधायकैतद्वाक्यानंतरमेव यदु चैवेत्यादिश्रवणादितिभावः । अन्यथाकगतिकथनस्यैतद्विद्याफलकथनरूपलाभावे । यजः याजकाः कृष्णवाक्यमिदं । अस्मच्छब्दोदितोंतस्थआत्माव्याप्तोजनार्दनः । अग्नयोद्विविधंविष्णुमवोचंनुपकोसल मितिप्रमाणानुसारेणाह ॥ **तस्यांतर्यामीत्यादि** ॥ श्रुतेरस्मदित्यस्याः सकाशात् उपपत्तेः एतद्विद्याफलत्वेनकगत्य भिधानरूपायाः । ननु कंब्रह्मखंब्रह्मेत्युक्तविद्यायाः ब्रह्मशब्दोपेतत्वेनब्रह्मविद्यात्वात्कथमात्मविद्येत्युक्तसर्वगतविद्यात्व मित्यतआह ॥ **तस्यैवेति** ॥ सर्वगतस्यैवेत्यर्थः ॥ ॐ **अनवस्थितेरसंभवाच्चनेतरः** ॐ ॥ चक्षुरंतस्थइतरो- ग्निर्न अनवस्थितेः । जीवस्याग्नेर्जीवांतरप्रेरकत्वे तस्यापिप्रेरकांतरेणभाव्यं । एवंतस्यापीत्यनवस्थानात् अग्नेरपिप्रेर्य जीवस्वसामर्थ्येनप्रेरणासंभवाच्चेत्यर्थः ॥ **तत्तत्प्रेरकत्वेनेति** ॥ यश्चक्षुरंतरोयमयतीतिश्रुत्यंतरसमाख्यानादितिभावः । नेयमनवस्थाबीजांकुरपरंपरानवस्थावन्मंतव्येत्यतआह ॥ **पूर्वपूर्वेति** ॥ अत्राग्नेर्जीवप्रेरकत्वंमूलं तदर्थमेवोत्तरोत्तरानु सरणात् । तथाचप्रयोजकत्वेनकल्पितानांव्युत्क्रमेणपूर्वपूर्वप्रेरकानामसिद्धौप्रयोज्यानामुत्तरोत्तरप्रेरकत्वानामप्यसिद्धि रित्यग्नेरपिप्रेरकत्वासिद्धेरित्यर्थः । अभ्युपेत्य प्रेरकत्वं इदमनवस्थानं ॥ **स्वातंत्र्येति** ॥ तथाचनतत्प्रेरकोपेक्षित

इतिभावः ॥ दिव्यदृष्टिगोचरइति ॥ ततश्चश्रुतौयएषोंतरक्षिणिपुरुषोदृश्यतइति दृश्यत्वेकियुक्तेतिभावः ॥ ४ ॥
॥ काण्वमाध्यंदिनेति ॥ यःपृथिव्यांतिष्ठन्नित्यादिवाक्यस्योभयत्रापिपाठादेवमुक्तं । योभगवान्पृथिव्यांपृथिव्य
भिमानिदेवतायांतिष्ठन्पृथिव्याअंतरोविविक्तः यमंतर्यामिणंपृथिवीनवेद यस्यपृथिवीशरीरं । तद्वशत्वादेः । नकेवलं
तत्रस्थितिमात्रं किंतुयोअंतरोबाह्यापेक्षांविनारमतइतिवारमयतिवांतरः। पृथिवींयमयति एषभगवांस्ते तव आत्मानिया
मकः । अमृतोनित्यांतर्यामीतिगौतमंप्रतियाज्ञवल्क्यवचनं । तदेवोपपादयति ॥ शरीरशब्दस्येति ॥ इदंपूर्वपक्ष
शरीरमित्यादावितिशेषः ॥ नचेति ॥ पृथिव्यभिन्नायाः पृथिवीस्थत्वायोगादितिभावः ॥ इत्य दिनेति ॥ कारणेषु
स्थितंकार्यंव्याप्तंकार्येषुकारणमितिगीतातात्पर्यस्मृत्येत्यर्थः । तयोर्भिन्नाभिन्नत्वेनभेदस्यापिसत्त्वादितिभावः । नन्वथापि
पृथिवींयमयेदितीत्युक्तपृथिवीनियामकत्वं कथमित्यतआह ॥ पृथिवीमिति ॥ कार्यस्यकारणाधीनत्वादितिभावः ॥ अ-
तिसुघटत्वादिति ॥ पृथिव्याद्यभिमानित्वेनतच्छरीरित्वतन्नियामकत्वादीनामुपपादकानिरपेक्षत्वादित्यर्थः । कयापि
विधयेत्येतदेवाह ॥ तस्येति ॥ उररीकारेण अंगीकारेण ॥ कथंचिदिति ॥ प्रकृत्यादेःस्वरूपनाशराहित्येनेत्यर्थः ॥
॥ ॐ अंतर्याम्यधिदैवादिषुतद्धर्मव्यपदेशात् ॐ ॥ आधिदैवादिपदेन तत्प्रकरणंलक्ष्यते । अंतर्यामीविष्णु
रेव । अधिदैवाधिभूतादिप्रकरणेषु तस्यांतर्यामिणःसंबंधितयातस्यब्रह्मगतधर्मस्यपृथिव्याद्यावेदित्वादेर्व्यपदेशादि-
त्यर्थः । अधिदैवत्वेन । अभिमानिदेवत्वेन । अन्यथाजडज्ञानाप्रसक्त्यायंपृथिवीनवेदेत्यादेःअप्रसक्तप्रतिषेधकत्वा
पत्तिरितिभावः ॥ नचेति ॥ धरायाःप्रकृतिस्वस्वरूपज्ञत्वादितिभावः ॥ ॐ नचस्मार्तमतद्धर्माभिलापात् ॐ ॥
स्मार्तं प्रधानंनांतर्यामी । त्रिगुणत्वादितद्धर्मानभिधानादित्यर्थः । पृथिवीशरीरत्वादितद्धर्माभिलापात्कथंअतद्ध

र्माभिलापइत्यतउक्तं ॥ अनन्यथासित्येति ॥ तस्यत्वन्यथासिद्धिंवक्ष्यतीतिभावः ॥ ॐ शारीरश्चो
भयेपिहिभेदेनैनमधीयते ॐ ॥ शारीरोजीवश्चनांतर्यामीहियस्मादेनंजीवमुभयेमाध्यंदिनकण्वशाखाःप्रकृ-
तांतर्यामिणःसकाशाद्भेदेनप्रतिपादयंति तस्मादित्यर्थः ॥ आत्मनोंतरइत्येतज्जीवस्यांतर्गतइतिप्रतीतिनिरासायव्याचष्टे
॥ आत्मनइति ॥ उदात्तेति ॥ यआत्मनीत्युदात्तेत्यर्थः । भाष्ये शीर्यते विदार्यते ॥ युज्यतइति ॥ सति-
बाधकेमुख्यार्थत्यागस्यन्यायत्वादितिभावः ॥ ६ ॥ अथेति ॥ अथ परविद्यानिरूपणानंतरंपरापरविद्यानिरूप्य
तइतिशेषः । यथाविद्यया तत्प्रसिद्धमक्षरमक्षरशब्दाभिधेयंब्रह्म अधि अधिकत्वेनगम्यते अवगम्यते सापरविद्येत्यर्थः ।
प्रसिद्धाक्षरव्यावृत्तयेतत्स्वरूपंनिरूपयति ॥ यत्तदद्रेश्यमित्यादिना ॥ यत्पूर्वोक्तमक्षरमद्रेश्यमदृश्यं अग्राह्यंकेना
पिगृहीतुमशक्यं । अगोत्रं भारद्वाजादिगोत्ररहितं अवर्णं प्राकृतवर्णरहितं ब्राह्मणादिवर्णरहितंवा अचक्षुःश्रोत्रं चक्षु
श्रोत्रोपलक्षितप्राकृतज्ञानेंद्रियरहितं अपाणिपादं पाणिपादोपलक्षितप्राकृतकर्मेंद्रियरहितं यद्वाऽचक्षुःश्रोत्रंचक्षुःश्रोत्रो
पलक्षितसमस्तेंद्रियरहितं अपाणिपादं पाणिपादोपलक्षितप्राकृतदेहरहितं नित्यंस्वरूपतोदेहतश्चाविनाशि विभुंसमर्थंसर्व
गतंसर्वत्रव्याप्तं सुसूक्ष्मंजीवादप्यतिशयेनसूक्ष्मं अव्ययंन्हासरहितं।नन्वेवमक्षरस्याद्दश्यत्वेधिगम्यतइतिदृश्यत्वोक्तिःकथमि
त्यतआह ॥ यद्भूतयोनिमिति ॥ भूतयोनिंजगत्कारणंयदक्षरंतद्धीराःपंडिताःपरिपश्यंति । स्वयोग्यतानुसारेण
जानंति । अनेनाधीराणामदृश्यमित्युक्तंभवति । लोके पितुरन्यस्यैवमारकत्वदर्शनात्तथेहान्यस्यसंहर्तृत्वंमंतव्यमितिभा
वेन स्रष्टृत्वंसंहर्तृत्वंचसदृष्टांतमुपपादयति ॥ यथेति ॥ सदृष्टांतोयथा ऊर्णनाभिः तंतुवायकःस्वभुक्तमन्नादिकंतंत्वाद्याकारे
णसृजते पुनर्गृण्हतेसंहरति तथाक्षरशब्दोक्तोभगवानपिपूर्वकल्पेभुक्तंजगत्सृजतेसंहरतिच किमनुसृत्यसृजतइत्यतोदृष्टां-

तेनाह ॥ **यथेति** ॥ यथापृथिवीशाल्यादिनानाबीजान्यपेक्ष्यतत्तदंकुरान् जनयतितथाचेतनानांविविधकर्माण्यपेक्ष्यतत्सृज
तीत्युक्तंभवति । कुलालवन्नाक्षरस्यक्लेशेनस्रष्टृत्वं इतिसदृष्टांतमाह ॥ **यथेति** ॥ सतश्चेतनाधिष्ठितात्पुरुषदेहाच्छिरसिवि
द्यमानाकेशाःदेहेविद्यमानानिलोमानिअनायासेनभवंति । तथाक्षरादिहास्वतंत्रवर्गोविश्वमनायासेनभवत्युत्पद्यतइत्य
र्थः । प्रकृत्यादीनामप्यदृश्यत्वंवक्ष्यामीतितावच्छब्दः ॥ **दिव्यइति** ॥ दिव्योऽलौकिकः । अमूर्तः अपारिछिन्नपारि
माणः पुरुषः पूर्णषड्गुणः बाह्याभ्यंतरः बहिरंतश्चनियामकतयास्थितः अजः उत्पत्तिरहितः ॥ **अप्राणोह्यमनाइ-**
**ति** ॥ षोडशकलारहितः शुभ्रः शुद्धः अक्षराज्जडप्रकृतेः परात्प्रीतत्वात्परः उत्तमइत्यर्थः ॥ ॐ **अदृश्यत्वादिगुणको-**
**धर्मोक्तेः** ॐ ॥ अदृश्यत्वं आदिर्येषां अग्राह्यत्वादीनां तेऽदृश्यत्वादयः अदृश्यत्वादयोगुणायस्यासौ अदृश्यत्वादिगुणः
सएवादृश्यत्वादिगुणकः सचविष्णुरेव ॥ **अथपरेति** ॥ ऋगादिपरविद्याविषयत्वरूपतत्धर्माभिधानादित्यर्थः । वाक्य-
स्ययत्तदद्रेश्यमित्यादेः ॥ **नचेति** ॥ तथाचविष्णुग्रहणोपपत्तेरितिभावः । इत्यतइत्यनुवादःतस्मात्परतःअदृश्यत्वादिगुण
काक्षरात्परतःएवमग्रेपि ॥ **सामानाधिकरण्येनेति** ॥ परतःब्रम्हाद्युत्तमादक्षरादित्यक्षरपरशब्दयोश्चित्प्रकृतिरूपैकार्थ
प्रतिपादकत्वेनेत्यर्थः ॥ **सब्रह्मेति** ॥ सब्रह्मविद्यामथर्वायज्येष्ठपुत्रायप्राहेत्यत्रेत्यर्थः ॥ **कर्तारमिति** ॥ कर्तारमीशंपुरुषं
ब्रम्हयोनिमित्यत्रेत्यर्थः । श्रुत्यादौपरविद्याविषयत्वपरशब्दाभावात्कथंतदुदाहरणमित्यतस्तदुपपादयति ॥ **तमेवे**
**त्यादिना** ॥ भाष्येंगानिशीक्षादीनिषट् उपांगानि आयुर्वेदादीनिपंच शिष्टाःकलाविद्याः प्रत्यंगानीतितत्वप्रदीपानुसा
रेणध्येयं ॥ **अन्येति** ॥ कर्मादीत्यर्थः । तदुक्तमाथर्वणभाष्ये एतदर्थश्चब्रह्ममीमांसाशास्त्रव्युत्पादनन्यायानुपकृतवेदा
दयोविष्णोरवाचकाः तदुपकृताः तद्वाचकाभवंतीतिसुधानुसारेणध्येयं । **अर्थादिति** ॥ परविद्याविषयत्वस्यविष्णोर-

न्यत्रनिरवकाशत्वान्यथानुपपत्त्यर्थः ॥ ॐ विशेषणभेदव्यपदेशाभ्यांचनेतरौ ॐ ॥ इतरौचेतनप्रकृतिचतुर्मु
खौ नाहश्यत्वादिगुणकौ यःसर्वज्ञइतिसर्वज्ञत्वरूपविशेषणव्यपदेशात् । अदृश्यत्वादिगुणकभेदव्यपदेशाच्चेत्यर्थः । चीयते
संबध्यतेतपोकुरुतेतियावत् ॥ अज्ञानप्रतीताविति ॥ तपआलोचनइतिधातुः आलोचनंचाज्ञस्यैवेतिभावः ॥ ज्ञा
नमयमिति ॥ यस्यब्रह्मणस्तपोज्ञानमयंज्ञानस्वरूपमेव । नत्वालोचनात्मकं कुतः अज्ञोह्यालोचति नचायंतथा यतःस
र्वज्ञइतिहेतुतयेत्यर्थः । सामान्यविशेषवस्तुगतसामान्यविशेषाकारविषयतया सर्वज्ञेयाधर्माः सामान्यधर्माः । सर्वज्ञेयाः
विशेषधर्माः क्रमेणतदुभयविषयकत्वेनसामान्यविशेषज्ञानत्वयोरवांतरविशेषइतिनपुनरुक्तिरितिभावः । स्फुटमेतन्नानो
विज्ञानशब्दयोरपुनरुक्तिप्रतिपादकानंदमयसुधायां ॥ विद्दलाभइति ॥ तथाचसर्वविंदःतेलभतइतिवासर्वंवेदयतेउत्पा
दयतीतिवा सर्ववित्सत्यकामः सर्वोत्पादकोवेत्यर्थउक्तोभवति ॥ सूत्रखंडस्य ॥ विशेषणव्यपदेशादित्यंशस्य । प्रकृ
ताक्षरंअदृश्यत्वादिगुणकं ॥ सूत्रशेषमिति ॥ भेदव्यपदेशान्नेतरइत्यंशं ॥ अन्यमीशामिति ॥ अन्योमार्गइत्यु
क्तप्रसिद्धमार्गादन्यत्वप्रतीतिवादितिभावः ॥ ॐ रूपोपन्यासाच्च ॐ ॥ रुग्मवर्णमिति ॥ रुग्मरूपाभिधानाच्चाह
श्यत्वादिगुणकोविष्णुरेवेत्यर्थः ॥ पश्यतीति पश्यइत्याशयेनोक्तंद्रष्टेति तदाविद्वान्पुण्यपापेविधूयनिरंजनः परमंसा
म्यमुपैतीतिशेषार्थोक्त्याकांक्षांपूरयति ॥ तदेति ॥ पुण्यनाशस्यापुरुषार्थत्वादाह ॥ अनिष्टपुण्यमिति ॥ अपरोक्ष
ज्ञानात्पूर्वभाविपुण्यंद्विविधं काम्यमकाम्यंच तत्राकाम्यमपरोक्षज्ञानायभवति। काम्यंचद्विविधं । इष्टमनिष्टंच । तत्रेष्टमप्रा
रब्धमपिननश्यति । इष्टनाशस्यापुरुषार्थत्वात् अनिष्टंतुनश्यतीति चतुर्थएवोक्तत्वात्स्पष्टं पुण्यपापेविधूयेत्यनेनपौनरुक्त्य
वारणायनिरंजनशब्दार्थमाह ॥ निर्लेपइति ॥ ज्ञानोत्तरकालीनानिष्टपुण्यपापलेपरहितइत्यर्थः ॥ पूर्णेति ॥ याग्य

तानुसारेणेदं । एतेभ्यःविश्वादिभ्यः । अभ्यचीक्लृपत् दत्तवान् विशेषेणविश्वादिगतरूपापेक्षया भाष्ये ॥ **अतएतादिति** ॥ अतःदेवादिरूपाणांशुद्धत्वाभावादेतच्छुद्धशुक्लादि एतद्रूपं एतस्यहरेरूपमित्यर्थः ॥६॥ **अन्यत्रप्रसिद्धेति** ॥ नचसूत्रभाष्ययोरस्याग्नाविष्णोःसाधारण्योक्त्योभयत्रप्रसिद्धत्वमितिवाच्यं । वैश्वानरशब्दीयान्यत्रप्रसिद्धिसर्वगतत्वाख्यविष्णुलिंगयो रुभयोरपिनिरवकाशत्वेनतुल्यबलत्वाभिप्रायेणैवतत्रसाधारण्योक्त्योभयत्रप्रसिध्यभिप्रायेणतदनभिधानादितिभावः ॥ **वैश्वानरनाम्नइति** ॥ नचविश्वजीवांतरत्वाद्यैर्लिंगैरित्यणुभाष्येऽस्यलिंगत्वोक्त्याकथंनामत्वमितिवाच्यं तस्यसिद्धांतेवैश्वानरशब्दस्ययौगिकत्वप्रदर्शनार्थावयवार्थकथनएवतात्पर्येणलिंगत्वकथनेतात्पर्याभावात् अन्यथावैश्वानरत्वाद्यैरितिब्रूयादितिभावः । पादसंगत्यर्थमाह ॥ **पाचकत्वाद्यनेकलिंगसमन्वयासिध्यर्थंइति** ॥ यद्यपिपाचकत्वंकर्मेतिवक्ष्यति तथापिलिंगत्वमप्यस्तीतिइयमुक्तिः ॥ **अभिविमानपदेनेति** ॥ नचप्रादेशत्वमात्रोक्तिविरोधः व्योमवच्चेतिवक्ष्यमाणत्वात् । तेजोभूतंभूताग्निः । प्रसिद्धितः लौकिकवैदिकप्रसिद्धितः । तदेवक्रमेणोपपादयति ॥ **श्रुतेरित्यादिना** ॥ **वैदिकेति** ॥ वेदप्रसिद्धायायंविद्याभेदव्यवहारः इत्यंवैश्वानराविद्यानेयामित्यादिरूपस्तस्माद्विरोधादित्यर्थः । देवताद्वंद्वेचेत्याङादेशेऽग्नावैष्णवंचरुमित्यादिवदग्नाविष्णोरित्युपपन्नं ॥ ॐ **वैश्वानरःसाधारणशब्दविशेषात्** ॐ ॥ वैश्वानरमुपास्तेत्युक्तवैश्वानरोविष्णुरेव । अग्निविष्णुसाधारणवैश्वानरशब्दस्यात्मशब्देन विशेषणादित्यर्थः । वैश्वानरशब्दस्यविष्णुपरत्वसंभवादित्यन्वयः । कुतइत्यतउक्तं ॥ **आत्मशब्दसामानाधिकरण्येनेति** ॥ आत्मानंवैश्वानरमितिसामानाधिकरण्येनेत्यर्थः । तस्याप्यन्यपरत्वंकिंनस्यादित्यतउक्तं ॥ **अन्यत्रानवकाशेति** ॥ कुतइत्यतउक्तं ॥ **आत्मशब्दइति** ॥ ॐ **स्मर्यमाणमनुमानंस्यादिति** ॐ ॥

इत्यहंवैश्वानरोभूत्वेत्येवंस्मर्यमाणंगीतास्मृत्युक्तंविष्णोरेववैश्वानरत्वमेतछ्रुत्युक्तवैश्वानरस्य विष्णुत्वस्यानुमानमनुमापकं । समाख्यारूपेणसाधकंस्यादित्यर्थः ॥ समाख्यानादितीति ॥ निर्णीतस्थळेसमानोक्तिरूप समाख्यायाइदंवाक्य-मेतत्परंएतत्समाख्यावत्वादित्यनुमानरूपेणवाक्यतात्पर्यनिर्णायकत्वादितिभावः ॥ इतिस्मर्यमाणेति ॥ स्मृतेर्बुद्धि-स्थत्वादितिभावः ॥ ॐ शब्दादिभ्योंतःप्रतिष्ठानान्नेतिचेन्नतथादृष्ट्युपदेशादसंभवात्पुरुषविधमपिचैन-मधीयते ॐ ॥ अग्न्यादिशब्दात् आदिपदोक्तहोमाधिकरणत्वाद्याग्निलिंगेभ्यः अंतःप्रतिष्ठानात् अंतः प्रविश्यपचनरूपाग्निव्यापाराच्च वैश्वानरोग्निरेव नविष्णुरितिचेन्न तेषांहरौसावकाशत्वात् । कथं अग्न्यादिनामालिंगकर्मत्वेनरूपेण दृष्ट्युपदेशात् विष्णोरुपासनोपदेशात् असंभवात् कोनआत्माकिंब्रह्मेत्युपक्रमोक्तब्रह्मशब्दस्याग्नावसंभवाच्च नासौवैश्वानरः । अपिचमूर्धैवसुतेजाइत्यादिनाछंदोगाः एनंवैश्वानरंपुरुषविधंशीर्ष्णोद्यौःसमवर्ततेति पुरुषसूक्तोक्तगुणवंतमधीयतेप्रतिपादयंति अतस्तत्समाख्याबलादपिविष्णुरेववैश्वानरोनाग्निरित्यर्थः । समानाधिकृतत्वंसामानाधिकरण्यं ऋचिऋग्वेदे वैश्वानरेश्रूयतइतिसंबंधः ॥ गार्हपत्याद्यंगत्वमिति ॥ वैश्वानरस्यगार्हपत्याग्निर्हृदयं अन्वाहार्यपचनाग्निर्मनः आहवनीयाग्निरास्यमितितदर्थादितिभावः ॥ अग्निकर्मचेति ॥ अस्यलिंगत्वेपिब्राह्मणपरिव्राजकन्यायेनपृथगुक्तिः ॥ अयमग्निरिति ॥ योयंप्रसिद्धोंतःपुरुषेपुरुषस्यांतर्वर्तते अयमग्निर्जाठराग्निस्थोभगवान्वैश्वानरःविश्वगुणत्वाद्विश्वः आसम्यङ्नरीयतेनक्षीयतइत्यानरःविश्वश्चासावानरश्चेतिवैश्वानरः तस्यव्यापारमाह ॥येनेति॥यदिदंप्रसिद्धंपुरुषैरद्यते इदमन्नंयेनपच्यतइत्यर्थः ननुछांदोग्यवैश्वानरविचारपरेऽस्मिन्नधिकरणेबृहदारण्यकादिवाक्योदाहरणंकथमित्यतआह ॥ अन्नेति ॥ अत्रसूत्राणांविश्वतोमुखत्वादितिभावः ॥ समाख्यारूपेणेति ॥ तत्प्रयोजनंचविष्णुपक्षवदाग्निपक्षेस-

माख्यास्तीतिभावः ॥ **मूर्धानंदिवइति** ॥ मूर्धानंदिवोऽरतिंपृथिव्यावैश्वानरमृतआजातमग्निं । कविंसम्राजमतिथिंजनानामासन्नापात्रंजनयंतदेवाइतिमंत्रस्येत्यर्थः । दिवइत्यादिषष्ठ्यर्थोजन्यजनकभावइत्याशयेनाह ॥ **दिवःकारणभूतेत्यादि** ॥ **जनानांसम्यग्ज्ञानायेति** ॥ जनानामित्येतद्दतआजातमित्यत्रापिसंबध्यतइत्युक्तंभवति ॥ सम्यङित्याङोर्थः अरतिशब्दस्यपादमिति ऋतइतिसम्यंतस्यज्ञानायेति थशब्दस्यान्नमिति असान्नित्यस्यमुखमितिचव्याख्यानिक्रमेणसमर्थयति ॥ **गतिसाधनत्वादित्यादिना** ॥ लोकेगमनेनारातिदर्शनाद्रातिविरुद्धगतिसाधनत्वात्पादो अरतिशब्दार्थइत्यर्थः । यद्वाकरणसाधनाद्दगतावित्येतस्मादतिप्रत्ययेगुणेचसतिनिष्पन्नोरतिशब्दःपादवाचकइत्यर्थः ॥ **तादर्थ्यमिति** ॥ चर्मणिद्वीपिनंहंतिदंतयोर्हंतिकुंजरमित्यादाविवेतिभावः इतिवाक्यार्थइतिवाक्यादवगंतव्यइति संबंधः तथाहि तस्माद्वैश्वानरज्ञानस्यसर्वपापक्षयहेतुत्वादेवएवंवित् उक्तरीत्यावैश्वानरज्ञानी यद्यपिचांडालायस्मरणायोग्यायापिस्वोच्छिष्टंदद्यान्नतत्तस्यपापहेतुः किंतुतद्दत्तमुच्छिष्टमस्यचंडालस्यांतर्यामिणिवैश्वानरेआत्मन्येवहुतंस्यादितिहिछांदोग्यवाक्यार्थः तदनुसारेणवैश्वानरेतत्धुतंभवतीत्यस्यापि यदिवैश्वानरज्ञानी यस्मैकस्मैचिदन्नंदद्यात्तर्हितत्तदंतर्गतवैश्वानरएवहुतंभवतीतिव्याख्यानंकार्यमिति ॥ छंदोगवाक्यस्थभक्तशब्दार्थमाह ॥ **अन्नमिति** ॥ ततश्चतत्तदाभोजनवेलायांयद्भक्तमन्नंप्रथममास्यंप्रत्यागछेत्तद्धोमीयंहोमद्रव्यमितितद्वाक्यार्थः । योषितंस्त्रियं वैदिकाः वेदानुकूलग्रंथाःवचनात् तैत्तरीयभाष्ये । वाक्यांतरस्ययोषितमित्यादेः योर्थइतिअंगारसदृशीनारीघृतकुंभसमःपुमानित्यादिप्रमाणांतरसिद्धाग्निसादृश्यरूपार्थेत्यर्थः प्रकृतश्रुत्यर्थैक्यायस्वहृदयइत्युक्तिः । श्रुतौगुणाःज्ञानादयः धर्माःसर्वज्ञत्वादयः अरमित्यस्यालमित्यर्थः रलयोरेकार्थत्वात् । अतएवतत्प्रदीपेरमित्यस्यसम्यगित्यर्थइत्याभिहितं आरभ्यउपक्रम्य अधीतत्वेनपठितत्वेन

शीर्ष्णः शिरसःसकाशात् समवर्तत अजायत प्राणात्श्वासात् तद्विधंतत्प्रकारं ॥ मूर्धैवेति ॥ सुतेजाःशोभनकांतिमान् द्युलोकःमूर्धास्वसमाननामवद्भगवच्छिरसोजातः विश्वरूपः सर्वरूपातिदर्शनाद्विश्वरूपाख्यः सूर्यश्चक्षुःस्वसमाननामोपेतभगवच्चक्षुषोजातः पृथक्विलक्षणोमार्गोयस्यासौवायुःप्राणः स्वसमाननामोपेतप्राणाज्जातः पृथ्वीपादौस्वसमाननामोपेतभगवत्पादजातेत्यर्थः । ननुसमाख्यासमुच्चयोपक्षीणचशब्दस्यकथंप्रसिद्धिसूचकत्वमित्यतआह ॥ अपिपदेनेति ॥ उभयेति ॥ प्रकरणसमाख्यारूपोभयेत्यर्थः ॥ परोविलक्षणइति ॥ तेननपरमइत्यनेनपुनरुक्तिरितिभावः ॥ आदिपदेनेति ॥ सकलवेदतंत्रपुराणादिष्वित्यत्रत्यादिपदेनेत्यर्थः तद्भेदः द्युभ्वाद्यभेदः ॥ ॐ अतएवनदेवताभूतंच ॐ ॥ आत्मशब्दादिहेतोरेवाग्निंदेवतातंजोभूतंचवैश्वानरेणनभवतीत्यर्थः ननुवैश्वानरशब्दसमन्वयस्यैवप्रकृतत्वादग्न्यादिशब्दग्रहणमनर्थकमित्यतआह ॥ अत्राग्न्यादिग्रहणमिति ॥ अग्निशब्दादित्यशब्दयोर्ग्रहणमित्यर्थः ॥ ॐ साक्षादप्यविरोधंजैमिनिः ॐ ॥ साक्षात् अन्यवाचकत्यागेन ब्रह्मणोवैश्वानरादिशब्दवाच्यत्वेप्यन्यत्रव्यवहाराविरोधंजैमिनिराहेत्यर्थः । नाग्न्यादिवाचकाःपरममुख्यवृत्त्या ॥ किंज्ञानिप्रसिद्धिविरोधउताज्ञानिनां आद्यआह ॥ अनन्ययोगेनेति ॥ अन्यवाचकत्वंविनेत्यर्थः । द्वितीयेत्वाह ॥ तदन्यत्वेत्विति ॥ नतद्विरोधइति ॥ ज्ञानिप्रसिद्धेरौपचारिकत्वादज्ञानप्रसिद्धेर्ज्ञानमूलत्वेनतद्विरोधस्याकिंचित्करत्वादितिभावः । भाष्येअवछिन्नानिपरिछिन्नानि ऊरीकृत्यअंगीकृत्यग्रहादिवत् यथामहागृहात्परिछिन्नान्यवांतरगृहाणिमहानसादिशब्दैर्व्यवह्रियंतेतथेत्यर्थः । प्रसिद्ध्याकाशोक्तेःप्रकृतासंगतत्वादाह ॥ ज्ञानेति ॥ आकाशवद्ज्ञानस्यापरिछिन्नत्वादेवमुक्तिः ॥ अनादित्वादिति ॥ वैदिकत्वादेवेतिभावः ॥ ॐ अभिव्यक्तेरित्याश्मरथ्यः ॐ ॥ अग्न्यादिसूक्तादिभिः ब्रह्मोपास्तावग्न्यादिष्वे

वनस्याभिव्यक्तेरग्न्यादिसूक्तादिनियमः संभवतीत्याश्मरथ्योमन्यतइत्यर्थः । अव्यक्तस्यकथंव्यक्तिरित्यतउक्तं ॥ स्वेछयेति ॥ इछारूपप्रसादेनेत्यर्थः ॥ ॐ अनुस्मृतेर्बादरिः ॐ ॥ तत्तत्सूक्ताद्युपासकैरग्न्यादिष्वेवब्रम्हणोनुस्मृतेध्यानत्वात्तत्तत्सूक्तादिव्यवस्थेतिबादरिर्मन्यतइत्यर्थः ॥ प्रतिपत्तव्येति ॥ ध्यातव्येत्यर्थः ॥ ॐ संपत्तेरितिजैमिनिस्तथाहिदर्शयति ॐ ॥ अग्न्यादिसूक्ताद्युपासकानामग्न्यादिप्राप्तेर्निमित्तात्तत्तत्सूक्तादिनियमइतिजैमिनिर्मन्यते । तदुपासकानांतत्प्राप्तिः कुतइत्यतउक्तं ॥ तथ हिदर्शयतीति ॥ दिवस्मात्तंयथायथेतिश्रुतिर्जैमिनेर्मतंयथातथादर्शयतीत्यर्थः ॥ अंदानाजेति ॥ संप्रेतिनिशब्दार्थंजानतांउक्तशंकानुदयादितिभावः । उपासतइतिबहुबचनात्प्राप्नुवंतीतिबहुवचनोक्तिः । ननुयथासाक्षात्प्यविरोधंजैमिनिरितिसूत्रेलौकिकव्यवहारस्यौपचारिकत्वमंगीकृत्यअग्न्यादिशब्दानां भगवद्वाचकत्वंसमर्थितं । तथासूक्तादिव्यवहारस्याप्युपचारितत्वमंगीकृत्यसूक्तानांविष्णुपरत्वंव्यवस्थाप्यतां किमनेनैतैः सूत्रैःसूक्तादिव्यवस्थासमुच्चयार्थत्वसमर्थनेनेत्यतआह ॥ अत्रव्यवहारस्येति ॥ सूक्तादिविषयमित्यर्थः । प्रागुक्तैवानुपपत्तिः नाविव्यवहारार्थतेन न्यायान्तरापातेरनादित्वादितिप्रागुपपत्तिरुक्तैवनपुनर्वक्तव्येत्यर्थः । अंतरंगानुपपत्तिंचाह ॥ श्रुतेति ॥ तत्रद्वितीयविषयपरिज्ञानेनब्रह्मप्राप्तेरुक्तत्वाद्ब्रह्मणएवतद्विद्याविषयत्वंनाग्न्यादेरितिवदतान्यज्ञानेनान्यप्राप्तेरनभ्युपगमादित्यर्थः ॥ ॐ आमनंतिचैनमस्मिन् ॐ ॥ एनंविष्णुंअस्मिन्नग्नौयोग्नौतिष्ठन्नित्यादिश्रुतयआमनंतिप्रतिपादयंतीत्यर्थः । व्याख्यानप्रमुखावसरकः एतदाशंकानिरासकसमुच्चिनस्यैवोक्तहेतोः स्वार्थसाधकत्वादितिभावः ॥ ७ ॥ इतिश्रीमत्तत्वप्रकाशिकाव्याख्यायांमंजर्यांशर्करायांश्रीनिवासविरचितायांप्रथमाध्यायस्यद्वितीयःपादः ॥ ॥ श्रीकृष्णार्पणमस्तु हरयेनमः श्रीरामकृष्णः ॥ ॥ ॥ ॥

॥ श्रीहनुमतेनमः ॥ श्रुत्यादिप्रसिद्धेति ॥ अनेनोभयश्रुतिलिंगादिभिस्तुल्यप्रसिद्धिमत्त्वमुभयत्रप्रसिद्धिमत्त्व
मितिसूचितं । एतेनान्यत्रप्रसिद्धपृथिवीशरीरत्वसाहित्यादंतर्यामित्वस्यान्यत्रप्रसिद्धत्ववदन्यत्रप्रसिद्धजायमानत्वादि
साहित्याद्युभ्वाद्यायतनत्वमप्यन्यत्रप्रसिद्धंस्यादितिनिरस्तं समाख्याश्रुत्यादितौल्याभावस्यान्यत्रप्रसिद्धलक्षणांतर्गतत्वे
न तत्तौल्यवतोस्यान्यत्रप्रसिद्धत्वाभावात् । उभयत्रप्रसिद्धत्वेनैवविष्णुवाचित्वमपिसिद्धमेवेत्यतउक्तं ॥ विष्ण्वैक-
वाचित्वमिति ॥ श्रुत्यादिभिरन्यत्रप्रसिद्धत्वेविष्ण्वैकवाचित्वप्रतिपादनमशक्यमित्यतउक्तं ॥ प्रबलहेतुभिरि-
ति ॥ अत्रास्तिशास्त्रादिसंगतिरित्यन्वयः ॥ रुद्रइति ॥ रोगद्रावकत्वेनरुद्रनामाभगवान्सर्वलोकाधारोवावप्रसिद्ध
इत्यर्थः ॥ वायुनेति ॥ हेगौतमस्यूत्तमत्रसर्वंजगदितिसूत्रंतेनज्ञानादिमत्वाद्वायुशब्दितेनभगवतायंभूलोकः परोंत
रिक्षादिलोकः सर्वाणिभूतानिचसंदृब्धानिसंगतानिधृतानीत्यर्थः ॥ आकाशइति ॥ अतीतानागतवर्तमानंयदाच-
क्षतेविद्वांसस्तत्सर्वमाकाशेभगवदाश्रिताकाशाख्यप्रकृतौ ओतप्रोतंसूत्रेपटवत्अत्यंतमाश्रितइत्यर्थः । लोकाःसप्तलोकाः
लौकिकनस्तदभिमानिनः अलोकावैकुंठादयः अलौकिनस्तद्गतामुक्ताः । उक्तं अथपरायेत्यनेन । मोक्षायभग-
वद्दानंकुतइत्यतउक्तं ॥ अमृतस्येति ॥ एषभगवानमृतस्यमुक्तवर्गस्यसेतुरिवसेतुराश्रयइत्यर्थः । अत्रद्युभ्वा-
द्यायतनस्यमोक्षसाधनविद्याविषयत्वात्परविद्याविषयत्वमुच्यते । मोक्षसाधनविद्यायाएवपराविद्यात्वादितिभावः ।
इत्यादिना समाख्यावाक्येन ॥ प्राणानांग्रंथिरिति ॥ मेत्यस्यावृत्तिः । हेविष्णोरुद्रशब्दवाच्य त्वंप्राणानामिं
द्रियाणांग्रंथिः ग्रंथनंतआरेभजि तिग्रंथिराश्रयोसि त्वमंतकःसंहर्तासन्माप्राममाविश नप्रविशेत्यर्थः ॥ प्राणेश्वरइति ॥
प्राणानामिंद्रियाणामीश्वरः कृत्यात्मकेचर्मात्मकेदेहेनियामकतयावसतेतिष्ठतीतिकृत्तिवासाः । नाकंसुखंपिबतीतिपि

नाकाः मुक्ता तेतस्यसंतीतिपिनाकीमुक्ताश्रयइत्यर्थः ॥ **रुद्रलिंगादिति** ॥ संहर्तृत्वगजचर्मांबरवस्त्रपिनाकचापव-त्वादीनांतत्रैवप्रसिद्धत्वादितिभावः । किंचरुद्रस्यसर्वाधारत्वप्रतिपादकपाशुपताद्यागमेनापितस्यसर्वाधारत्वंसिध्यति । नचतस्याप्रामाण्यं । विमतंवाक्यंप्रमाणंरुद्रवाक्यत्वात्दृष्टफलविधायकरुद्रवाक्यवदितितस्यप्रामाण्यानुमानादित्याह ॥ **दृ-ष्टफलेति** ॥ प्रत्यक्षसंवादिफलाभिधायकेत्यर्थः । विमतंप्रमाणंकापिलवाक्यत्वात्दृष्टफलाभिधायककापिलवाक्यवदित्य-नुमितप्रामाण्यापेतकापिलागमेनापिप्रधानस्यसर्वाश्रयत्वसिद्धिरित्याह ॥ **पूर्ववदिति** ॥ **अराइवेति** ॥ रथनाभौ-चक्रे अराःदलानीवयत्रशरीरेनाड्यःसंहताःसंस्थाः तत्रशरीरेसएषः सर्वजीवनियामकत्वेनसर्वजीवहृदयस्थितोवि-ष्णुःस्वयमेकएवस्वेच्छयैवबहुधाजायमानोविश्वतैजसादिरूपेणबहुधाभवन्शरीरांतश्चक्षुरादिस्थानेषुसंचरतीत्यर्थः ॥ **जी-वत्वादेवेति** ॥ जीवप्राणधारणइतिधातोरितिभावः ॥ **प्रसिद्धेरिति** ॥ प्राणान्पृथक्पृथगेवसन्निधत्तइत्यादा-वितिशेषः ॥ **तथेति** ॥ जीवेशाभेदेनयथेशलिंगंजीवेसंभवतितथेत्यर्थः । कारणं उपादानं व्यावहारिकमात्रस्यब्र-ह्मोपादानकत्वंवदतांऽद्वैतिनांमतेजीवस्यापिव्यावहारिकत्वान्नानुपपत्तिः ॥ ॐ **द्युभ्वाद्यायतनंस्वशब्दात्** ॐ ॥ यस्मिन्द्यौरित्यादिद्युभ्वंतरिक्षाद्याश्रयत्वेनोक्तंब्रह्मैव नरुद्रादिः कुतः जानथआत्मानमितिस्वशब्दपर्यायात्मशब्दसङ्ग्रा-वादित्यर्थः । विषयवाक्येस्वेतिशब्दाभावात्भाष्येआत्मशब्दादित्युक्तमित्याशयेनाह ॥ **स्वशब्दपर्यायेति** ॥ उभयोर पिसाक्षाद्विष्णुस्वरूपवाचकत्वादतएवचतुर्मुखस्यात्मभूःस्वयंभूरितिनामेतिभावः । सूत्रेआत्मशब्दादित्युक्तौतस्यापिविष्णु परत्वंपृथग्वक्तव्यंतच्छब्दादित्युक्तौचशब्दविशेषप्रतीतिर्नस्यादतस्तदुभयलाभायस्वशब्दादित्युक्तं एवमुक्तौहिउक्तिवक्र-त्वावैव्यर्थ्यायस्वस्यावर्णोरेवशब्दः स्वशब्दइत्यपिविग्रहस्याविवक्षणीयत्वादसाधारण्यंज्ञापितंनस्यादेतदेवाभिप्रेत्योक्तं -

तत्त्वप्रदीपे विष्णोःस्वरूपस्यैवसाक्षाद्वाचकोह्यात्मशब्दइति ॥ ॐ मुक्तोपसृप्यव्यपदेशात् ॐ ॥ भावप्रधानोयं। अमृतस्यैषसेतुर्गतिमुक्तैःप्राप्यांतरशून्यत्वेसतिप्राप्यत्वव्यपदेशादात्मशब्दोनामुख्यार्थइत्यर्थः । मुक्तानांबहुत्वादाह ॥ जानाविति ॥ भाष्येविद्वानात्मानंवक्ष्यस्वामिनंद्वितीयांतानांतद्विरूपमुपजीवंतीतिपूर्वेणान्वयः । प्रकृतोपयोगादाह ॥ पराणामिति ॥ अन्यस्यापीति ॥ उदाहृतवाक्येष्वन्यानिषेधादितिभावः ॥ बहुनेति ॥ तत्रश्वेतद्वीपस्थभगवत्प्राप्तिर्निनाप्रकारांतरानिषेधात्तस्यैवमुक्तप्राप्यत्वसिद्धिरितिभावः । ननुसर्वेषांश्वेतद्वीपगमनमयुक्तं । केचिदत्रैवमुच्यंते नाकांतिकदाचन । केचित्स्वर्गेमहर्लोकेजनेतपसिचापरे । केचित्सत्येमहाज्ञानाः गच्छंतिक्षीरसागरमित्यत्र महाज्ञानिनामेवक्षीरसागरगतश्वेतद्वीपगमनोक्तेः योग्यत्वंचापेक्षितमितिगीताभाष्येश्वेतद्वीपगमनेपियोग्यत्वोक्त्यासर्वेषांतदभावादितिचेन्न । उदाहृतप्रमाणभाष्ययोःश्वेतद्वीपनिवासेमहाज्ञानयोग्यतायाः प्रयोजकत्वोक्त्यासर्वेषांतद्गमनमात्रांगीकारेपिविरोधाभावात् । स्फुटंचैतत्प्रमेयदीपिकायां वक्ष्यतिचात्रचतुर्थाध्यायेसकृच्छ्वेतद्वीपगमनांगीकाराद्योग्यत्वंचात्रापेक्षितमिति । एतत्सर्वमभिप्रायं निगमयितव्यमिति ॥ ॐ नानुमानमतच्छब्दात् ॐ ॥ अनुमानसिद्धप्रामाण्यकागमकल्पितरुद्रप्रधानाख्यंनात्रसर्वाधारतयोच्यते प्रकृतधर्मत्वात्रिगुणत्वादितदुभयसंबंधिशब्दाभावादित्यर्थः ॥ विप्रतिपन्नेति ॥ रुद्रादेः सर्वाश्रयत्वाद्यभिधायीत्यर्थः ॥ प्रतिपक्षेति ॥ नन्वत्रफलविसंवादिवाक्यत्वंहेतुरुतरुद्रादिवाक्यत्वं । नाद्यःअन्यतरासिद्धेः द्वितीयेप्रकरणसमत्वेनप्रतिपक्षायोगः । साध्यविपरीतसाधकहेत्वंतरस्यैवप्रतिपक्षत्वादितिचेन्न । प्रतिपक्षशब्देनमतिरोधिमात्रग्रहणेनप्रकरणसमस्यैवात्रोक्तेः ॥ अतिप्रसंगेति ॥ दृष्टफलाभिधायिप्रतारकवाक्यदृष्टांतेनप्रतारकवाक्यत्वेन हेतुनाविप्रतिपन्नप्रतारकवाक्यप्रामाण्यसाधनप्रसंगरूपेत्यर्थः अभाषितं । भाष्ये अनुक्तं । अन्य

त्रविष्णुतत्वनिर्णये। प्रकृतिपदेन अन्यत्रोक्तेन ननु रुद्रादिशब्दस्योभयत्ररूढिसाम्येपि निरवकाशविष्णुलिंगबलान्निश्चयोपपत्तिरित्यतआह ॥ नहिश्रुत्यंतरेति ॥ भाष्ये ईशनान्नियमनात्महत्वतः उत्तमत्वात्सागरादित्यनंतरं पिनाकइत्युच्यतइति शेषः। शंरोधनाद्दैत्यानांसुखनिरोधात् । वस्ते वसति विरेचनात् । प्रलयेस्वोदरप्रविष्टजगतः सृष्टौबहिर्निसरणात् बृंहणात् पूर्णत्वात् गतिः वाच्यतयाश्रयइत्यर्थः ॥ ॐ प्राणभृच्च ॐ ॥ आत्मशब्दमुक्तप्राप्यत्वादित्तच्छब्देभ्यः जीवमुख्यप्राणौ चनसर्वाश्रयावित्यर्थः ॥ ॐ भेदव्यपदेशात् ॐ ॥ अन्यमीशमितीहैवजीवब्रम्हभेदव्यपदेशात् नतयोरैक्यमित्यर्थः ॥ ॐ प्रकरणात् ॐ ॥ परंविद्याविषयवस्तुनएवात्रारभ्याधीतत्वेनास्यब्रम्हप्रकरणत्वादत्रत्येशोब्रह्मैवेत्यर्थः ॥ ॐ स्थित्यदनाभ्यांच ॐ ॥ स्थितिः कर्मफलोपजीवनंविनावस्थानं अदनंतदुपजीवनंताभ्यांजीवब्रह्मणोर्नैक्यमित्यर्थः । कर्मफलभोगानंगीकारेगुहाधिकरणविरोधइत्यतआह ॥ नत्विति ॥ क्रमोल्लंघनमिति ॥ तत्रादनस्यैवप्रथममुक्तेरितिभावः ॥ सत्योमिथ्यावेति ॥ व्यावहारिकत्वस्यव्यवहारनिर्वाहकत्वस्यव्यवहारनिर्वाहकत्वव्यवहारकालेप्रतीयमानत्वसाधारण्यादितिभावः ॥ व्यावहारिकत्वंतदिति ॥ व्यावहारिकावेदनलक्षणप्रामाण्यमित्यर्थः । ननुप्रामाण्येव्यावहारिकत्वंविवक्षितं तथात्वेतत्त्वावेदनलक्षणप्रामाण्यस्यापिव्यावहारिकत्वेनाविशेषप्रसंगादितिध्येयं वाचोयुक्तेः वाक्प्रयोगस्य ॥ नदोषइति ॥ मिथ्याप्रतिपादकत्वमेवाप्रामाण्येप्रयोजकमितिभावः वैयर्थ्यादनुवादस्य ॥ निषेधोस्तीति ॥ भेदाभेदयोरन्यनिषेधरूपत्वादितिभावः अयंद्वासुपर्णेत्यनेनक्रियमाणः ॥ अस्तीति ॥ आनंदमयनयरीत्येतिभावः अनुमानं भेदोमिथ्याभेदत्वादित्यादि भेदस्यमिथ्यात्वंकिंप्रमाणबलादंगीक्रियते उततत्सत्यत्वे प्रमाणाभावात् ॥ आद्यंनिराकरोति नहीत्यादिना द्वितीयंनिराकरोति ॥ नचतत्सत्यत्वमिति ॥ स्वरूपेति ॥

भेदस्वरूपेत्यर्थः ॥ **तस्यवैय्यर्थ्यादिति** ॥ विषयमत्यत्वसिद्धेः प्रमाणफलत्वादितिभावः । ननुमायामात्रमिदंद्वैतमि-
त्यादिश्रुतेर्भेदमिथ्यात्वप्रतिपादकत्वात्कथंतदभावइतिचेन्न । मायेतिभगवत्प्रज्ञासैवमानत्राणकर्त्रीयस्यमायामात्रमित्यन्य-
त्राचार्यैस्तस्याः सम्यग्व्याख्यातत्वात् । तदेतदाह ॥ **अलमिति** ॥ १ ॥ **श्रुत्येति** ॥ समाख्यारूपश्रुत्येत्यर्थः ।
भूमन्भूयःशब्दयोःपर्यायत्वादितिभावः । स्थानांतरश्रुतसमाख्यायाः अत्रैवश्रुतोपक्रमतोदुर्बलत्वेपिप्राबल्याद्यविवेकेनसा-
धारणप्रयोजकत्वमुपपन्नं ॥ **योवैभूमेति** ॥ अनेनभूमाख्यनारायणस्यलक्षणमुच्यते योवैभूमापूर्णोनारायणाख्य-
स्तत्सुखं अनन्याधीनसुखरूपं । अस्यातिव्याप्तिंपरिहरति ॥ **नाल्पइति** ॥ भूमप्रसादंविनानाल्पेमुक्तजातेसुखमस्ति । ततः
किमित्यतआह ॥ **भूमैवेति** ॥ तस्माद्भूमैवानन्याधीनसुखरूपमित्यर्थः ॥ **नामवागादीति** ॥ वाग्वावनाम्नोभूयसी म-
नोवाववाचोभूयः संकल्पोवामनसोभूयान् चित्तंवावसंकल्पाद्भूयः ध्यानंवावचित्ताद्भूयः विज्ञानंवावध्यानाद्भूयः बलंवाव
विज्ञानाद्भूयः अन्नंवावबलाद्भूयः आपोवावान्नाद्भूयस्यः तेजोवावअद्भ्योभूयः आकाशोवावतेजसोभूयान्स्मरोवावाकाशा-
द्भूयान् आशावावस्मराद्भूयसीत्येवंनामादिशब्दितोषास्वाहापर्जन्यमित्राग्निवरुणसोमप्रवाहानिरुद्धतैजसप्राणेंद्रोमारुद्रस-
रस्वतीनांतारतम्यमुक्तेत्यर्थः । अत्राशावसानमुक्त्वाप्राणस्योत्तमत्वंचाभिधायेत्यनेनप्राणस्यभूमत्वे आशाशब्दितसरस्वत्यु
त्तमत्वरूपामुक्तिरुक्तेतिद्रष्टव्यं ॥ **तदुत्तममनुक्त्वेति** ॥ अस्तिभगवआशायाभूयइत्याशावावभूयोस्तीतितन्मेभगवान्
ब्रवीत्विति प्रश्नवत्प्राणोवावआशायाभूयानितिप्रत्युक्तिवच्चात्रप्राणादूर्ध्वमस्तिप्राणाद्भूय इतितन्मेभगवान्ब्रवीत्वितिप्रश्न-
स्यभूमावावप्राणाद्भूयानितिप्रत्युत्तरस्याप्यभावेनभूम्नः प्राणादनन्यत्वनिश्चयइतिभावः । आम्नातत्वात् पठितत्वात्
॥ **उत्क्रांतप्राणानिति** ॥ प्राणवत्पित्रादीन्प्रतियदिकश्चित्त्वंकारादिनाभृशंवदेत्तस्यपितृहंतृत्वादिनानिंद्यवचनयो-

ग्यत्वमुत्क्राप्राणोत्क्रमणानंतरंतन्नेत्यनेनोच्यते । उत्क्रांतःप्राणोयेभ्यस्तेउत्क्रांतप्राणाःपित्रादयःतान्प्रति यदिसमासंसंकोचेनव्यतिषंविस्तरेणवाशूलेनदहेत् हत्वाभस्मीकुर्यात्तदाएनंपितृहासीत्यादिनैवब्रूयुरित्यर्थः ॥ ॐ **भूमासंप्रसादादध्युपदेशात्** ॐ ॥ योवैभूमेत्युक्तभूमाविष्णुरेव संप्रसादात् सम्यक्प्रसीदत्यनेनेतिसंप्रसादः पूर्णसुखंतदभिधानात् । अध्युपदेशात् अधि नामादिसर्वोत्तमत्वेनव्यपदेशाच्चेत्यर्थः ॥ **विश्वशंभुवमित्यादि** ॥ ततश्चायंश्रुत्यर्थः अनंतमूर्धानंदेवंप्रकाशरूपंविश्वाक्षंअनंताक्षंविश्वशंभुवं । विश्वंचततशंचविश्वशंतद्भवत्यस्मिन्निति विश्वशंभुवंपूर्णसुखाश्रयं । विश्वं ज्ञानादिपूर्णः । नारायणंमुक्तसंघाश्रयं देवंस्वेच्छयाविहरंतं अक्षरंचतुर्विधनाशरहितं । परंपदं अत्यंतप्राप्यं । विश्वतः सर्वतः परमां परमश्चासौअश्चपरमा तं उत्तमं अकारशब्दवाच्यं नित्य तद्विश्वमुपजीवतीत्यन्वयइति । यद्यपि परममित्येवद्राविडपाठः । तथापिपरमामित्यांध्रपाठोभाष्येउदाहृतः ॥ **विरोधादेवेति** ॥ उभयोरपिस्वतरसर्वोत्तमत्वे अन्योन्यापेक्षयोत्तमत्त्वप्राप्त्याव्याघातादित्यर्थः । तर्हिभूमाकिंविष्णोरन्यइतितत्राह ॥ **अनंतरमिति** ॥ प्राणानंतरमित्यर्थः । न्यायविवरणानुसारेणपक्षांतरमाह ॥ **अस्तुवेति** ॥ नचतदुक्तममनुक्त्वाभूम्नःआम्नानात्तस्यैवभूमत्वमितिवाच्यं । अनुक्तेरेवाभावादित्यतआह ॥ **एषतुवाअतिवदतीति** ॥ यःसत्येनातिवदतीत्यादिपदोक्तं । योधिकारीसन्निर्दोषश्चासौनियामकश्चेतिसत्योविष्णुस्तेन अतिवदतितमतिशयेनातिवदतीतियावत् सएषःतुप्राणातिवाद्यपेक्षयाविशेषेणातिवदति अत्युत्तमवस्तुवादीत्यर्थः । इत्यादिनाज्ञापकेनप्रश्नादीत्यादिपदेनसत्यंवावप्राणाद्भूयइतिप्रतिवचनग्रहः । प्रश्नाध्याहाराभावेएवंविजानन्नातिवादीभवतीत्याद्युक्तप्राणज्ञानिनः सकाशादेषतुवाअतिवदतीत्यादिनासत्याख्यभूमज्ञानिनस्तुशब्देनविशेषोक्त्ययोगादितिभावः ॥ **इत्यादिवदिति** ॥ तत्रैकस्याकाशशब्दस्यभूततदंत्तर्यामिपर-

त्ववदत्राप्युभयपरत्वमविरुद्धमित्यर्थः ॥ ॐ धर्मोपपत्तेश्च ॐ ॥ सएवाधस्तादित्याद्युक्तसर्वगतत्वादिधर्माणांवि-
षणावेवोपपत्तेश्चसएवभूमेत्यर्थः ॥ सएवेति ॥ सभूमैवाधोभागादिस्थितः सर्वगतत्वंसर्वसत्ताप्रदानायेत्युक्तं ॥ सए-
वेदंसर्वमिति ॥ सएवस्वतंत्रःइदंसर्वंतदधीनमित्यर्थः । यद्वाइदंसर्वमित्यत्रलिंगव्यत्यासेनायंसर्वइत्यंगीकृत्यसभूमा-
सर्वत्रसन्निहितत्वादयंपूर्णत्वात्सर्वइत्युच्यतइत्यर्थः यत्रेत्यनेनभूम्नोऽसदृशत्वमुच्यतेयत्रयस्याधीनंविनान्यंनपश्यति अ-
धिकारीसर्वमेवतदधीनंपश्यतिशृणोतिविजानातिवासभूमेत्यर्थः । जानन्नपिनारदोविशेषार्थज्ञानायस्थापनायचभूमाश्र-
यंपृच्छति ॥ सइति ॥ हेभगवःभगवन्सभूमाकस्मिन्प्रतिष्ठितः आश्रितः सनत्कुमारउत्तरमाह ॥ स्वेमहिम्नीति ॥
स्वेस्वकीये महिम्निसामर्थ्ये प्रतिष्ठित इत्यर्थः ॥ २ ॥ वाजसनेयके बृहदारण्यके ॥ तद्वाएतदिति ॥
हेगार्गीतियाज्ञवल्क्यस्यस्वभार्यांप्रतिसंबोधनं । तदक्षरशब्दवाच्यंब्रह्म अदृष्टंअन्यैः साकल्येनद्रष्टुंनभवतिस्वयंतुद्रष्टृ एव-
मग्रेपियोज्यं । अन्येषामपिद्रष्टृत्वादिसद्भावात्किमनेनेत्यतआह ॥ नान्यदिति ॥ अतोक्षरादन्यत्स्वातंत्र्येणद्रष्टृनास्ति ।
एवमग्रेपि आकाशः प्रकृतिः नन्वक्षरशब्दस्य जडप्रकृतावपिसिद्धेः कुतोनतस्याः संदेहविषयत्वमित्यत आह ॥ द्रष्टृ-
त्वादीति ॥ प्रथमाप्रतीतेरिति ॥ सदेवसौम्येतिविषयवाक्यतदैक्षतेत्यश्रवणादितिभावः । मध्यममित्यक्षरत्रया-
पेक्षयोक्तिः । प्रशासने आज्ञायां विधृतौ विशेषेण धृतौ इत्यादेरित्यादिपदोक्तांस्मृतिमाह ॥ तथाचेति ॥ अक्षरम-
हिनाशि । सूक्ष्मत्वादनिर्देश्यमदृश्यं अप्रसिद्धत्वादव्यक्तं सर्वत्रगंदेशतोव्याप्तं गुणबाहुल्यादचिंत्यं कूटेअव्याकृताकाशे
अभिमानित्वेनस्थितंकूटस्थं अचलं कदापिस्वपदादभ्रष्टं ध्रुवंनिर्विकारमित्यर्थः । इदंचचित्प्रकृतिपरमितितात्पर्येणव्यक्तं । ॥ ६२ ॥
असीदितिगीताभाष्योक्तस्मृतिः तमोभूतं तमोरूपं तमआसीत्तमसागूळहमग्रइतिश्रुतेः अप्रज्ञातंशब्देन अलक्षणं लौकिक-

चिन्हरहितं अतर्क्यं अनुमानागम्यं अनिर्देश्यंप्रत्यक्षेण प्रसुप्तमिवतदानींजगद्व्यापाराभावात् । अभिषूयमाणं अभिष-
वयुक्तं । ननुसोमपदोक्तचंद्रस्यकथंयज्ञेषुअभिषवगमित्यत आह ॥ लताभिमानित्वेनेति ॥ यथासोमोवैराजेत्यादौ-
हूयमानभक्ष्यमाणसोमलताभिमानित्वेनचंद्रमसिहूयमानत्वभक्ष्यमाणत्वव्यपदेशस्तथात्रापिसोममभिषुणोतीतिवाक्यवि-
हिताभिषवणयुक्तसोमलताभिमानित्वेन चंद्रेभिषूयमाणत्वव्यपदेशइत्यर्थः ॥ ॐ अक्षरमंबरांतधृतेः ॐ ॥ अक्षरं-
गार्गीत्युक्तमक्षरंब्रह्मैवअंबरांतधृतेः अंबरमाकाशशब्दितंश्रीतलं अंतंयस्यसर्वस्यजगतस्तदंबरांतंतस्यधृतेर्धारणादित्यर्थः ।
दिवःस्वर्गाद्वैकुंठाद्वाऊर्ध्वंउपरियदस्तिमहर्लोकादिकंब्रम्हांडखर्परबहिरावरणादिकंवा पृथिव्याः भूलोकात्पृथिवीसंबंध-
लोकाद्वाअर्वाक्अधोयदस्तितलादिकमंडोदकंवा अंतराऊर्ध्वार्वाक्शब्दवाच्ययोः पूर्वोक्तयोर्मध्येवर्तमानंयतइमेप्रसिद्धे-
द्यावापृथिवीस्वर्गादिभूरादिकेभर्तासन्म्रियमाणोबिभर्ति एकोदेवोबहुधानिविष्टःयदाभारंतंद्रयतेसभर्तुंपरास्यभारंपुनर-
स्तमेतीतिश्रुतिंव्याचष्टे ॥ एकोदेवइति ॥ भर्त्तेत्यस्यार्थोभर्तृत्वेनेति ; श्रुतौपरास्य निरस्य ॥ प्राणस्येति ॥ तस्यच-
विष्णुत्वंप्रागेवसमर्थितमितिभावः । अधिअवर्धत अधिनिषेदुः । अवास्थितावभूवुः ॥ ॐ साचप्रशासनात् ॐ ॥
साचधृतिःप्रशासनादक्षरस्याज्ञामात्राद्दुच्यते । अतश्चाक्षरंब्रह्मैवेत्यर्थः । आर्थशब्दार्थोअतिसमृद्धेति । तदावरणोत्तिफ-
लितोक्तिः । भुवनस्यरेतइत्येतदावृत्त्याह ॥ भुवनस्यरातिप्रदस्येति ॥ चतुर्भिरितिश्रुतिर्जन्मनयेव्याख्याता भाष्ये-
हृदयंश्रयतइतिहृच्छ्रयः प्रकृतोपयोगायाह ॥ धृतिहेतुरिति ॥ ॐ अन्यभावव्यावृत्तेश्च ॐ ॥ अन्येषांवस्तूनां-
भावानांस्थौल्यादीनांव्यावृत्तेश्चाक्षरंब्रह्मैवेत्यर्थः ॥ एतद्वैतदिति ॥ एतत्आकाशाश्रयत्वेनवक्ष्यमाणमक्षरशब्दवाच्यं
ब्रह्मेतितदेतल्लक्षणकं ब्राम्हणाःब्रह्मज्ञानिनःअभिवदंतिवै किंतल्लक्षणमित्यतआह ॥ अस्थूलमित्यादि ॥ प्राकृतस्थौ-

ल्यादिरहितमित्यर्थः । अलोहितं लोहितोपलक्षितरूपमात्रशून्यं अच्छायंतेजोरूपत्वात् । अज्ञानरहितं असंगं निर्लेपं । अतेजस्कं वर्चोरहितं अप्राणं चक्षुश्रोतृत्वाङ्मनोतिरिक्तज्ञानकर्मेंद्रियशून्यं । अमुखं तदुपलक्षितशरीररहितं । अमात्रं परिमितिशून्यं । नविद्यतेअंतरंयस्यतदनंतरं नविद्यतेबाह्यंयस्यतदबाह्यं इदमेवमवांतरं । बाह्यंचेतियावत् तर्ह्यप्राकृततमोवाय्वादिरस्तिकिंनेत्याह ॥ तमोवाय्वादीनामिति ॥ संगतानामित्यर्थः । उपलक्षणमेतत् सुधानुसारेणछायाया अपिसर्वात्मनानिवृत्तिर्द्रष्टव्या । एकवाक्यपठितशब्देष्वित्थंवैषम्याश्रयणमदृष्टचरमित्यतोत्रबृहद्भाष्योदाहृतस्मृतिमुदाहरति ॥ अदुःखमसुखमिति ॥ यथात्रासुखमित्यनेनबाह्यसुखनिषेधेपि अदुःखमित्यनेनदुःखमात्रनिषेधः तथात्रापीत्यर्थः । ननुपरमात्मनः सर्वथावायुरहितत्वेप्राणाद्वायुरजायतेतिश्रुतिप्राणः पृथक्त्ववर्त्मेतिछंदोगेश्वसितंमातरिश्वेतिभागवतेचमुख्यप्राणस्यभगवच्छ्वासजन्यत्वाभिधानंश्वासैजदलकत्रातमित्यादिद्वादशभागवतवाक्यंचकथंसंगच्छतइतिचेदुच्यते । नात्रश्वासरूपवायुनिषेधः क्रियते किंतुदेहारंभकस्यैव । आकाशसहपाठात् । नह्याकाशस्यदेहारंभकत्वेननिषेध्यत्वंविनाप्रकारांतरमस्ति श्वासश्चतत्स्वरूपभूतोस्त्येव । अतएवछांदोग्यभाष्ये । वाय्वादिप्राणशक्त्यंनयत्तत्कर्ताहरिर्यतः प्राणस्तेनपृथग्वर्त्मेतिभगवत्प्राणस्यवाय्वादिप्राणाशक्यकार्यकर्तृत्वेनपृथग्वर्त्मत्वमुक्तं । यद्वात्यागानिरोधाभ्यांसुखदुःखापादकास्मदादिश्वासतुल्योभयविधश्वासानिरोधोत्रक्रियते । एतदभिप्रायेणैवबृहद्भाष्यभावबोधेप्राकृताप्रकृतोभयश्वासानिषेधनैतच्छ्रुतिव्याख्यानंकृतं । ननुमध्यमाक्षरस्यापिअप्राकृतविग्रहवत्वेनप्राकृतस्थौल्यादिराहित्यसंभवात्कथमनेनविष्णुत्वनिश्चयइत्यतआह ॥ मध्यमाक्षरस्येति ॥ सापेक्षनिरपेक्षयोर्मध्येनिरपेक्षस्यैवग्राह्यत्वादितिभावः । अनेनप्राकृतस्थौल्यादिनिषेधेन ॥ विष्णावेवमुख्यतेति ॥ चतुर्विधनाशशून्यत्वेनाक्षरस्यप्रवृत्तिनिमित्तस्यतत्रैवपौष्कल्यादितिभावः ॥ ३ ॥

॥ **स्थानेति** ॥ अनेकप्रमेयप्रतिपादकमेकार्थेतात्पर्ययुक्तंस्थानं ॥ **कारणत्वसाम्येनेति** ॥ अत्रसदेवसौम्येद-
मग्रआसीदित्यत्रअग्रआसीदित्यनेनप्रतीतंमहदादिसकलकार्यप्रतिपूर्ववृत्तित्वरूपंकारणत्वमुभयत्रप्रसिद्धिद्योतकत्वेनतत
एवचसंदेहबीजत्वेनविवक्षितं । नतुतत्तेजोसृजतेत्यादिनोक्तं । तस्यप्रधानाभ्युपगमेभावितेक्षणादिनासहप्रतीतस्यसाधारण्यहे-
तुत्वाद्यनुपपत्तेः । पूर्वाधिकरणेउत्तराधिकरणेत्वीक्षणस्यप्रथमाप्रतीतेरस्त्यवकाशइत्युक्तेश्च टीकायांतत्तेजोसृजतेतिउ-
क्तिस्तुभाष्योक्तस्रष्टृत्वापेक्षत्वसमर्थनार्थं अतएवपूर्वंसदेवसौम्येतिवाक्यमुदाहृतं । तदैक्षतबहुस्यांप्रजायेयेतितत्तेजोसृजतं-
तिअस्यायमर्थः । तत्सदाख्यंब्रह्मऐक्षतविचारमकरोत् किमितिअहंबहुस्यांजगन्नियामकतयाबहुरूपंस्यामितितदर्थंप्रजाये-
यसृज्यंप्रजनयामीतितादित्थंविचिंत्य ॥ तेजः तेजोनामकरमासहितंतदभिमन्यमानंतेजोभूतंअसृजतेतितेजःप्रभृतीनामग्रे-
त्रिवृत्करणोक्त्यातेजःशब्दादेःअभिमन्यमानभूतपरत्वस्यापिसत्वेनोपादानस्यापिप्रतिपाद्यत्वाद्विकारिकारणमेवोक्तं ।
एकंस्वावयवगुणकर्मादिभेदरहितं अद्वितीयं समाभ्यधिकरहितं ॥ **सन्मूलाइति** ॥ हेसौम्यइमाःसर्वाःप्रजाःसत्परं-
ब्रह्ममूलकर्तृयासांताःसन्मूलाः । नकेवलमेतावत् । किंतुसत्अयनंआश्रयोयासांताः सदायतनाश्च नकेवलंसांसारिकाः
किंतुसत्प्रतिष्ठाःसत्प्रतिष्ठाप्रतिष्ठापकंयासांमुक्तप्रजानांताःसत्प्रतिष्ठाइत्यर्थः ॥ **सतेति** ॥ हेसौम्ययदाजीवः स्वपितिसु-
प्तोभवतितदासतापरमात्मनासंपन्नः संगतोभवतीत्यर्थः ॥ **ब्रह्मलक्षणश्रवणादिति** ॥ एतद्वाक्यस्यप्रधानपरत्वेब्रह्म-
लक्षणानामतिव्याप्तिप्रसंगेनसिद्धांतिनोनिष्टंस्यादितितत्समन्वयोवक्तव्यएवेतिभावः ॥ ॐ **ईक्षतिकर्मव्यपदेशा-
त्सः** ॐ ॥ सदेवेत्यादौश्रुतसच्छब्दवाच्यंमःत्विष्णुरेवेक्षतिरूपंचतत्कर्मचतस्यव्यपदेशात्तदैक्षतेतीक्षणाख्यव्यापारोक्तेरि-
त्यर्थः ॥ **एतेनेति** ॥ विष्णुव्यतिरिक्तचेतनस्य मुख्यतांद्रष्टृत्वाभावप्रतिपादकश्रुत्युदाहरणेनेत्यर्थः ॥ **सोमोवैरा-**

ज्ञेति ॥ यथासोमोवैराजागंधर्वेष्वासीत्संदेवाश्चऋषयश्चाभ्यध्यायंनित्यादौसोमलताभिमानिचेतनविवक्षयागंधर्वेष्वासीदितिव्यपदेशस्तथात्रापिप्रधानाभिमानिचेतनविवक्षयेक्षत्यादिव्यपदेशइत्यर्थः । गौणत्वव्यपदेशप्रयोजकमीक्षितृगतकारणत्वरूपगुणयोगंप्रधानेदर्शयति ॥ सत्वादिति ॥ सत्वगुणात्मकप्रधानादित्यर्थः ॥ स्वरूपबहुत्वेनेति ॥ स्वस्ययानिरूपाणितेषांबहुत्वेनेत्यर्थः । प्रकृतोपयोगायाह ॥ अविकुर्वाणइति ॥ ४ ॥ तस्यांतइति ॥ तत्रतच्छब्देनपद्मकोशप्रतीकाशंहृदयमितिप्रकृतंहृत्पद्मंपरामृश्यते ।तथाचतस्यहृत्पद्मस्यांतेअंतःसूक्ष्मंअल्पंसुषिरंआकाशंवर्ततेतस्मिन्नाकाशेभगवांस्तत्रचसर्वंजगत्प्रकर्षेणवर्ततइत्यर्थः ॥ अथयदिदमिति ॥ अथेत्यारंभे अस्मिन्ब्रह्मपुरेपुरुषदेहव्यापिपरब्रह्मशरीरेइदंबुद्धिसन्निहितंदहरंअल्पंपुंडरीकंपद्मरूपंवेश्मगृहंयदस्तिअस्मिन्नंतःपद्ममध्येदहराकाशः भूताकाशोस्तिततःकिमित्यतआह ॥ तस्मिन्निति ॥ तस्मिन्नाकाशेयदंतर्वर्ततेतदन्वेष्टव्यंमार्गणीयं । नघटादिवदस्यान्वेषणमप्रत्यक्षत्वादित्यतस्तदेवविज्ञेयमिति ॥ तद्वावेति ॥ वावेत्यवधारणे तदेवविजिज्ञासितव्यमितिगुरुणोक्तेसतीतिशेषः । तंगुरुंप्रतिशिष्याःपृच्छेयुः यदिदमित्याद्यनुवादः यद्विजिज्ञासितव्यंतदत्रहृत्पद्मगताकाशेकिंविद्यतेब्रह्मचनसंभवतितस्यव्याप्तत्वेनदहराकाशगतत्वायोगादितिभावः इतिब्रूयुरितिसंबंधः तदासगुरुर्ब्रूयात् । किमिति । अंतःशरीरांतर्हृदयेहृद्ययतइतिहृदयशब्दवाच्येहृत्पद्मगतेभूताकाशेआकाशः आकाशाख्यपरमात्मावर्तते । एषोंतस्थःयावानयंबहिर्विद्यमानः आकाशाख्यःपरमात्मातावान्वैगुणतःपरिमाणतश्चतावानेव अनेनतद्धृत्पद्मगतंब्रह्माण्वपिव्याप्तंलोकदृष्ट्याविरुद्धयुगपदणुत्वमहत्वादीनांतस्मिन्समावेशस्य प्रमितत्वादित्युक्तंभवति । अन्यपरित्यागेनतस्यैवजिज्ञास्यत्वप्रयोजकंतत्सामर्थ्यमाह । ॥ उभेत्यादिना ॥ अस्मिन्नंतरेचोभेमुक्तामुक्तेद्यावापृथिव्यौसमाहिते समाश्रिते उभयविधाग्निवायुसूर्यचंद्रविद्युन्-

क्षत्राणिचसमाहितानीत्यर्थः । किमाकाशेविद्यतइतिप्रश्नेआकाशगतस्यैववक्तव्यत्वेनयावानित्यादेरसंगताकाशपक्षेप्यन्व-
यानुपपत्तिरित्यतआह ॥ आकाशपक्षेत्विति ॥ हृत्पद्माकाशस्यद्यावापृथिव्याद्याश्रितत्वयोग्यत्वद्योतनाद्दहरोस्मि-
न्नंतरआकाशइतिप्रागुक्ताकाशमेवयावानित्यादिनाबाह्याकाशतुल्यतयाविशिष्यंत्यर्थः परिहारेकथ्यतइतिएतच्चतद्वाक्य-
व्याख्यावसरेएवव्यक्तं उत्तरत्रउत्तरखंडेपरंज्योतिरितियोधिकारीसंप्रसादः सम्यग्विष्णुप्रसादवान् एषःअस्माच्चरमशरी-
रात्समुत्थायनिर्गतः परंज्योतिः अतिप्रकाशमान्परमात्मानंउपसंपद्यस्वेनरूपेणाभिनिष्पद्यतेस्वस्वरूपाविर्भावंप्राप्नोतिहृत्प-
द्मस्थात्मनिरूपणावसरेकिंज्योतिःप्रसंगेनेत्यतमुक्तमेषइति यंप्राप्यस्वस्वरूप.।प्नोतिसएषप्रागुक्तपरमात्मेतिहोवाचेत्यर्थः ।
अत्रयःनिष्पद्यतेएषआत्मेत्यन्वयः पूर्वपक्षिणोभिमतः । नचेति किंतदत्रविद्यतइतिप्रश्नस्यजीवोविद्यतइतिपरिहारंविना-
यावान्वायमाकाशइत्यादेरसंगतत्वादितिभावः ॥ ॐ दहरउत्तरेभ्यः ॐ ॥ दहरेदहरंपुंडरिकाद्युक्तरूपद्मेस्थितं
ब्रह्मैवउत्तरेभ्यःयआत्मापहतपाप्मेत्याद्युत्तरवाक्योक्तापहतपाप्मत्वादितद्धर्मेभ्यइत्यर्थः । अपहतपाप्मादूरस्तपापः
अविजिघित्सःबुभुक्षापीडारहितः अतिशयेनप्राप्नोतीतीतिभ्रांतिंवारयितुंअतिक्रम्येति । कथंचित् अभिमानिरा अने-
ननित्यतीर्णेत्यादिना ॥ ॐ गतिशब्दाभ्यांतथाहिदृष्टंलिंगंच ॐ ॥ गतिःसुप्तप्राप्तिः अहरहर्गच्छंत्येब्रह्मलोक-
मितिसुप्तगम्यत्वलिंगब्रह्मशब्दाभ्यांचत्हृत्पद्मस्थंब्रह्मैव। किंचयथागतिशब्दौत्हृत्पद्मस्थगौतथालिंगंअरण्यारव्यासमुद्रा-
श्रयलोकवत्वरूपलिंगंचअरश्चवैण्यश्चअर्णवौब्रह्मलोकइतितन्निष्ठतयादृष्टंयतोतोपित्हृत्पद्मस्थंब्रह्मैवेत्यर्थः॥अहइति ॥
इमाःसर्वाःप्रजाःएतंब्रह्मलोकंविष्णुलोकंत्हृत्पद्मंतत्रत्यंब्रह्मेतियावत् अथवालोकंसर्वाधारत्वेनप्रकाशवत्वेनरशब्दाभि
धेयंब्रम्हविष्णुंअहरहःप्रतिदिनंप्राप्नुवंत्यःसत्यःएतंजानंतीत्यर्थः । त्हृत्पद्मस्थेब्रम्हशब्दंप्रकारद्वयेनघटयति ॥सद्मस्थे-

त्यादिना ॥ अरश्चवैण्यश्च अर्णवौब्रह्मलोकेतृतीयस्यामितोदिवीत्यस्यायमर्थः । इतोमेर्वपेक्षयातृतीयायांविद्यमानेब्रह्मलोकेश्वेतद्वीपे अरश्चण्यश्चेत्येतन्नामानौलक्ष्म्यात्मकौहवैप्रसिद्धार्णवौसमुद्रौममुद्रोपमेसरसीतिष्ठतइतिप्रमु प्रकरणात् इदंभाष्योदाहृतात्पूर्ववाक्यंद्रष्टव्यं यद्वात्रगहादिपुराणांतरेचतुर्दशाध्यायादौपूर्वत्रक्षीराब्धिमुक्तातन्मध्येलोकसनुपरितोवलयाकृतिरित्युक्त्वा अरण्याख्यसुधांबोधिरित्याद्युक्तेरितिभावः ॥ **नोच्यतइति** ॥ हृत्पद्मस्थस्योक्तताहृशलोकवत्वस्यपंचमखंडेअभिहितत्वेनव्यवधानादितिभावः । एवंहृत्पद्मस्थस्यब्रह्मत्वेहेत्वंतरोक्त्यर्थंसौत्रंलिंगपदत्वेवंपरंपरया अरश्चेतिभाष्यंव्याख्यायाधुनाब्रम्हलोकशब्दस्यप्रसिध्यनुसारेणसत्यलोकपरत्वशंकानिरासार्थंतदित्येवंव्याचष्टे ॥

॥ **अथवेति** ॥ **अरश्चेनीति** ॥ अरश्चेत्यादिना । अत्रएतंब्रह्मलोकमित्यत्र ॥ ॐ **धृतेश्चमहिम्नस्यास्मिन्नुपलब्धेः** ॐ ॥ धृतेर्धारणाद्यआत्मासेतुर्विधृतिरितिसर्वाधारत्वलिंगश्रवणाच्चहृत्पद्मस्थंब्रम्हैव एतल्लिंगहृत्पद्मस्थलंकृतइतिचेन्न ॥ अस्यहृत्पद्मस्थस्यमहिम्नोअपहतपाप्मत्वादेः सर्वेपाप्मानतोनिवर्तंतइत्यस्मिन्वाक्येउपलब्धेरित्यर्थः ॥

॥ **अथेति** ॥ यआत्माहृत्पद्मस्थत्वेनोक्तः सएषांलोकानामसंभेदायसंमेलनायाविदारणायवाधारणसमर्थाश्रयइत्यर्थः ॥ **इतिवक्तव्यइति** ॥ तथैवछंदोगपाठादितिभावः । **शाखांतराणां** । बृहदारण्यकादीनांसमानजात्यानांश्रुत्यंतराणांसंग्रहोपलक्षणार्थमिति । तत्वप्रदीपोक्तेःसंप्रदायविदइत्युक्तं ॥ **धारणसमर्थाश्रयइति** ॥ तेनननरुक्तिरितिभावः । अयंसर्वाधारतयोक्तः । यश्चैषःप्रसिद्धःसर्वेश्वरः । सर्वेश्वरत्वंनसादि किंतुयश्चैषभूतएवाधिपतिर्नायाधिपत्यमादिमदिति भूताधिपतिः यश्चैषभूतएवपालःपालकः ॥ **बहुवाक्यानीति** ॥ एतस्यवाक्षरस्यप्रशासनेगार्गिसूर्याचंद्रमसौ एतस्यवाक्षरस्यप्रशासनेगार्गिद्यावापृथिव्याविर्त्यादिबहुवाक्यानीत्यर्थः । आत्मेश्वरमितिचेतनस्यपृथगभिधाना-

दाह ॥ विश्वमचेतनमिति ॥ ॐ प्रसिद्धेश्च ॐ ॥ दहरंविपापमित्यादितैत्तरीयेविष्णोर्दहरत्पद्मस्थत्वप्रसिद्धेश्चतत्समाख्यानात्दहरेब्रह्मैवेत्यर्थः ॥ दहरमिति ॥ यत्पुंडरीकंअष्टदलकमलमस्तिकीदृशंदहरंअल्पंविपापंशुद्धंशरीरदोषैरपरामृष्टत्वात्परमात्मनोवेश्मभूतंगृहभूतंसर्वदातत्रोपलभ्यमानत्वात् । पुरमध्येशरीरमध्येसंस्थितं राज्ञःपुरमध्येप्रासादइवतत्राभिहृत्पुंडरीकेदहरंगगनमस्ति । तस्मिन्गगनेयदंतर्विशोकः शोकरहितंब्रह्मास्तितदुपासितव्यमित्यर्थः । अनेनतैत्तरीयवाक्योदाहरणेन दिव्येद्योतमानेव्योम्नितद्धृदयाकाशे संप्रतिष्ठितःसम्यग्व्यवस्थितः अंतर्देहस्य अनयोरात्मपुरुषपदोपेतत्वेनस्पष्टत्वात्स्वयमुदाहृतवान् । साम्येनोक्तत्वात् कथंब्रह्मेतिनिर्धारणमित्यतआह ॥ ब्रह्मपुरपदेनेति ॥ नवधेनास्यहन्यतइत्यस्यार्थोनष्टेपिदेहेननश्यतीति । एवंन्यायविवरणोक्तयोजनांप्रदर्श्यछांदोग्यभाष्योक्तयोजनांप्रदर्शयति ॥ अथवेति ॥ प्रयोगात् एतत्सत्यंब्रह्मपुरमित्यत्र ॥ तच्छब्देनेति ॥ सचासौशब्दश्चतच्छब्दः । ब्रम्हपुरशब्देनेत्यर्थः । प्रकृतत्वात् । ब्रह्मपुरेदहरंपुंडरीकमित्यत्र । अस्यएतत्सत्यमित्युक्तस्य । तत्रशरीरग्रहणेप्यत्रबाधकवशात्तत्परित्यागइतिभावः । तदभावात् व्याप्ताकाशस्यदहरस्थत्वाभावात् ॥ अयोगाच्चेति ॥ ईश्वरवदचिंत्यशक्त्यभावेनव्याप्ताकाशस्यदहराकाशेअवस्थानायोगाच्चेत्यर्थः । पृथिव्यभिमानिदेवानांविष्णुशेषत्वेनोपास्यत्वान्मुख्यतइत्युक्तं ॥

॥ ॐ इतरपरामर्शात्सइतिचेन्नासंभवात् ॐ ॥ परंज्योतिरुपसंपद्येतिप्रकृतस्येतरस्यजीवस्यएषआत्मेतिपरामर्शात्सजीवएवदहरस्थइतिचेन्न । तस्यस्वतोऽपहतपाप्मत्वासंभवादित्यर्थः ॥ भाविभावेनेति ॥ यूपंतक्षतीत्यादिवद्भविष्यदभिप्रायेणेत्यर्थः ॥ ॐ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॐ ॥ उत्तराज्जीवस्यसत्यकामत्वप्रतिपादकसतत्रपर्येतीत्युत्तरवाक्यात्सएवदहरस्थइतिचेन्न । आविर्भूतस्वरूपस्तुमुक्तएवतत्रोच्यतेयतइत्यर्थः ॥ सतत्रेति ॥ सःप्राप्तनि-

जानंदाविर्भावोजीवः । तत्रभगवल्लोकेतदनुग्रहेणैवजक्षन्स्वाभिलषितंभक्षयन्हसन्वासहमुक्तैः क्रीडन्खेलनंकुर्वन्अत्यंतरममाणःपरितोगच्छतीत्यर्थः । सतत्रपर्येतीत्यादिनाजीवस्यसत्यकामत्वसिद्धावपि अपहतपाप्मत्वादेःकथंजीव—निष्ठत्वमित्यतउक्तं ॥ ततएवेति ॥ सत्यकामत्वादेवेत्यर्थः । काम्यालाभएवशोकादिरितिभावः ॥ गुणप्रदातृनयेति ॥ अन्यथातत्प्राप्तिकथनेवैयर्थ्यमितिभावः ॥ ॐ अन्यार्थश्चपरामर्शः ॐ ॥ एषआत्मेतिपरामर्शः अन्यार्थश्च । परमात्मविषयएवनजीवविषयइत्यर्थः ॥ ॐ अल्पश्रुतेरितिचेत्तदुक्तं ॐ ॥ दहरंपुंडरीकामित्यादिनाल्पस्थानस्यश्रवणाद्दहरोजीवएवनब्रह्मेतिचेन्न । तत्अल्पस्थानस्थत्वमुक्तंनिचाय्यत्वादिनासमाहितंयतइत्यर्थः । तर्हिततएवैतत्परिहारादिदंव्यर्थमित्यतोअभ्यधिकाशंकांदर्शयति ॥ नव्योमवदिति ॥ यावानित्युक्तेश्चेति ॥ अंशस्याप्यमलंगतत्वोक्तेश्चेत्यर्थः सर्वज्यायस्त्वेनेति । सर्वापेक्षयापरिमाणतःश्रेष्ठत्वेनेत्यर्थः यस्मिन्विरुद्धगतयोप्यनिशंपतंति ब्रह्मादयोविविधशक्तयआनुपूर्व्येतिभागवतवाक्यस्यायमर्थः । यस्मिन्विद्यादयोविविधशक्तयोपतंतिवर्ततेनकेवलमेतावत्किंतुविरुद्धगतयोपिअन्यत्रविभिन्नाश्रयाअप्यणुमहत्वादयोवर्तंते किंकालभेदेनेत्यतआह ॥ अनिशमिति ॥ कुतःआनुपूर्व्याअणोरणीयानितिश्रुत्येत्यर्थः । आनुपूर्वीश्रुतिश्चैवत्रयीचाम्नायउच्यतइत्यभिधानात् । तथाचयुक्तिअविषयेविरोधोअकिंचित्करइतिभावः ॥ ९ ॥ आनुकूल्येनगृह्यमाणत्वेति ॥ आनुकूल्येन अनुकूलत्वेनअत्यंतमिष्टत्वेनगृह्यमाणंकथमनुभवामीत्यनेनप्रकारेणज्ञानार्थंसुखंतस्यभावस्तत्वं सुखादन्यस्यअत्यंतामिष्टत्वाभावात् । अतएवभाष्येअनिर्देश्यसुखमित्युक्तं । अतएवचंद्रिकाकारैःकेचित्वेतद्भाष्यानुसारात्न्यायाविवरणोक्तमानुकूल्येनगृह्यमाणत्वंसुखमेवेत्याहुरिति स्वोत्प्रेक्षितपक्षोदर्शितः प्रसिद्धंचानुकूलवेद्यंसुखमिति ॥ उभयत्रसुखशब्दवृत्त्येति ॥ योवैभूमात-

त्सुखमित्यादौभगवतिसुखशब्दवृत्तिर्ज्ञेया॥ यदेतादिति॥ तत् रूपंरूपंप्रतिरूपोबभूवेत्यत्रप्रकृतं एतत् एकंरूपंबहुधायःकरोती
त्यत्रचप्रकृतंभगवद्रूपंअनिर्देश्यं साकल्येनादृश्यंपरमंसुखमितिमन्यंतेज्ञानिनः। नुइदानींअहंतत्सुखंकथं केनप्रकारेणविजानी
यांतत्सुखंमत्प्रयत्नेनतथाभातिनवेत्यर्थः। नात्रानुकूल्येनगृह्यमाणपदंश्रूयतेत्यतआह॥आनुकूल्येनेति॥ कथंनुपुत्रंपश्येयंस
आगच्छतिनवेत्यत्रयथापुत्रज्ञानार्थंतदागमनप्रार्थनाधीःतथाकथंनुतद्विजानीयामित्यादिवाक्येज्ञानार्थमाविर्भावरूपभानप्रार्थ
नाधीरित्याभिप्रेत्यैवमुक्तमितिध्येयं॥ एकोवशीति॥यः एकः स्वगतभेदवर्जितःसर्वमस्यवशेवर्ततइतिवशी सर्वभूतानामंत
र्नियामकः एकंस्वात्मरूपंनियम्यानांबहुत्वात्तद्गतत्वेनबहुधाकरोतीतितमात्मानिदेहेजीवेवातिष्ठतीतिआत्मस्थंभगवंतंयेधी
राः पंडिताअनुपश्यंतितेषामेवशाश्वतंनित्यमभिव्यक्तंसुखंनेतरेषामित्यर्थः॥ नपुंसकत्सुखशब्देनेति ॥ नपुंसक
लिंगशब्देनसुखशब्देनचेत्यर्थः॥ ॐ अनुकृतेस्तस्यच ॐ॥ आनुकूल्येनगृह्यमाणंब्रह्मैवकुतःअनुकृतेः अनुभाना
त् तमेवभांतमनुभातिसर्वमितिसूर्यादीनांतदधीनभानश्रवणादितियावत्। किंचतस्यवाक्यप्रतीकग्रहणमेतत्। तस्यभा
सासर्वमिदंविभातीतिसर्वस्यतत्प्रकाश्यत्वोक्तेरित्यर्थः॥ परमंसुखमिति॥ तेषांसुखमितिवाक्यगतसुखश्रुतिव्यावर्त
येपरमशब्दः॥ चेतनश्चेतनानामिति॥ चेतनानांचेतनत्वप्रदःपरमचेतनइतिवार्थः। पूर्वोक्तयोजनायांसत्यामेत्र
योजनांतरमाह॥ यदिति॥गृण्हंति ज्ञानार्थंप्रार्थयंते। प्रतीतयोजनात्यागात्कथंचिदित्युक्तं॥ तमेवभांतमिति॥
सर्वंसूर्यादितेजोजातंभांतंप्रकाशमानंतंभगवंतंअनुसृत्यभातिप्रकाशते। सर्वमिदंजगत्तस्यपरमात्मनोभासाप्रकाशेनविभा
तिप्रकाश्यतइत्यर्थः। सर्वशब्दस्यतेजःपरत्वेनव्याख्यातत्वादनुशब्दसमभिव्याहृतस्यभातीत्यस्यभासतइत्यर्थत्वात्सर्वं
भातीत्यस्यनचतद्भासेत्यत्रानुवृत्त्यसंभवात्तच्छेषंपूरयति ॥ जगद्भातीतिशेषइति ॥ तदुक्तंचतुर्थतात्पर्ये

अर्द्धंतत्तेजोरश्मीत्यादिभाष्यमुक्त्वाऽऽद्वयगस्यविष्णुनिष्ठत्वप्रतिपादकत्वेनव्याचष्टे। रश्मीत्यादिना ॥ ॐ अपिस्मर्यते ॐ ॥ लिंगद्वयंस्मर्यतेऽपिस्मृतौप्रतिपाद्यतेपीत्यर्थः । तत्रतद्भगवद्रूपे सूर्योभातिभासयते चंद्रतारकमितिद्वैकवद्भावः । यदा प्रौढप्रकाशाःसूर्यादयोनभांतितदा अल्पप्रकाशोयमग्निः कुतोभातिनकुतोपीत्यर्थः । व्याख्यानांतरेस्मृतेःसमुच्चयासंभवादाह ॥ युक्तीति ॥ किंचेत्यादिनोक्तयुक्तीत्यर्थः नतत्रसूर्योभातीतितमेवभांतमित्यत्रतमितिपुल्लिंगांतशब्देनपरमात्मैवोच्यत इति तदेकार्थत्वलाभायनतत्रसूर्योभातीतिवाक्यस्थतत्रेत्यनेनपरमात्मोच्यतइत्यर्थः ॥ किमुभातिनभातिवेति ॥ ॥प्रकृतस्येति॥ तत्रोक्तदुर्विज्ञेयत्वस्यनतत्रसूर्योभातीत्यादिनाप्रत्यभिज्ञायमानत्वादितिभावः ॥ यस्यैवमिति ॥ तथा चनलिंगानुपपत्तिरितिभावः । दूरोक्तंब्रह्म ॥ अतिदूरोक्तिग्रहणइति ॥ तदेतदित्यस्मिन्वाक्येज्ञानिसुखापेक्षयाद रोक्तपरमात्मग्रहणेबिभ्यतस्तवततोप्युपरत्रविद्यमानेनतत्रेत्यस्मिन्वाक्येचेतनश्चेतनानामितिवाक्योक्तपरमात्मग्रहणेकथंनभी तिरित्यर्थः । नतत्रेत्यत्रविष्णुमात्रनिष्ठसूर्याद्यप्रकाश्यप्रकाशत्वलिंगबलाद्दरोक्तपरमात्मपरामर्शइतियदितर्हितदेतदितिवाक्ये पिविष्णुमात्रनिष्ठत्वेनसाधिताऽनिर्देश्यत्वलिंगबलात्परमात्मनएवपरामर्शइतिभावेनाह॥अनिर्देश्यत्वायोगाच्चेति॥६॥ ॥ अंगुष्ठमात्रइति ॥ हृदयावकाशापेक्षयांगुष्ठपरिमाणः । भूतभव्यस्य अतीतानागतस्य ईशानःप्रेरकः पुरुषः आत्मनिदेहमध्येहृद्गुहायांतिष्ठतीत्यर्थः ॥ ऊर्ध्वमिति ॥ योहरिःप्राणवायुंमुख्यप्राणस्वरूपंऊर्ध्वेभागंप्राप यति अपानंमुख्यवायुरूपंप्रत्यक् अधःअस्यतिक्षिपतितंहृदयमध्येआसीनंसंतंवामनंसौंदर्यनेतृत्वेनतच्छब्दवाच्यंभगवंतंसर्वे देवाःउपासतइत्यर्थः । नन्वत्रउपास्यत्वमेवोच्यतेनजिज्ञास्यत्वमित्यतआह ॥ जिज्ञासोपासनयोरिति ॥ श्रवणा- दीति ॥ नन्विदमयुक्तंयुक्तिभिरनुचिंतनरूपमननस्याविचाररूपत्वे औपदेशिकवाक्यार्थग्रहणरूपश्रवणस्याखंडस्मृतिरूप

निदिध्यासनस्यचविचाररूपत्वाभावात् । नचश्रवणमादिर्यस्यमननस्यतच्छ्रवणादीत्यतद्गुणसंविज्ञानबहुव्रीहिणामनन
स्यैवविचाररूपत्वमुक्तमितिवाच्यं । तथासतिश्रवणादित्रितयस्यापिविचारापरपर्यायोपासनत्वप्रतिपादकवाक्योदाहरणा
संगतिः । तच्चश्रवणमनननिदिध्यासनरूपाजिज्ञासैवेत्युक्तमितिवक्ष्यमाणविरोधाच्चेतिचेन्न । अत्रविचारपदेनाजहत्स्वार्थ
लक्षणयौपदेशिकवाक्यार्थग्रहणमखंडस्मृतिश्चगृह्यते । शक्यसंबंधश्चतज्जनकत्वात्स्मृतेश्चतज्जन्यत्वाज्जन्यजनकभावः
तथाचश्रवणमनननिदिध्यासनापरपर्यायौपदेशिकवाक्यार्थग्रहणमखंडस्मृतिरूपाजिज्ञासेतिलभ्यतइतिनकोपिदोषः । यदा
हुरनुव्याख्याने । अत्रशास्त्राभ्यासशब्देनोपदिष्टशास्त्रार्थज्ञानरूपश्रवणंयुक्तिभिस्तदनुचिंतनरूपमननंचोच्यते । ध्यानम-
खंडस्मृतिः । धारणाखंडस्मृतिः । यथाहुः खंडस्मृतिर्धारणाः स्यादखंडाध्यानमुच्यतइति । आदिपदेनप्राणायामादि
॥ प्रसिद्धावपीति ॥ ईश्वरःसर्वईशानइत्यादावित्यर्थः । श्रुतावन्वयाप्रतीतेर्यत्तच्छब्दाध्याहारेणतंदर्शयति ॥ उन्न-
यतीति ॥ व्यवस्थापकत्वेनेति ॥ नियोजकत्वेत्यर्थः ॥ यथेति ॥ यथालोकेसम्राट्सार्वभौमोधिकृतान्नियोगि
नःविनियुङ्क्तेव्यवस्थापयति । कथंत्वमेतान्पाटलीपुत्रादीन्ग्रामानधितिष्ठस्वतदाधिपत्येतिष्ठस्व । त्वमेतान्कौशांबिप्रभृतीन्
ग्रामानधितिष्ठस्वेति । एवमेवैषमुख्यप्राणःइतरानभिन्नानात्मजातत्वादुपचारेणात्मविभागान्प्राणान्वायून्पृथक्पृथगेवत्ह
दयगुहास्थानेषुसन्निधत्तेसंस्थापयति । स्वयंचतत्रतत्प्रवर्तकतयाप्राणादिरूपोवातिष्ठतइत्यर्थः ॥ अथेमामिति ॥ अथे
तरदेवनांश्रमप्राप्त्यनंतरंप्रजापतिर्योयंमध्यमप्राणस्तामिममेवनाम्नोब्रह्मणोवायुसमशक्तित्वात्तन्नापेत्यर्थः । प्राणशब्दवाच्ये
षुविष्णोरुत्तमत्वादन्येषामधमत्वाद्वायोर्मध्यमत्वान्मध्यमइत्युक्तं । अभ्युपगमात्सिद्धांतिभिः ॥ अबाधादिति ॥ अत्रवि
ष्णोर्जिज्ञास्यत्वनिषेधोपिअन्यत्रानिराकरणादितिभावः । नदेवामोक्षार्थंवायूपासांकुर्वीतयेनतस्यमोक्षदातृत्वंस्यात्किंत्वैश्वर्या

दिप्रयोजनांतरायेत्यतआह ॥ **नहीति** ॥ कुविदंगनमसायेष्टधासःपुरादेवाअनवद्यासआसन् । तेवायवेमनवेबा
धितायावासयन्नुषसंसूर्येणेतिमंत्रंव्याचष्टे ॥ **अंगेत्यादिना** ॥ कुविदित्यस्यप्रतिपदंकाचिदिति रहस्यस्छानइतितात्पर्यक
थनं बाधितायेत्यस्यसंसारइत्यादि उषसमित्यस्यबुद्धिमिति ॥ ॐ **शब्दादेवप्रमितः** ॐ ॥ ईशानोविष्णुरेवप्रमितः
मध्येवामनमितिवामनशब्दादित्यर्थः ॥ **महायोगरूढीति** ॥ एषउएववामनिरेषएवहिभामनिरेषहिसर्वाणिवामानिनयती
तिवामनिवामनशब्दयोरेकार्थत्वेनमहायोगस्यसवामनःसभामनः उपेंद्रोवामनःप्रांशुरितिरूढेश्चसत्वादितिभावः । अनेनश्रु
तेःप्राबल्यनिरूपणेन । निर्देशःवस्तुप्रतिपादकशब्दः । यथावामनमित्यादि अत्रकेवलयौगिकशब्दव्यावृत्यर्थंमात्रपदं । तेनयो
गरूढानांवामनादिशब्दानांनश्रुतित्वहानिरितिध्येयं ॥ **असाधारणधर्मइति** ॥ यथामध्यमत्वादि ॥ **निराकांक्षपदानी
ति** ॥ पर्यवसिताकांक्षापदानीत्यर्थः । यथासर्वाणिहवाइमानिभूतानिआकाशादेवसमुत्पद्यंतइति ॥ **एकप्रमेयेति** ॥
यथाअग्निरूपैकार्थप्रतिपादकंमूर्धानंदिवइत्यादि । अत्रस्थानेतिव्याप्तिवारणायैकप्रमेयप्रतिपादकेति । वाक्येतिव्याप्तिवा
रणायानेकेति । अनेकाक्षरपदादावतिव्याप्तिवारणायवाक्येत्युक्तं ॥ **अनेकप्रमेयेति** ॥ यथाविष्णौतात्पर्योपेताने
कार्थप्रतिपादकषट्प्रश्नोपनिषदादि । अत्रप्रकरणव्यावृत्यर्थमनेकप्रमेयप्रतिपादकमिति । विरुद्धार्थयोःशास्त्रयोर्मिलितयोः
स्थानत्वव्यावृत्यर्थंएकार्थतात्पर्ययुक्तमित्युक्तं ॥ **समानोक्तिरिति** ॥ निर्णीतस्थलइत्युपस्कर्तव्यं । तेनाविप्रतिपन्नप्रकर
णादिगतसमानोक्तेःसमाख्यात्वव्यवच्छेदः । यथासवाएषइत्यादिनोक्तान्नमयादिपंचकस्यान्नमयप्राणमयमनोमयविज्ञानम
यानंदमयामेशुध्यंतामित्यत्रोक्तिः । इदानींप्राबल्यादिनिरूपयति । तत्रेत्यादिना ॥ **साक्षादर्थधीजनकत्वादिति** ॥
व्याप्त्यादिप्रतिपादनद्वारमंतरेणागमतयाऽविप्रतिपन्नार्थधीजनकत्वादित्यर्थः । यथावामनश्रुतिश्रवणमात्रेणेशानस्याविष्णुत्व

प्रतिपत्तिः ॥अनुमापकतयेति॥ व्याप्त्यादिप्रतिपत्तिद्वारेत्यर्थः। यथामध्यमपदस्यमध्यमत्वरूपव्याप्यप्रतिपादनद्वारेशान
स्यवायुत्वनिश्चायकत्वं ॥ तदानंतर्यं ॥ ततोदौर्बल्यं यथात्रवामनश्रुतितोमध्यमत्वादिलिंगानांदौर्बल्यं ॥ अनेकार्थक
थनद्वारेति ॥ यथासर्वाणिहवेत्यस्यभूताद्यनेकार्थप्रतिपादनद्वाराभूतकारणत्वरूपव्याप्यप्रतिपादकत्वेनाकाशपदोक्तस्यभू
ताकाशानुमापकत्वं ॥ ततोपिदौर्बल्यमिति ॥ यथापरोवरीयस्त्वानंतत्वादिलिंगापेक्षयासर्वाणिहवेतिवाक्यस्यदौर्ब
ल्यं । बह्वर्थपरत्वेनेति ॥ यथामूर्धानंदिवइत्यस्यदेवमुखत्वयज्ञनाभित्वाद्यग्निज्ञापकबह्वर्थप्रतिपादकत्वेनज्योतिर्द्दयआ
ह्वितितिज्योतिःशब्दस्याग्नित्वानुमापकत्वं॥ तदवमतेति ॥ यथोदात्द्दतप्रकरणस्यकर्णादिविदूरत्वालिंगप्रतिपादकविमेक
र्णाइतिवाक्यादौर्बल्यं ॥ अतिबह्वर्थकथनेनाभिप्रायइति ॥ यथाषट्प्रश्नोपनिषद्रूपस्थानस्यवह्वर्थानेकप्रकर्णार्थपूर्वक
विष्णुपरस्थानगतैषःप्राणइतिवाक्यस्यतत्परत्वेनतद्वाक्यस्थप्राणशब्दस्यापिविष्णुपरत्वानुमापकत्वं ॥ ततोपिदौर्बल्य
मिति ॥ यथास्यैवस्थानस्यभगवन्कुतएषप्राणोजायतइतिखंडरूपान्मुख्यप्राणधर्मप्रतिपादकत्वेनमुख्यप्राणप्रकरणाद्दौ
र्बल्यं॥ साद्दश्यमात्रेणेति । यथान्नमयप्राणमयइतिकोशसमाख्यायास्तत्सद्दशत्वादिदंतदर्थकसाद्दश्यमित्येवंरूपसाद्दश्य
मात्रेणैतमन्नमयमात्मानमुपसंक्रामतीत्याद्यन्नमयादिशब्दोक्तस्यकोशत्वानुमापकत्वं ॥ ततोपिदौर्बल्यमिति ॥ यथा
ब्रह्मविदाप्नोतिपरंभृगुर्वैवारुणिरितिविष्णुधर्मप्रतिपादकतयाविष्णुस्थानादुदात्द्दतसमाख्यायाद्दौर्बल्यं । नन्वेवंलिंगादेःश्रु
त्यादेःसकाशाद्दौर्बल्येकथमाकाशस्तल्लिंगादित्यादौलिंगादिनाश्रुत्यादेर्बाधइत्यतआह॥ अत्रापीति॥पूर्ववदिति॥समन्व
याधिकरणोक्तोपक्रमादिवत्यर्थः । इत्यादीत्यादिपदेननिरवकाशादेकस्माद्बहुत्वेनप्रबलस्यसावकाशस्यदौर्बल्यमित्यस्यग्रह
णं । निरवकाशत्वादिरहितश्रुत्यादावेव जातिकृतप्राबल्यादिकंप्रदर्शितामितिभावः। समवाये संमेलने । ननुश्रुतिलिंगोतिवा

क्यानुसारेणसमाख्यायाःवाक्यप्रकरणाभ्यांप्राबल्यंकिंनाश्रितमित्यतआह ॥ **नचेति** ॥ उदाहृतवाक्यानुक्तंस्थानंकिमर्थमु
च्यतइतिशंकापरिहारसूचयन्नेवस्वोक्तक्रमसाधकजैमिनिसूत्रानुव्याख्यानेक्रमेणोदाहरति ॥ **श्रुतिरित्यादिना** ॥ **विरुद्धानां**
श्रुत्यादीनांसमवायेसतिपरदौर्बल्यं । परेषामुत्तरोक्तानांदौर्बल्यं । कुतःतेषांतत्रश्रुतेःसाक्षादित्यादिनोक्तरीत्याविलंबेनार्थ
साधकत्वादितिजैमिनिसूत्रार्थःननुश्रुत्यादेःकिंश्रुत्यादित्वेनसाक्षादेवार्थनिश्चायकत्वमुतोपक्रमादिनिश्चायकत्वेनपरंपरयावा
नाद्यःक्वचित्परंपरयापिहेतुत्वात् ।नाद्वितीयःक्वाचित्साक्षादपिहेतुत्वादिति अतोत्रनियमोनविवक्षितइत्याशयेनाह ॥ **श्रुतिलिंग-**
**वाक्यानामित्यादिनाइत्यादिवादित्यंतेन** ॥ यथात्मानंवैश्वानरमित्यत्रविप्रतिपन्नवैश्वानरगतात्मश्रुतेर्विष्णुत्वनिश्चा
यकत्वं । यथाचाकाशःपरायणंसएषपरोवरीयानित्यत्रविमतिपन्नाकाशगतपरोवरीयस्त्वलिंगस्यविष्णुत्वनिश्चायकत्वं । यथा
चविमेकर्णापतयतोविचक्षुर्वीदंज्योतिरितिविप्रतिपन्नज्योतिर्निष्टोदाहृतवाक्यस्यविष्णुत्वनिश्चायकत्वं ॥ **उपक्रमोपसंहा**
**रयोःश्रुतत्वइति** ॥यथाकोनआत्मेत्युपक्रमेश्रुतात्मश्रुतेरुपक्रमस्यविष्णुपरत्वनिश्चायकतयावैश्वानरमुपास्तइत्युक्तवैश्वानर
स्यविष्णुत्वनिश्चायकत्वं । यथाचपंचम्यामाहुतावापइत्युपसंहारेश्रुताप्श्रुतेरुपसंहारस्यभूतपरत्वनिश्चायकतयाश्रद्धांजुह्वती-
त्यत्रश्रद्धाशब्दस्यभूतपरत्वनिश्चायकत्वं । यथाचयएषतपतीत्युपक्रमेश्रुतसूर्यस्थत्वलिंगस्योपक्रमस्यविष्णुपरत्वनिश्चायक
तयाआत्मावाइदमेकएवेत्युक्तात्मनोविष्णुत्वनिश्चायकत्वं ।यथाचसयोतोश्रुतइत्युपसंहारेश्रुताश्रुतत्वलिंगस्योपसंहारस्यविष्णु
परत्वनिश्चायकतयायएषोंतरक्षिणिपुरुषइत्युक्तचक्षुरंतस्थस्यविष्णुत्वनिश्चायकत्वं । यथाचकंब्रह्मखंब्रह्मेत्युपक्रमेश्रुतवाक्य
स्योपक्रमस्यविष्णुपरत्वनिश्चायकत्वेनांतरक्षिणीत्युक्तस्यविष्णुत्वनिश्चायकत्वं । यथाचतावाएताःसर्वाऋचइत्युपसंहारेश्रु
तवाक्यस्योपसंहारस्यविष्णुपरत्वनिश्चायकतयाचक्षुर्मनोवाक्प्राणइत्युक्तप्राणस्यविष्णुत्वनिश्चायकत्वं ॥ **अन्यत्रेति** ॥

विप्रतिपन्नार्थप्रतिपादक वाक्योपक्रमोपसंहारेभ्योन्यत्रेत्यर्थः । यथाब्रह्मेमंपुरुषमितिप्रकरणेश्रुतब्रह्मश्रुतेःप्रकरणस्यवैष्ण
वत्वनिश्चायकतयामनोवाक्प्राणइत्युक्तप्राणस्यविष्णुत्वनिश्चायकत्वं । यथाचापहतपाप्मेतिप्रकरणेश्रुतापहतपाप्मत्वलिंग
स्यप्रकरणस्यवैष्णवत्वनिश्चायकतया दहरोस्मिन्नंतरआकाशइत्युक्ताकाशस्याविष्णुत्वानिश्चायकत्वं यथाचश्रीश्चतेलक्ष्मीश्चप
त्न्याविंतिप्रकरणेश्रुतस्यास्यवाक्यस्यप्रकरणस्यवैष्णवत्वनिश्चायकतयातद्वैत्वंप्राणइत्युक्तप्राणस्यविष्णुत्वनिश्चायकत्वमिति
यद्यपिश्रुत्यादिनाअर्थनिश्चयदशायामुपक्रमोपसंहारश्रुतश्रुतत्यादेरपिप्रकरणनिश्चायकत्वंतथापितत्रसाक्षादन्यत्रपरंपरयेति
भेदः।प्रसंगात्पूर्वमनुक्तत्वेनावश्यकत्वाच्चाह ॥ उपक्रमोपसंहारावपीति ॥ उपक्रमोपसंहारावपिउपक्रमोपसंहाराभ्याम
न्यत्रश्रुतश्रुत्यादिनार्थनिश्चयेसतितस्मिन्नेवार्थेतात्पर्यज्ञापकावित्यर्थः । यथासर्ववाअत्तीतितददितेरित्युक्तात्तुःसर्वात्तृत्वलिंगे
नविष्णुत्वनिश्चयेसतिनैवेहकिंचनाग्रआसीदित्युपक्रमस्यअत्तुर्विष्णुत्वनिश्चायकत्वंयथाचसर्वेषुभूतेष्वेतमेवब्रह्मेत्याचक्षतइ-
त्युक्तसर्वगतस्यब्रह्मश्रुत्याविष्णुत्वनिश्चयेसतिसयोतोश्रुतइत्युपसंहारस्यसर्वतगस्याविष्णुत्वनिश्चायकत्वं॥अन्यथाप्रकरण
त्ति॥यथाद्वेविद्येवेदितव्यइतिविष्णूपक्रमस्यान्यमीशामित्यस्यविष्णुप्रकरणत्वनिश्चायकत्वं।यथाचतद्विष्णोःपरमंपदमितिवि
ष्णूपसंहारस्यअनाद्यनंतंमहतःपरंध्रुवमित्यादेर्विष्णुप्रकरणत्वनिश्चायकत्वं ॥ समाख्यापीति॥यथाचक्षोःसूर्योअजायत
तिपुरुषसुक्तोक्तिसमाख्यानात्साक्षाद्विप्रतिपन्नवैश्वानरनिष्ठा चक्षुर्विश्वरूपइत्याद्युक्तिर्वैश्वानरस्यविष्णुत्वानिश्चायका ॥ अ
न्यथेति ॥ यथापरोदिवापरएनापृथिव्यैतावतीमहिनासंबभूवेत्यंभ्रणीसूक्तोक्तिसमानाअजस्यनाभाविताविप्रतिपन्नार्थे
साक्षाद्श्रुतापरोदिवापरएनापृथिव्यापरोदेवेभिरित्युक्तिः । ननुपरोवरीयानुद्गीथोनंतइत्यादिलिंगस्यश्रीश्चतेलक्ष्मीश्चप
त्न्याविंतिवाक्यस्यचाविप्रतिपन्नार्थव्याप्यप्रतिपादकत्वाविशेषात्कथंलिंगवाक्यभावइत्यतआह ॥ लिंगवाक्ययोरि

ति ॥ अनेकार्थप्रतिपादनमंतराव्याप्यप्रतिपादकत्वंलिंगस्यसाक्षात्वं । तद्वारातत्प्रतिपादकत्वंवाक्यस्यसाक्षात्वं । यथाचलक्षणवाक्येव्याप्यार्थकपदंलिंगं । तदर्थकाणिलिंगानि निराकांक्षपदानिवाक्यमितिविवक्षितमितिभावः । त देवोदाहरणमुखेनक्रमेणदर्शयति ॥ गोत्रभिदमिति ॥ पर्वतभेत्तारमित्यर्थः । इंद्रलिंगमिदं ॥ प्रवक्षणाइति ॥ वज्री पर्वतानांप्रवक्षणाः पक्षान् अभिनत् बिभेदेत्यर्थः। इदमिंद्रपरवाक्यं ॥ विष्णावप्यवकाशत्वादिति ॥ प्राणनि यामकत्वस्यांतर्यामिनयन्यायेनसर्वनियामकेहरौयुक्तत्वात् । मध्यमइतिमध्यमशब्दस्योर्ध्वंप्रत्यक्शब्दसहोक्तस्यमध्यदेश वाचित्वेनमध्यमोस्त्यभावेनमध्यदेशावस्थानस्यविष्णावपिसंभवात् । सर्वदेवोपास्यत्वस्यापिसर्वजिज्ञासापरपर्यायस्यहरौ दहरनयेसिद्धत्वादितिभावः। श्रुत्यंतरेण सम्राडित्यादिना । प्राणशब्दोपेतयोःसम्राडथेतिश्रुत्योर्विष्णुपरत्वेपिवायुश ब्दोपेतक्वविदंगेतिश्रुतेर्नविष्णुपरत्वसिद्धिरित्यतआह ॥ वायुत्वमिति ॥ प्राणपदेनेतिशेषः । प्रत्यापादि प्रतिपा दितं ॥ ॐ हृद्यपेक्षयातुमनुष्याधिकारित्वात् ॐ ॥ हृदयस्थाकाशापेक्षयैवब्रह्मांगुष्ठपरिमितमुच्यते नतुस्वतः । पश्वादीनामंगुष्ठाभावात्कथंतत्हृदयगतस्यांगुष्ठपरिमितत्वमित्यतआह ॥ मनुष्याधिकारित्वादिति ॥ पश्वादीनामंगुष्ठाभा वेपिअंगुष्ठमात्रइतिविद्यायांमनुष्याधिकारत्वादंगुष्ठमात्रइतियुक्तमित्यर्थः। पूर्वंमूर्तिविशेषस्यव्यक्त्यात्मनोंगुष्ठमात्रत्वमभ्युपेत्यां गुष्ठमात्रत्वंमुख्यइत्युक्तं। इदानीमंगुष्ठमात्रोक्तिरौपचारिकीत्याह॥ भिन्नेष्वपीति॥ सायंगोष्ठेसर्वएकीभवंतीत्यादावित्यर्थः। नचैवंश्रुतेरुपचरितार्थवर्णनेवेदवाक्यस्यवाचनिकार्थविनानैवान्योयुज्यतइतिकर्मनिर्णयवाक्याविरोधइतिवाच्यं । स्वातंत्र्ये चविशिष्टत्वेस्थानमत्यैक्ययोरपिसादृश्येचैक्यवाक्सम्यक्सावकाशायथेष्टतइत्यनुव्याख्यानेभगवत्पादैरेवश्रुतेर्गौणार्थत्वोक्तेः कर्मनिर्णयवाक्यंतुतट्टीकायामेवसम्यग्व्याख्यातमितिभावः। कथनवैय्यर्थ्यादिति। अंगुष्ठव्यक्तिविशेषनिर्धारणंविनाय

त्किंचिदंगुष्ठमात्रत्वेनोपासनायाः असंभवात्कथनंव्यर्थमित्यर्थः ॥ **असंभवाच्चेति** ॥ पिपीलिकात्हृदयस्थैंगुष्ठमात्रत्वसा
मान्यस्यैवासंभवादित्यर्थः । पूर्वसौत्रस्तुशब्दोत्हृद्यवकाशापेक्षयेतिभाष्यानुसारादेवार्थोव्याख्यातः । इदानीमंगुष्ठाभावे
पीतिभाष्यानुसाराद्ध्यर्थतयापिव्याचष्टे ॥ **तुशब्दइति** ॥ ७ ॥ **अधिकारेति** ॥ योग्यतेत्यर्थः ॥ **प्रासंगिकत्वा
दिति** ॥ मनुष्याधिकारत्वादित्यनेनदेवाद्यधिकारादेःस्मारितत्वादितिभावः ॥ **नाध्यायसंगतिरिति** ॥ मुख्यतोव्युत्पाद्ये
धिकारेनसाक्षादध्यायसंगतिर्गवेषणीयेत्यर्थः । प्रासंगिकसंगतेस्त्वत्रापिसत्वात्फलितेदेवतोपास्यत्वलिंगसमन्वयेसाक्षात्सं
गतेरपिसत्वाच्च । अतएवसंक्षेपेदेवेवेदेज्ञेयइत्युक्तं । टीकायामपिनतदुपास्यत्वलिंगंविष्णोरितिपूर्वपक्षोपसंहारः । तदु
पास्यत्वंहरेरित्याधिकरणोपसंहाराच्च । प्राक्प्रायःशब्देनव्यावर्तनंतुमुख्यतःसाक्षात्संगत्यभावेनेतिध्येयं । ननुस्मृतस्योपे
क्षानर्हत्वंप्रसंगः नस्मृतत्वमात्रं तत्कथमस्योपेक्षानर्हत्वमित्यतस्तत्प्रदर्शनपरभाष्यमवतार्यव्याचष्टे ॥ **श्रुत्यादिसंगतीति**॥
॥ **असाम्यादिति** ॥ श्रुतेरपौरुषेयत्वेनप्राबल्यादितिभावः । अर्थीतिप्रयोजनार्थी ततोसाधनकरणसमर्थः । साधनेति
कर्तव्यताज्ञान्यधिकारीभवतीतिन्यायार्थः ॥ **कर्मादिविरोधेति** ॥ तथात्वेप्रागूर्ध्वदेवताभावेनतदुद्देशेनकृतकर्मणोवै
य्यर्थ्याख्यविरोधेनेत्यर्थः । अमराणामित्युक्त्यातेषांमुक्त्यंगीकारेमरणवर्जितत्वप्रसिद्धिविरोधंसूचयति । संदेहबीजं
निषेधकोट्युपस्थापकं ॥ ॐ **तदुपर्यपिबादरायणःसंभवात्** ॐ ॥ तेषांप्रकृतानांमनुष्याणामुपरिविद्याकर्मभ्यांदे
वत्वप्राप्त्यनंतरमपिदेवानामितियावत् अधिकारोस्ति । कुतः विशिष्टबुध्यादिसंभवादितिबादरायणआहेत्यर्थः । विघट
नप्रकारंव्यंजयन्नाह ॥ **मनुष्येति** ॥ विशिष्टबुध्यादीति वाक्यार्थज्ञानोपयोगिशक्तिगृहादीत्यर्थः ॥ **योग्येति** ॥
देवत्वयोग्यानांमनुष्येपुसाधनसंपत्यर्थमवतारादित्यर्थः । स्वोक्तिमात्रेणेतरसूत्रेष्विवस्वमतस्यज्ञातुंशक्यत्वाद्बादरायणग्रह

गमनर्थकमित्यतआह ॥ विप्रतिपत्तीति ॥ मध्वादिष्वसंभवादितिवक्ष्यमाणत्वादितिभावः ॥ विशिष्टबुध्यादि-
राहित्येति ॥ तथाचानुमानस्यसोपाधिकत्वमितिभावः । उपाधेःसाक्षाद्दोषत्वाभावादाह ॥ तथाचेति ॥ तथाचदेवाः
वेदाधिकारिणःनिषेधराहित्येसतिविशिष्टबुध्यादिमत्वाद्योग्यत्रैवर्णिकवदितिप्रतिपक्षानुमानंभाष्यसूचितमितिभावः ॥ व्या-
प्तिविधुरइति ॥ तिर्यक्षुसाध्याव्यापकइत्यर्थः ॥ व्यभिचारपरिहारइति ॥ अधिकाराभावरूपसाध्यवतिसच्छूद्रे
विशेषणाभावप्रत्युक्तस्यानिषेधराहित्येसतिविशिष्टबुध्यादिराहित्यरूपोपाधेरपिसत्वात्साध्याव्यापकत्वपरिहारइत्यर्थः । उ-
त्तराधिकरणन्यायेनसच्छूद्रस्याधिकारनिषेधादितिभावः ॥ वेदाविद्याधिकारितयेतिशेषइति ॥ खांडववनस्थानां
जरितारिसारिसृक्कस्तंबमित्रद्रोणाख्यानांचतुर्णांपक्षिणांसमातृकाणांकृत्स्नवनंपरितोदहतावह्निनास्वदाहप्रसक्तौभ्रातृभिः प्रा
र्थितोजरितारिः अयमग्नेजरितेत्यादिमंत्रैःस्तुत्वाप्रीतेनाग्निनातान्मोचयामासेति । एवमुक्तोभ्रातृभिस्तुजरितारिर्विभावसुंतु
ष्टाव प्रांजलिर्भूत्वायत्तच्छृणुनराधिपेत्यादिनाभारतेप्रसिद्धत्वादितिभावः । अनेनेति ॥ अमनुष्याणांजरितर्यादीनांवेदा
धिकारप्रदर्शनेनेत्यर्थः ॥ स्वप्रयुक्तेति ॥ प्रतिपक्षानुमानेत्यर्थः । अपोढःनिराकृतःसाध्याव्यापकत्वादितिभावः
॥ ॐ विरोधःकर्मणीतिचेन्नानेकप्रतिपत्तेर्दर्शनात् ॐ ॥ देवपदस्यसादित्वांगीकारेकर्मणीकर्मविषयेविरोधःउक्तरी
त्याव्यर्थतालक्षणःस्यादितिचेन्न । अनेकेषांयोग्यमनुष्याणांप्रतिपत्तेःपूर्वदेवतापदप्राप्तेःयज्ञेनेतिश्रुत्युक्तत्वादित्यर्थः ॥ उद्दे
श्येति ॥ यदुद्देश्यकहविस्त्यागःतदभावेनेत्यर्थः । यज्ञेनयज्ञमयजंतदेवास्तानिधर्माणिप्रथमान्यासन्नितिप्रथमार्धेनसह तेहनाक
मितिश्रुतिंदेवतापदस्यसादित्वपरतयाव्याचष्टे ॥ देवाःदेवत्वयोग्याइति ॥ पदप्राप्त्यनंतरमेवदेवसंज्ञेतिभावः । प्रथमा
निधर्माणीत्यस्यार्थोमुख्यलोकधारकाइति कंसुखंतदन्यदकंतन्नभवतीतिनाकइतिनाकशब्दार्थमाह ॥ पूर्णसुखेति ॥ साध्याः

देवाश्चेत्यर्थः ॥ ॐ शब्दइतिचेन्नातत्प्रभवात्प्रत्यक्षानुमानाभ्यां ॐ ॥ देवतापदस्यसादिविनाशित्वेशब्दोनि
त्यवेदेअप्रामाण्याख्यविरोधःस्यात्पश्चाद्देवाभावेनवाच्यहीनस्यप्रामाण्यायोगादितिचेन्न । अतःधातायतेतिशब्दान्महतां
प्रत्यक्षात् अन्येषामुपरितनकालेदेवान्कालत्वादित्यनुमानाच्चप्रभवाद्देवानांप्रभवनियमावगमादित्यर्थः । तथाचदेवाभाव
कालेवाच्यहीनत्वमेवेतिभावः ॥ तदेवेति ॥ निरभिधेयत्वादिदोषशून्यवाक्यस्यैवाक्रमत्वादितिभावः ॥ वाचेति ॥
हविरूप तस्मैभगवते नित्ययावाचाशोभनास्तुतिंप्रेरयेत्यर्थः ॥ उपचारेति ॥ नित्यवद्बहुकालवृत्तित्वादितिभावः
॥ प्रामाण्याभावेति ॥ अनित्यत्वेपुरुषजन्यत्वेनविप्रलंभादिदोषमूलत्वसंभवादितिभावः । तार्किकःप्रत्यवतिष्ठते
॥ आप्तमूलत्वेनेति ॥ विवक्षितार्थतत्त्वज्ञानाविप्रलिप्साकरणपाटवविवक्षितार्थरूपाप्तमूलत्वेनेत्यर्थः । तथाचनदोषशंके
तिभावः ॥ सार्वज्ञ्यादावेति ॥ विवक्षितार्थतत्त्वज्ञानादावित्यर्थः । वेदस्यसर्वार्थप्रतिपादकत्वात्सार्वज्ञ्योक्तिः । विवाद
पदंधर्मादि अतीन्द्रियापरोक्षिणः सार्वज्ञ्यंकैमुत्यसिद्धमितिभावः । आभासतुल्यत्वमाह ॥ प्रमेयत्वेनेति ॥ विवादपदंअ
स्मदादिप्रत्यक्षंप्रमेयत्वाद्घटवदितिविप्रतिपन्नास्मदादिप्रत्यक्षत्वसाधनापातादित्यर्थः । हेतोरनिर्वचनादसिद्धिश्चेत्यतआह
॥ किंचेत्यादिना ॥ नतेनसार्वज्ञ्यसिद्धिरित्यंतेन ॥ केवलान्वयीति ॥ व्यावर्तकधर्मस्यैवजातित्वादितिभावः ॥ अस्व
तंत्रत्वादिति ॥ द्रव्यादिसापेक्षप्रतीतित्वादितिभावः ॥ गुणादावपिवृत्तेरिति ॥ गुणकर्मणोश्चद्रव्यमात्रवृत्ति
त्वादितिभावः ॥ अनित्येपीति ॥ विशेषस्ययावन्नित्यद्रव्यमात्रवृत्तित्वादितिभावः । अप्रतियोगिसापेक्षत्वादितिछेदः
ततःप्रमेयभावात् ॥ भावभविन्नोरिति ॥ धर्मधर्मिणोरित्यर्थः ॥ उक्तानतिवृत्तेरिति ॥ अतिरिक्तत्वेकचिदं
तर्भावस्यावश्यकत्वेनतस्यचनतावद्द्रव्यमित्यादिनोक्तदोषमतिक्रम्यावृत्तेरित्यर्थः ॥ एवमिति ॥ यदिप्रमेयस्यभावःप्रमेयत्वं

नततोति रिक्तं तर्हिपरस्यभावःपरत्वं अपरस्यभावःअपरत्वं गुरोर्भावःगुरुत्वं द्रवतोभावःद्रवत्वं पृथग्वृत्तेर्भावः पृथक्त्वंनततो त्तिरिक्तामितिअंगीकारापातेनतेषांगुणानांतिलोदकांजलिदानप्रसंगादित्यर्थः ॥ प्रमेति ॥ प्रमाविषयत्वरूपप्रमेयत्वेत्रया णांभासमानत्वादितिभावः ॥अन्येनेति ॥ तथाचायुतासिद्धत्वाभावान्नसमवायः । प्रमायागुणत्वादेवनसंयोगइत्यर्थः ॥उक्तदोषेति॥ नतावद्द्रव्यमित्याद्युक्तदोषाणां लंघनेअतिक्रमणे अजंघालुत्वाज्जंघाशून्यत्वादित्यर्थः । जंघालोतिजवस्तुल्य इत्यमरोक्तेः । अन्यसमये तार्किकसिद्धांते ॥ धर्मांतरेपीति ॥ ज्ञेयत्वाभिधेयत्वादावपीत्यर्थः । तथाचतस्यापिनोक्तसा ध्येहेतुत्वंसंभवतीतिभावः । विप्रतिपन्नं भूभूधरादिकं । सार्वज्ञसिद्धिरिति उपादानगोचरापरोक्षज्ञानवत्वएवकर्तृत्वादि तिभावः॥शरीरजन्यत्वेति॥ईशस्यतन्मतेअशरीरत्वादितिभावः॥सत्प्रतिपक्षत्वाच्चेति॥ नन्वत्रोपाधेःसत्प्रतिपक्षोन्ना यकत्वेनैवदूषकत्वमुतप्रकारांतरेणापि नाद्यः चशब्दानुपपत्तेः ॥ उपाधावित्यादि ॥ पृथग्विशेषणकृत्यकथनानुपपत्ते श्च । नांत्यः सएवोपाधिदोषोपीति प्रमाणलक्षणविरोधात् । तत्वप्रतिज्ञायाःसमबलप्रमाणविरोधरूपप्रतिपक्षातिरिक्तोपाधि दोषस्यैवकारेणव्यावर्तनात् । उपपादितंचैतन्न्यायकल्पलतायामितिचेत् उच्यते पक्षादिप्रविभागात्पूर्वंव्याप्तिग्रहकाले प्रतीतस्योपाधेर्व्यभिचारोन्नायकत्वं । अनंतरंचप्रतिपक्षोन्नायकत्वमेव । व्याप्तेःपूर्वगृहीतत्वेनव्यभिचारोन्नायकत्वासंभ वात् । उदाहृतवाक्यंचअनंतरोपस्थितोपाधिविविक्षयैव अन्यथासाध्यसाधनवैलोम्यमव्याप्तिः साधनस्यचेत्यनुव्याख्या नेऽव्याप्तिचशब्दाभ्यांव्यभिचारसत्प्रतिपक्षयोरुक्त्यातद्विरोधापत्तेः। स्पष्टंचैतत्पत्थत्यादौतर्कतांडवेच। तथाचात्रव्यभिचार- सत्प्रतिपक्षान्यदूषणद्वयाभिप्रायेणप्रवृत्तेर्नकोपिदोषइति॥पक्षव्यावृत्त्यर्थत्वादिति॥ अन्यथाजन्यत्वमात्रस्यपक्षेसत्वे- नसाधनव्यापकत्वंस्यात्। विशेषणदानेचेश्वरस्यशरीराभावाद्व्यतितद्व्यावृत्तिरितिभावः॥पक्षेतरस्यापीति॥ तत्रापीतरत्व

मात्रस्यपर्वतेसत्वेनसाधनव्यापकत्वपरिहारायपक्षव्यावृत्यर्थंपर्वतेतिविशेषणोपादानादितिभावः । पर्वतेतरत्वस्यव्याप्तिर स्ति नवा आद्यंनिरस्यति ॥ **कानोहानिःपर्वतेतरत्वादीनामपिव्याप्तिरस्तिचेदिति** ॥ यद्वावह्निरहितंपर्वतंपक्षीकृ त्यवह्निःसाध्यतेपक्षेसाध्यव्याप्त्यभंगाद्भवत्येवपर्वतेतरत्वमुपाधिः । अतएवबाधोन्नीतपक्षेतरस्यपर्वतेतरत्वादेरुपाधित्वंसं मतमितिभावः । द्वितीयंनिराह ॥ **अनुमानोपजीव्येनबाधादव्याप्तिरिति** ॥ अनुमानस्योपजीव्येनयद्याग्निर्नस्यात्त र्हिधूमोपिनस्यादितितर्केणपक्षेवन्हिनिश्चयेतत्रैवसाध्यव्यापकत्वभंगेनपर्वतेतरत्वस्योपाधिलक्षणराहित्येनैवदुष्टत्वं । नतुपक्ष व्यावर्तकविशेषणवत्वादित्यर्थः । हेतौव्यभिचारवारकविशेषणमेवोपादेयं नत्वसिद्धिवारकमितिमतेप्रतिपक्षोविशेषणंव्यर्थ मेवेत्यतआह ॥ **नचेति** ॥ व्यभिचारवारकविशेषणस्यव्याप्तिग्रहोपयोगित्वान्नवैयर्थ्यमित्यतआह ॥ **व्याप्तिवदि- ति** ॥ तदर्थमसिद्धिवारकविशेषणमपिसप्रयोजनमितिभावः । उपाधेरन्यथासिद्धिमाशंक्यनिराह ॥ **सकर्तृकत्वेति** ॥ ॥ **उत्तरत्रेति** ॥ समयपादेसंबंधानुपपत्तेश्चेत्यत्रशरीराभावे ईश्वरस्यमृतपुरुषवज्जगताकर्तृत्वेनसंबंधानुपपत्तेरितिशरीर- स्यापिकर्तृत्वेप्रयोजकत्वसमर्थनेननिराकारिष्यतइत्यर्थः । सर्वकर्तृत्वेउक्तरीत्यासर्वज्ञत्वंप्राप्तमेवेत्यतआह ॥ **बहुकर्तृत्वेति** ॥ जगत्कर्तुरेकएवतस्योक्तरीत्यासार्वज्ञंस्यादितिभावः ॥ **लोकानुकूल्यादिति** ॥ लोकेविचित्रप्रासादादिनिर्माणस्या नेककर्तृकत्वस्यैवदर्शनादितिभावः ॥ **अविप्रलंभादीति** ॥ प्रमाणाभावादितिभावः । सार्वज्ञस्योक्तरीत्याकथं चिच्छंकार्हत्वेपि अविप्रलंभादेस्तदभावादतीत्युक्तं । आप्त्यनिश्चयादितिभाष्यमाप्तिमूलकत्वानिश्चयादित्यपिव्याचष्टे ॥ **अस्तुवेति** ॥ कुतःप्रमाणादनुमानादागमाद्वा वेदःपामरप्रणीतःवेदत्वात्तव्यतिरेकेणगगनवदित्याभाससमानयोग क्षेमत्वमनुमानस्येत्याह ॥ **वेदत्वस्येति** ॥ वेदत्वस्यपामरप्रणीतकालिदासादिवाक्यरूपात्सपक्षाद्व्यावृत्तत्वेन.स.

धारण्यमितिचेत्तर्हिसर्वज्ञप्रणीतभारतादिरूपसपक्षाद्व्यावृत्तत्वेनतत्पक्षेप्यसाधारण्यायित्याह ॥ असाधारण्यस्यचेति ॥
॥ वेदानित्यत्वइति ॥ तथाचवेदप्रामाण्यसिद्धौप्रमाणवाक्यत्वेनाप्तमूलत्वसिद्धिः । तत्सिद्धौचतत्प्रामाण्यसिद्धिरित्य
न्योन्याश्रयइतिभावः ॥ तस्मादिति ॥ तस्माद्यज्ञात्सर्वहुतऋचःसामानिजज्ञिरेत्यत्रयज्ञशब्दवाच्येश्वरजन्यत्वंश्रूयतइ
तिभावः ॥ उक्तेति ॥ ईश्वरासार्वज्ञसिद्धिरूपोक्तदोषादित्यर्थः ॥ कारणेति ॥ अग्निरचितत्वरूपमुख्यार्थत्याग
इतिशेषः । एतत्संप्रदायप्रवर्तकत्वं ईश्वरस्यतुसार्वज्ञात्कर्तृत्वमेवेतिभावः ॥ चक्रकापातादिति ॥ ईश्वरस्यसर्वज्ञत्वे
तस्माद्यज्ञादित्यादिनावेदस्यसर्वज्ञप्रणीतत्वासिद्धिस्तत्सिद्धौचवेदप्रामाण्यासिद्धिस्तत्सिद्धौचवेदेनेश्वरस्यसार्वज्ञासिद्धिरिति-
चक्रकापातादित्यर्थः । तादृशं अदृष्टविषयं ॥ अनुमानमिति ॥ देवदत्तशरीरंदेवदत्तविशेषगुणजन्यंकार्यत्वेसतिदे
वदत्तभोगहेतुत्वाद्देवदत्तप्रयत्नजन्यमालावदित्यनुमानमित्यर्थः ॥ प्रतिपक्षादीति ॥ देवदत्तशरीरादेःकिंसाक्षाद्देवद-
त्तविशेषगुणजन्यत्वंसाध्यं उतपरंपरयावा नाद्यः धर्माधर्मयोरप्यारंभकप्रेरणादिनैवोपयोगांगीकारात् । देवदत्तशरीरंन
साक्षाद्देवदत्तगुणजन्यंशरीरत्वाद्यज्ञदत्तशरीरवदितिसत्प्रतिपक्षाच्च द्वितीयेजन्मांतरीयप्रयत्नाराधितदेवताद्वारेणोपपत्तेरर्थां
तरता देवदत्तविशेषगुणजन्यतयाविनाप्याकाशादेरीवेश्वरेच्छयादेवदत्तस्यभोगहेतुतासंभवतीत्यप्रयोजकताचेत्यादिदुष्टत्वा
दित्यर्थः ॥ अदृष्टसंभावनेपीति ॥ उक्तरीत्यासामान्यतोदृष्टसिद्धावपिनादृष्टविशेषासिद्धिरित्यर्थः । तदेवव्यनक्ति
॥ नहीति ॥ प्रामाण्यस्य करणप्रामाण्यस्य ॥ स्वतस्त्वेनेति ॥ ज्ञानजनकशक्त्यैवतद्गतयाथार्थ्यजनकत्वेनेत्यर्थः
॥ गुणेति ॥ कर्तृगुणोत्पादकेत्यर्थः । एतदेवोपपादयति ॥ प्रामाण्यंनामेत्यादिना ॥ याथार्थ्यं ज्ञाननिष्ठं
॥ याथार्थ्यमिति ॥ अप्रामाण्यघटरूपयोर्व्यभिचारवारणायविशिष्टग्रहणं विशेषणत्यागेनाप्याह ॥ याथार्थ्यमिति ॥

अप्रामाण्यंनदोषजन्यंज्ञानधर्मत्वात्प्रामाण्यवदित्याभाससाम्यमाशंक्यनिराकरोति ॥ **नचेति** ॥ **दोषाभावेति** ॥
तथाचान्वयव्यतिरेकाभ्यामप्रामाण्यदोषयोःकार्यकारणभावग्राहकप्रमाणबाधकमितिभावः । नचैवंगुणाभावेप्रामाण्याभा
वोपिनियतइतिवाच्यं । यादृच्छिकसंवादिस्थलेव्यभिचारस्यवक्ष्यमाणत्वात् । प्रमा ज्ञानसामग्रीव्यतिरिक्तकारणजन्येत्यत्र
प्रमात्वविशिष्टपक्षः तदुपलक्षितंवा तत्राद्यंविकल्प्यदूषयति ॥ **प्रमायाइति** ॥ अत्रसर्वत्रकारणपदंसामग्रीपरंपूर्वोत्तरग्रं-
थानुगुण्यात् एवंविधत्वेनातिरिक्तकारणजन्यत्वेन एतदुत्तराभ्यामप्यन्वितं ॥ **व्याहतेरिति** ॥ सर्वस्यापिस्वसाम
ग्रीमात्रजन्यत्वादितिभावः । द्वितीयंशंकते ॥ **प्रमात्वयुक्तज्ञानस्येति** ॥ अत्रापिज्ञानसामग्रीव्यतिरिक्तकारणज-
न्यत्वंकिंतन्मात्रजन्यत्वं उतज्ञानसामग्रीजन्यत्वेसतितदतिरिक्तजन्यत्वं आद्येआह ॥ **तादृशज्ञानस्यापीति** ॥ द्वितीयंशंकते
॥ **ज्ञानकारणेति** ॥ **घटादौव्यभिचारादिति** ॥ कार्यत्ववतिघटादौज्ञानकारणजन्यत्वांशाभावादितिभावः ॥ **ज्ञान
कारणमात्रेति** ॥ घटादावस्यसत्वान्नव्यभिचारइतिभावः । **ज्ञानेज्ञानसामान्ये** ॥ **ज्ञानातिरिक्तेति** ॥ ज्ञानसामा-
न्यातिरिक्तेत्यर्थः ॥ **तत्साधनेति** ॥ ज्ञानकारणमात्रजन्यत्वाभावसाधनेत्यर्थः । तथाचाभाससाम्यमितिभावः ।
ननुज्ञानसामान्येज्ञानसामग्रीमात्रजन्यत्वाभावः । सिध्यन्नजन्यत्वेनवातिरिक्तसामग्रीजन्यत्वेनवासिध्यति । आद्येज्ञानं
अजन्यं कार्यत्वादितिप्रयुक्तंस्यात् तथाचप्रतिज्ञाहेत्वोर्व्याघातः । द्वितीयेज्ञानंज्ञानसामग्र्यतिरिक्तसामग्रीजन्यमितिस्यात्
तथाचप्रतिज्ञाहेत्वोर्व्याघातः । ज्ञानजनकेज्ञानसामग्र्यतिरिक्तत्वाभावादित्यतआह ॥ **विशिष्टाभावविकल्पेनेति** ॥
ज्ञानसामग्रीमात्रजन्यत्वाभावरूपविशिष्टाभावविकल्पेनाभिहितव्याघातस्यसमीकरणात्तुल्यत्वादितिभावः । तथाहि प्र
मायामपिनाजन्यत्वेनज्ञानसामग्रीमात्रजन्यत्वाभावपर्यवसानं पूर्ववत्प्रतिज्ञाहेत्वोर्व्याहतेः । नाप्यतिरिक्तसामग्रीजन्य

त्वेनप्रमाया अपिज्ञानत्वेनतत्कारणस्यज्ञानसामग्रीव्यतिरिक्तत्वाभावेनप्रतिज्ञापदयोर्व्याघातादिति ॥ प्रतिज्ञानिरास
नेति ॥ प्रमाज्ञानसामग्रीव्यतिरिक्तकारणजन्येतिप्रतिज्ञानिरासेनेत्यर्थः । परतस्त्ववादिनापिगुणत्वजातेरनंगीकारेण
गुणशब्देनज्ञानकारणातिरिक्तकारणस्यैवविवक्षणीयत्वेनपूर्वोक्तव्याघातापत्तेरितिभावः । कार्यत्वहेतुदोषस्यघटज्ञानयो
र्व्यभिचारस्यात्रहेतावसंभवात्प्रतिज्ञानिरासेनेत्युक्तं ॥ अन्यत्रेति ॥ अनन्यथासिद्धमन्यथासिद्धंवेत्यर्थः ॥ व्यभि
चारादिति ॥ तादृशान्वयव्यतिरेकिणस्तंतुरूपस्यपटहेतुत्वादर्शनादितिभावः ॥ उभयेति ॥ दोषनिरासरूपप्रामा
ण्यरूपोभयेत्यर्थः । एवंदोषस्यगुणनिरासोपक्षीणत्वादिनेत्यर्थः । एतत् प्रमायाः गुणान्वयव्यतिरेकनियमेनतेषामुभय
कारणत्वं ॥ व्यभिचारादिति ॥ भ्रांतप्रतारकवाक्येगुणाभावेपिप्रमोत्पत्याव्यतिरेकव्यभिचारादित्यर्थः ॥ कार
णतयापन्नइति ॥ प्रतिबंधकाभावस्यापिकारणत्वादितिभावः ॥ कारणत्वापत्तेरिति ॥ नचेष्टापत्तिः प्रतिबंधका
भावस्यापिकारणत्वे उत्सर्गापवादयोःक्वाप्यभावप्रसंगात् । औत्सर्गिककार्यापवादकविरहतारूपान्यथासिद्धत्वाच्चेतिभावः
॥ दोषाभावस्यकारणत्वेचेति ॥ नन्विदमयुक्तंपूर्वग्रंथेन तर्हिदोषाभावःकारणमित्यायातमितिचेन्न तथासत्युत्स
र्गापवादयोः क्वाप्यभावप्रसंगादितिसुधायाः दोषाभावोपिनकारणंयादृच्छिकसंवादादिषुसत्यापिदोषेप्रमाणज्ञानोदयादि
तितत्वनिर्णयटीकायाश्चविरोधादितिचेदुच्यते । अभ्युच्चयवादेनात्रकारणत्वोक्तिरित्यदोषः । वस्तुतस्तुअत्रकारणपदंघटंप्र
तिकुलालपित्रादिसाधारणतद्व्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वरूपप्रयोजकत्वमात्रपरं । अतएव अदुष्टमिंद्रियंत्वक्षंतर्को
दुष्टस्तथानुमा आगमोदुष्टवाक्यंचेतिब्रह्मतर्कवाक्येनिर्दोषार्थेंद्रियसन्निकर्षःप्रत्यक्षमित्यादिप्रमाणलक्षणेचदोषाभावघटित
लक्षणकथनमपिसंगच्छते । नचैवंप्रामाण्यस्यज्ञानकारणातिरिक्तकारणसापेक्षत्वेनपरस्त्वंमंतव्यं । दोषाभावस्यप्रयोजक

त्वेपिकारणत्वाभावेनातिरिक्तकारणानपेक्षितत्वात् दोषाभावस्यापेक्षितत्वेपिप्रमाजननशक्तिःसहजा नतुभ्रमजननेशुक्ति वदाधेयेत्येतावतैवप्रामाण्यस्वतस्त्वसिद्धेश्च । उक्तंचसुधायां इंद्रियादीनामौत्सर्गिकीशक्तिःप्रामाण्यजननेदोषापवादाद प्रामाण्यमपिजनयतीति पूर्वग्रंथादीनांचदोषाभावस्यकारणत्वनिषेधपरत्वमित्यविरोधः स्पष्टमेतत्तर्कतांडवइति ॥ अव्या घातादिति ॥ प्रामाण्यार्थमाप्तोक्तत्वानंगीकारादितिभावः । व्यभिचारात् साध्याव्यापकत्वात् ॥ अजन्यप्रमा त्वमिति ॥ जन्यप्रमात्वाभावइत्यर्थः । तेनव्यभिचारनिरासः ॥ व्याप्त्यभावादिति ॥ याद्दच्छिकसंवादिदुष्ट वाक्यजन्यप्रमायांगुणजन्यत्वाभावरूपसाध्येसत्यपिजन्यप्रमात्वाभावरूपोपाध्यभावेनसाध्याव्यापकत्वादित्यर्थः ॥ कर्तृ गुणनिरपेक्षस्यापीति ॥ ज्ञानगतयाथार्थ्यप्रयोजकत्वेनाभिमतगुणाप्तत्वनिरपेक्षस्यापियथार्थज्ञानकारणत्वरूपप्रामा ण्यसिद्धेरित्यर्थः । देवतानांभावःसत्तातन्नियमइत्यर्थः ॥ देवताह्वानादिरूपस्येति ॥ एह्यग्निइत्यादिमंत्राणांदेव ताह्वानार्थत्वात्तदा देवताभावेतदाह्वानायोगादितिभावः ॥ स्वरूपनित्यत्वाभावेपीति ॥ देवत्वव्यवहारहेतुविशि ष्टरूपस्यनष्टत्वादितिभावः॥ अतीतविषयतयैवेति॥ अन्यथा अकल्पयादितिलङ्नस्यादितिभावः॥ उपचारेणेति॥ प्रभवस्यबाहुलिकत्वेनेतिभावः । तदानिश्चयः ताद्दशप्रत्यक्षानिश्चयः ॥ यथेति ॥ पर्यये ऋतूनांपरिवर्तने संवत्सरांत रमासावितियावत् । ऋतुषुवसंतादिषु नानारूपाणि अन्योन्यविलक्षणानि । तानितान्येववसंतेकोकिलगानादीनि अन्यदासारसगानादीनिऋतुलिंगानिऋतुज्ञापकानियथादृश्यंतेतथायुगकल्पादिषुनानारूपास्तएवभावाः पदार्थाःदृश्यंतइ तिभारतवाक्यार्थः । अत्रदृश्यंतइत्यनुवादात्प्रत्यक्षंज्ञायतइतिभावः । व्यभिचारस्तद्रीत्या ॥ परंप्रतीति ॥ परेणपू र्वपक्षिणाप्रलयानभ्युपगमेनव्याप्त्याप्रसिद्धेरितिभावः ॥ प्रमाणेति ॥ यत्प्रयंति आकाशंप्रत्यस्तंयंति यमप्येतिभुवनं

नत्वं स्वर्गादिसाधनत्वंवास्वीकार्यं । तदुभयंक्रमेणदूषयति ॥ भगवज्ज्ञानेत्यादिना ॥ ॐ अन्यार्थंतुजैमिनिः
प्रश्नव्याख्यानाभ्यामपिचैवमेके ॐ ॥ शब्दानांजगद्वाचित्वमन्यज्ञानार्थंतुभगवज्ज्ञानार्थमेव । कस्मिन्नुभगवइति
कथंनुभगवइतिचक्रमेणशौनकश्वेतकेतुप्रश्नाभ्यां तस्मैसहोवाचेतियथासौम्येतिचांगिरोद्दालकव्याख्यानाभ्यामपिचैवमे
व यस्तंनवेदेत्येकशाखिनःपठंतीत्यर्थः ॥ एतज्ज्ञानमात्रस्येति ॥ तथाचफलांतरप्रश्नोयुक्तएवेतिभावः तात्पर्यमाह
॥ तंप्रकारमिति ॥ सफलमिति ॥ परीक्ष्यलोकानित्युक्तदिशाब्रह्मज्ञानांगवैराग्योत्पादनेनवाविविदिषंतियज्ञेन
दानेनेत्युक्तदिशाअंतःकरणशुद्ध्युत्पादनेनवाएषसेतुरितिपरमात्मनःसर्वाधारतयाज्ञातव्यत्वोक्त्याआधेयनिरूपकत्वेनवास
फलमित्यर्थः एवमग्रेपि ॥ ज्ञातफलमिति ॥ घटादिकारणत्वेनमृत्पिंडज्ञानेएतावत्तन्मयंभवतीतिविशेषज्ञानादपेक्षित
मृन्मयसंपादनसंभवादित्यर्थः ॥ एवमिति ॥ वैराग्यव्युत्पादनद्वारासर्वकारणत्वसर्वाधारत्वसर्वसंहर्तृत्वसर्वनियंतृ
त्वादिनापरमात्मज्ञानेतज्जन्यत्वपरतंत्रत्वादिविशेषज्ञानादीश्वरप्रीत्यापुरुषार्थप्राप्तेरितिभावः ॥ अर्थादिति ॥ कंठतो
नुक्तेरितिभावः ।ऋचोअक्षरेपरमेव्योमन्यस्मिन्देवाअधिविश्वेनिषेदुः।यस्तन्नवेदकिमृचाकरिष्यतियइत्तद्विदुस्तइमेसमास
तइतिसमस्तांऋचंप्रकृताभिप्रायेणव्याचष्टे ॥ तदक्षरमित्यादिना ॥ अक्षरइत्यनुवादः ॥ नचेति ॥ ज्योतिष्टो
मादिशब्दानांकर्मादावेवव्युत्पन्नत्वादितिभावः ॥ खंडपदानामिति ॥ ज्योतिष्टोमेत्यादिकर्मवाचकसमस्तपदावय
वानांज्योतिरादिपदानामित्यर्थः ॥ ॐ वाक्यान्वयात् ॐ ॥ वाक्यान्वयान्निमित्तात्ज्योतिष्टोमादिसमस्तशब्दाना
मन्यवाचित्वमंगीकार्यमित्यर्थः ॥ पृथक्पृथगिति ॥ कर्माद्यनेकार्थेषुवाचकतयास्थितस्येत्यर्थः ॥ अंततइति ॥
मोक्षंप्रतिप्रसन्नः परमेश्वरएवोपायइतितत्स्वरूपेसत्यंज्ञानमित्यादिनानिरूपितेकथमसौप्रसीदतीत्यपेक्षायांतत्साधनत्वेन

ननतदपरोक्षज्ञानंतदर्थंश्रवणादिकंतदंगतयाकर्माणिविधीयंतइत्येवंसमस्तस्यापिकर्मादिप्रतिपादकवेदस्येश्वरस्वरूपएवपर्यवसा-
नमित्यर्थः । अतःकर्मादिप्रतिपादकवाक्यस्यान्यवचनसापेक्षत्वात् ॥ ज्ञानस्यैवासंभवेनेति ॥ मंदानांप्रतिपदा-
न्वयायोग्यत्वादितिभावः ॥ कइति ॥ छंदसांवैदिकपदानांभगवतियोगमुत्तमाधिकारिण्यतिरिक्तःकोवेदनकोपीत्यर्थः
॥ ॐ प्रतिज्ञासिद्धेर्लिंगमाश्मरथ्यः ॐ ॥ नान्यःपंथाइतिप्रतिज्ञातोयोर्थःज्ञानमेवमुक्तिहेतुरितितात्सिद्धेर्निश्चय-
स्यलिंगंकर्मादिवचनंजनकंसद्ज्ञानार्थंभवतीत्याश्मरथ्याचार्योमन्यतइत्यर्थः ॥ सपरिकरमिति ॥ फलेतिकर्तव्यतास
हितमित्यर्थः । अमृतोभवतीतिसंबंधः सभिन्नंसाहितं परामृश्य आलोच्य तस्यमोक्षस्य ॥ ततश्चेति ॥ तत्राकृतोनित्यपु
फमर्थस्यमोक्षस्यकृतेनकर्मणासिद्धिर्नेत्युक्तेरितिभावः ॥ ॐ उत्क्रमिष्यतएवंभावादित्यौडुलोमिः ॐ ॥ ज्ञानेन
बंधादुत्क्रमणमिछतःपुंसः एवंज्ञानंहेतुतश्चकर्मादेर्भावादवश्यंभावात्तद्वचनंज्ञानार्थंभवतीत्यौडुलोमिराचार्योमन्यतइत्यर्थः ॥ फ
लोक्तीति ॥ कर्मणांस्वर्गादिफलकत्वोक्तीत्यर्थः ॥ ॐ अवस्थितेरितिकाशकृत्स्नः ॐ ॥ कर्मादेर्ब्रह्मण्यनवस्थाना
दाधारत्वेनब्रह्मज्ञानार्थमाधेयंकर्मादिवेदेनोच्यतइतिकाशकृत्स्नाचार्योमन्यतइत्यर्थः । अयुक्तंचेत्याह ॥ विरुद्धानामि
ति ॥ अनेकाधिकारिविषयत्वादिति ॥ ब्रह्मज्ञानार्थित्वाभावेनस्वर्गाद्यर्थित्वावस्थाविशिष्टाल्पाधिकारिविवक्षया
श्मरथ्यमतं । ब्रह्मजिज्ञासुत्वावस्थाविशिष्टाल्पाधिकारिविवक्षयौडुलोमिमतं । ज्ञानित्वावस्थाविशिष्टाल्पाधिकारिविवक्ष
याकाशकृत्स्नमतमित्यनेकाधिकारिविषयत्वान्मतभेदोपपत्तेर्नविरोधइत्यर्थः ॥ ९ ॥ स्त्रीशब्दानां स्त्रीलिंगवाचकशब्दानां
॥ एषेति ॥ स्त्रीरूपाभगवतिप्रकर्षेणकरोतीतिप्रकृतिःविकाररहितत्वादविकृतिरित्यर्थः ॥ याप्राणेनेति ॥ यादे
वोत्तमाऽदनाददतिशब्दवाच्याभगवतीमुख्यप्राणेनसहदेहादौप्रविशतीत्यर्थः ॥ स्त्रीलिंगत्वादिति ॥ साक्षादपत्ने

त्पादकत्वरूपस्त्रीलिंगवाचकत्वादित्यर्थः । तदयोगात् स्त्रीलिंगायोगात् नारायणादिरूपविशेषेतत्संभवमाशंक्याह ॥ नचेति ॥ नियामकविशेषाभावेनेति ॥ नपुंसकलिंगब्रह्मशब्दवाच्यत्वे अथकस्मादुच्यतेब्रह्मेतिनतुस्त्रीलिंग शब्दवाच्यत्वेविशेषमानाभावादित्यर्थः ॥ ॐ प्रकृतिश्चप्रतिज्ञादृष्टांतानुपरोधात् ॐ ॥ नकेवलंपुल्लिंगशब्दवा च्योहरिरपितु स्त्रीलिंगप्रकृत्यादिशब्दवाच्यश्च हंतैतमेवेतिप्रतिज्ञा यथानद्यइतिदृष्टांतस्तयोरनुपरोधादनुसारादित्यर्थः ॥ दृष्टांतस्योक्तत्वादिति ॥ तथाचनामानिसर्वाणीत्येतदपेक्षयास्याविशेषश्रुतित्वमितिभावः ॥ आस्वादनइति ॥ अयमर्थः आस्वादनीयएवनोदासितव्यइत्यर्थेवर्ततइत्यर्थः । सूत्रेप्रकृतिशब्दस्यैवोपादानात्स्त्रीशब्दाइतिकथंभाष्येबहुवच नमित्यतआह ॥ प्रकृतिपदमिति ॥ प्रधानस्त्रीरमा ॥ ॐ अभिध्योपदेशाच्च ॐ ॥ मायामितिश्रुतावभिध्या याः ईश्वरेछायाःप्रकृतित्वोपदेशाच्चेछास्वरूपोहरिःप्रकृतिशब्दवाच्यइत्यर्थः ॥ उपचारइति ॥ विंद्यादित्यादेःसाधारण त्वादितिभावः ॥ यत्संबंधेति ॥ इन्प्रत्ययस्यसंबंधवाचित्वात्तवेतिषष्ठ्याश्चसंबंधविधानादितिभावः । एवंरूपेण सामान्यरूपेण, साक्षात् विशिष्य ॥ ॐ साक्षाच्चोभयाम्नानात् ॐ ॥ साक्षाच्चसामान्यपारंपर्यविनैवस्त्रीशब्दवा च्यत्वपुरुषशब्दवाच्यत्वरूपोभवस्यैषश्रुतावुक्तत्वात्प्रकृत्यादिशब्दवाच्योहरिरेवेत्यर्थः ॥ नह्रीति ॥ तथात्वेगुणपूर्त्यासि-द्धेरितिभावः ॥ ॐ आत्मकृतेःपरिणामात् ॐ ॥ परिणामात्प्रकृतेःपारिणामंविज्ञायतत्रात्मनोबहुधाकरणात्प्रकृ-तिशब्दवाच्यंब्रह्मेत्यर्थः । अन्वित्यस्यार्थोऽनुकूलतयेति । स्मृतावनुप्रवेशस्यप्रकृतित्वप्रयोजकत्वमुच्यतइतिप्रतीतिनिरा सायाह ॥ स्मृतिरपीति ॥ अनुप्रविश्येत्यनंतरंतांपरिणामेत्यादिद्रष्टव्यमितिभावः । प्रतिज्ञाययेनाश्रुतंश्रुतंभवतीत्यादि ना युक्त्यायथासोम्येत्यादिना ॥ तत्सिद्धिरिति ॥ घटादेर्मृदुपादानकत्वेनतज्ज्ञानेज्ञातत्ववज्जगतोपिब्रह्मोपाद

नकत्वेनतज्ज्ञानेज्ञातत्वमित्युक्तावुपादानत्वंसिध्यतीत्यर्थः । व्याघातात् यथैकेनमृत्पिंडेनेत्यादिना निरस्ते आ-
नुमानिकमित्यादिना असंगतिमेवदृष्टांतोक्त्युपपादयति ॥ तदुक्तेरिति ॥ प्रधानस्वरूपनिषेधोक्तेरित्यर्थः ॥ ज-
गत्कारणत्वेति ॥ उपादानत्वेनेतिशेषः ॥ सममिति ॥ प्रकृतेरपिसाक्षिवेद्यत्वादितिभावः । अतएवोक्तंपत्यतौ
प्रकृतिःकालोऽव्याकृताकाशश्चेति ब्रह्मणोजगदुपादानत्वेनिर्विकारोक्षरःशुध्दइत्यादिबहुमानविरोधइत्याशयेनाह ॥ अ-
लमिति ॥ ॐ योनिश्चहिगीयते ॐ ॥ हियस्माद्योनिश्चस्वदेहादुत्पादकंब्रह्म यद्भूतयोनिमित्यत्रगीयते अतःप्रकृ
त्यादिशब्दवाच्यइत्यर्थः ॥ स्वदेहादेवेति ॥ प्रलयेस्वोदरनिवेशितस्यब्रह्मादिप्राणिजातस्यस्थूलदेहविशिष्टतयाजनक
इत्यर्थः । ऐतरेयभाष्यादिशास्वयंसमाधानांतरमाह ॥ भगवतइति ॥ स्त्रियःसतीस्तांउमेपुंसआहुरितिश्रुतेरितिभावः
निषेधोनैनमित्यादिना ॥ ६ ॥ निषेधमुखवेद्यत्वेति ॥ प्रथमप्रतीतौनास्तीत्युपलभ्यमानत्वेत्यर्थः । निःस्वरूपत्व
मादिपदार्थः ॥ ॐ एतेनसर्वेव्याख्याताव्याख्याताः ॐ ॥ एतेनतदधीनत्वादिप्रागुक्तहेतुसमुदायेनसर्वेशून्या
सदादिशब्दाब्रह्मवाचकत्वेनप्रतिपादिताइत्यर्थः । अव्यक्तत्वादित्यनेनश्रुताव्यक्तत्वादिकंशून्यादिशब्दप्रवृत्तिनिमित्तोपपा
दनायोक्तमितिसूचयति ॥ अन्यसुखमल्पंकरोतीति ॥ शमूनंयापयतीतिव्युत्पत्तेरितिभावः । तोदनात्तुछउच्यतइ
त्यत्रतोदनशब्दस्यतुछशब्दप्रवृत्तिनिमित्तत्वमुच्यतइतिभ्रांतिवारयति ॥ तोदनात्तुदइति ॥ दुःखहेतुत्वादित्यर्थः
तुदव्यथनइतिधातोः । तर्हिछप्रत्ययस्यानिमित्तानुक्तिरित्यतआह ॥ अदृश्यःछइति ॥ दुर्जनैरितिशेषः कुतइत्यत
आह ॥ छन्नत्वादिति ॥ छद्आछादनइत्यस्माड्डप्रत्ययेटिलोपेचछइतिरूपसिध्दिरितिभावः । अनेनस्वयंपरोवि
ष्णुर्यस्माच्छमूनंकुरुतेतस्माच्छून्यइतिप्रोक्तः अदृशःसन्तोदनात्तुछउच्यतइतिस्मृतावन्वयउक्तोभवति ॥ अश्क्यत्वा

दिति ॥ अश्वभोजनइतिश्वेतोरितिभावः ॥ सर्वस्यतदधीनत्वादित्युभयत्रसंबध्यतइति ॥ स्वसुखादन्यसुखस्याल्पत्वकरणेतोदनेदुर्जनैरदृश्यत्वेकेनाप्युत्पादयितुमयोग्यत्वेऽभक्ष्यत्वेचसंभाव्यमानस्यभगवदधीनत्वस्यहेतुत्वेनश्वसूनंकुरुतइत्यादौपूर्वत्रशून्यादिशब्दप्रवृत्तिनिमित्तस्वामित्वस्यविष्णौशून्यादिशब्दप्रवृत्तौनिमित्तत्वेनतत्तच्छब्दाभिदेयतेत्युत्तरत्रचसंबध्यतइत्यर्थः । उक्तंवाधकवशात्सर्वशब्दःसंकोचइत्यतआह ॥ निषेधेति ॥ तत्रैव असत्यैव ईश्वरोपितत्रैवकथंतत्करोतीत्यतआह ॥ ईश्वरस्येति ॥ ७॥ इतिश्रीमत्तत्वप्रकाशिकावाक्यार्थमंजर्यांशर्करायांश्रीनिवासविरचितायां प्रथमाध्यायस्यचतुर्थःपादःसमाप्तः ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ इति श्रीमत्तत्वप्रकाशिकावाक्यार्थमंजर्यां प्रथमाध्यायःसमाप्तः ॥

॥ इति श्रीमत्तत्त्वप्रकाशिका वाक्यार्थमंजर्यां ॥

# ॥ प्रथमाध्यायः समाप्तः ॥

॥ श्रीमदानंदतीर्थभगवत्पादाचार्यगुर्वंतर्गतनिर्दोषरामायनमः ॥ निर्विघ्नमस्तु ॥ यत्पादसेवयासंतोजनादुःखादिवर्जिताः।
तंरामंसर्वदोषघ्नंप्रणमामिनिरंतरं ॥ १ ॥ पूर्वाध्यायेति ॥ पूर्वाध्यायेत्यर्थः ॥ अशेषशास्त्रप्रामाण्येनेति ॥ स्वर
वर्णपदवाक्यात्मकाशेषशास्त्रस्यविष्णुजगज्जन्मादिकारणत्वादिप्रापकत्वेनेत्यर्थः ॥ तस्ययुक्त्यादिविरोधइति ॥ तथाच
विरोधेपरिहृतएवसमन्वयासिद्धेः । पूर्वाध्यायार्थसमन्वयस्यकार्यत्वंएतदध्यायार्थाविरोधस्यकारणत्वमितिपूर्वोत्तराध्याय
योःकार्यकारणभावलक्षणासंगतिरितिभावः । उपादित्साउपादातुमिच्छा समयःसिद्धांतः । ननुस्मृत्याविरोधप्रतिपाद-
कत्वेऽस्यनैतत्पादांतर्भावः । कथंचिदंतर्भावेपिनप्राथम्येबीजमित्याशंक्यनिराकरोति ॥ यद्यपीत्यादिना ॥ स्मृती
नामिति ॥ पाशुपतादिस्मृतयोहिस्वयमात्माभिमतवाक्यतयासमयरूपाअपिस्वोक्तार्थेयुक्त्यादींश्चसंवादयंत्योयुक्त्यादि
चतुष्टयरूपाइत्यर्थः ॥ प्राथम्योपपत्तेरिति ॥ एकैकविरोधापेक्षयाविरोधचतुष्टयात्मकस्मृतिविरोधस्यप्रबलतयाप्रथमं
निरसनीयत्वादितिभावः । दोषःसंगत्यभावरूपः ॥ अनेनेति ॥ विष्णोर्जगत्कारणत्वेयुक्त्यादिरूपस्मृत्याविरोधंदर्श-
यतीत्यर्थकभाष्येणेत्यर्थः । विगानंविवादः ॥ ॐस्मृत्यनवकाशदोषप्रसंगइतिचेन्नान्यस्मृत्यनवकाशदोष
प्रसंगात्ॐ ॥ स्मृतीनांपाशुपतादीनांरुद्रादिसर्वज्ञप्रणीतत्वान्निरवकाशत्वंनएतद्विरोधेविष्णुजगत्कारणत्वप्रतिपादक
श्रुतेरप्रामाण्याख्यदोषप्रसंगइतिचेन्न । अन्यासांपंचरात्रस्मृतीनामत्याप्तविष्ण्वादिप्रणीतत्वेनश्रुतिसंवादेनचानितरांनिरव
काशेनतद्विरुद्धपाशुपतादिस्मृतीनामप्रामाण्याख्यदोषस्यप्रकर्षेणसंगात्संबंधात् अत्यंताप्रामाण्यादित्यर्थः । विरोधंव्यन-
क्ति ॥ पाशुपतेति ॥ वस्तुविकल्पेति ॥ उभयोरपिप्रामाण्येतदुभयानुसारेणएकस्मिन्जगतिविष्णुमात्रजन्यत्वाशिव
१ मात्रजन्यत्वरूपविरुद्धधर्मवत्वप्रसंगादित्यर्थः ॥ देशकालेति ॥ श्रुतिर्यद्देशकालीनांविष्णोर्जगत्कारणत्वंप्रतिपादयति

तद्भिन्नदेशकालीनंरुद्रस्यजगत्कारणत्वंस्मृतिःप्रतिपादयतीत्याविरोधइत्यर्थः ॥ **सकलेति** ॥ सकलदेशकालीनेत्यर्थः
॥ **विरोधेत्विति** ॥ प्रथमेप्रथमाध्यायेस्मृतिपादेचिंतितं ॥ ज्योतिष्टोमेऔदुंबरींस्पृष्टवोद्गायेदितिश्रुत्याऔदुंबरीयज्ञसद
स्थूणांस्पृष्ट्वाउद्गात्रागानंकर्तव्यमितिविहितं स्मृतिकारास्तुतत्स्पर्शविरुद्धंतस्याःकार्त्स्न्येनवाससावेष्टनंस्मरंति औदुंबरी
सर्वावेष्टयितव्येति तत्स्मरणंप्रमाणमप्रमाणंवेतिसंशयेस्मृत्यधिकरणेस्मृतीनांमूलश्रुत्यनुमापकतयाश्रुतिमूलत्वेनप्रामाण्यसम-
र्थनादियमपिस्मृतिःमूलश्रुतिमनुमापयंतीप्रमाणमितिपूर्वपक्षः । सर्वथाऽप्रामाण्यस्यान्याय्यत्वात्स्पर्शार्थंद्वित्रांगुलंहित्वा
तदितरसर्ववेष्टनरूपार्थांतरपरत्वंस्मृतेरितिभाट्टरीत्यासिद्धांतः । प्रभाकररीत्यातुस्पर्शनसर्ववेष्टनयोर्विरुद्धतयातत्कर्तव्यताबो
धकयोरपिविरुद्धत्वादन्योन्यग्राहिप्रत्यक्षेणतच्छेत्यानुमानस्यैवस्पर्शनश्रुतिप्रत्यक्षेणसर्ववेष्टनस्मृत्यनुमानस्यबाधान्मूलश्रु-
त्यभावेनाप्रामाण्यमितिसिद्धांतः । सूत्रार्थश्चश्रुतिस्मृतिविरोधेऽसतिस्मृतिःअनुमानंस्वमूलभूतश्रुत्यनुमापिका । तयो
र्विरोधेतुअपौरुषेयतयामूलानपेक्षंश्रुतिवचनमेवमानंस्यादिति तथाचतद्वदेवप्रकृतेऽन्यार्थत्वमप्रामाण्यंवास्यादित्यर्थः ॥
॥ **सार्वज्ञस्येति** ॥ तथाचाविवक्षितार्थतत्वज्ञानकरणपाटवयोर्हितोपदेष्टृत्वेनाविप्रलंभकत्वविवक्षयोर्लाभइतिभावः ॥
॥ **श्रुतेश्चेति** ॥ यदबुद्धिपूर्वकंतदप्रमाणंयथापिपीलिकालिपि अबुद्धिपूर्वकश्चवेदोअपौरुषेयत्वांगीकारात् अतोअप्रमाणमे-
वेतिभावः । तद्युदाहृतजैमिनिसूत्रविरोधइत्यतआह ॥ **क्वचिदिति** ॥ सर्ववेष्टनविषयइत्यर्थः । तदपिकुतइत्यतआह
**मूलमूलिनोरिति** ॥ उपजीव्योपजीवकयोरित्यर्थः । अतदर्थत्वंविष्णुजगत्कारणार्थत्वाभावः । नितरां निरति-
शयं ॥ ॐ **इतरेषांचानुपलब्धेः** ॐ ॥ अयोग्यजगत्कर्तृत्वाद्यपेक्षयाइतरेषांप्रत्यक्षयोग्यानांफलानांतदुक्तानुष्ठानेपिप्र-
त्यक्षतोनुपलब्धेश्च तद्विसंवादेनानाप्तोक्तत्वमितरस्मृतीनामित्यर्थः । ननुयोग्यानुपलब्धेरेवाभावग्राहकत्वेनायोग्यानांप्र-

त्यक्षानुपलब्ध्याभावनिश्चयायोगात्कथंफलादीनामितिभाष्यमित्यतआह ॥ **प्रत्यक्षयोग्यत्वमिति** ॥ पूर्वसूत्रसन्निधा-
पितरुद्रादिजगत्कारणत्वाद्यतींद्रियस्येतरेत्यत्रप्रतियोगित्वेनविवक्षितत्वादितिभावः । अतएवप्रागदृष्टादितरेषामित्युक्तं ।
यया स्वीकृतयासर्वात्मनाऽनुपलब्ध्या ॥ **सूचनादिति** ॥ तस्यानुक्तोपलब्धिसमुच्चायकत्वादितिभावः ॥ उपलब्धा
र्थेति ॥ उपलब्धःफलानर्थरूपोर्थोयस्यसतथा। सर्वस्यरुद्रकारणत्वप्रतिपादकभागस्य ॥ ॐ **एतेनयोगःप्रत्युक्तः** ॐ ॥
एतेनप्रागुक्तफलानुपलंभेनयोगशास्त्रमपिनिरस्तमित्यर्थः॥ **अभ्यासावस्थेति** ॥ अभ्यासावस्थायाउत्कर्षःसंपत्तिर्यस्मि-
न्कालेतस्मिन्नेवेत्यर्थः । तथाचकालांतरफलदर्शनेपितदुक्तकालेअदर्शनादप्रामाण्यमितिभावः ॥ १ ॥ अप्रयोजकत्व
माशंक्याह ॥ **अविद्यमानाभिधात्रीणामिति** ॥ नन्वेवमेकदेशाप्रामाण्येपिजगत्कारणत्वप्रतिपादकभागप्रामाण्यं
किंनस्यादित्यतआह ॥ **एवंचेति** ॥ एतदृष्टांतेनतस्याप्रामाण्यसाधनसौलभ्यादितिभावः ॥ ॐ **नविलक्षणत्वादस्य
तथात्वंचशब्दात्** ॐ ॥ अस्यश्रुतिपंचरात्रस्मृतिरूपशास्त्रस्यतथात्वं । पाशुपतादिवदप्रामाण्यंनास्ति । श्रुतेरपौरुषे
यत्वेनस्मृतेस्तदनुसारित्वेनततोविलक्षणत्वात् । तथात्वंचश्रुतेरपौरुषेयत्वं । स्मृतेस्तदनुसारित्वं चशब्दात् । वाचा
विरूपेतिश्रुतंभारतंपंचरात्रमितिस्मृतेश्चसिद्धमित्यर्थः । नित्येअपौरुषेये । ततःअदोषत्वात् ॥ **वेदादिप्रामाण्य
स्येति** ॥ यथार्थज्ञानजनकरूपत्वस्येत्यर्थः । तज्ज्ञानात् वेदादिज्ञानात् । कुतइत्यतआह ॥ **नहिनिर्दोषेति** ॥
निर्दोषश्रुतिरूपग्रहेतदनुसारिस्मृतिस्वरूपग्रहेचेत्यर्थः ॥ श्रुतिस्मृत्योः ज्ञानजनकत्वेतावन्नविवादः । निर्दोषत्वतदनु
सारित्वग्रहेयथार्थत्वशंकानवकाशत्वेनयथार्थज्ञानजनकत्वरूपप्रामाण्यग्रहेनाकिंचिदपेक्षेतिभावः । तथात्वं स्वतःप्रामा-
ण्यं । स्वतएव । संवादस्वरूपग्राहकेणैव । एवंसंवादांतरग्राह्यंप्रामाण्यं ॥ **नानवस्थेति** ॥ यत्रजिज्ञासाविरहस्तत्र

संवादानपेक्षणादितिभावः ॥ **ध्रौव्यादिति** ॥ तत्रसंवादापेक्षायामनवस्थैवेतिभावः ॥ **फलसंदेहेति** ॥ फलज्ञान प्रामाण्यसंदेहेत्यर्थः । तथाचात्रव्यभिचारान्नप्रामाण्यनिश्चयस्यप्रवृत्तिहेतुत्वमितिभावः ॥ **सापिनानिःशंकेति** ॥ तथाचप्रामाण्यनिश्चयस्यानिःशंकाप्रवृत्तिंप्रत्येवहेतुत्वोक्तेर्नव्यभिचारइतिभावः । यावच्छंकमित्यव्ययं सर्वत्रसंवादक प्रमाणेषु ॥ **क्वचिन्नोत्पद्यतइति** ॥ व्यासंगकोटिस्मरणाभावादिनेतिशेषः ॥ **कथमिति** ॥ शंकानिवृत्त्यर्थंसंवादपरं पराया आश्रयणीयत्वादितिभावः ॥ **द्वितीयोनिरस्तप्रायइति** ॥ ज्ञानस्यबुभुत्सितग्राह्यतयाज्ञातेचतस्मिन्नप्रामाण्या नुपलब्धौनिःशंकप्रवृत्तेःतस्याश्चप्रामाण्याध्यवसायाधीनत्वेनतदर्थंविशेषप्रमाणरूपाजिज्ञासाध्रौव्येततएवव्यासंगकोटिस्मरणा भावाद्यसंभवेनशंकाया आवश्यकत्वादितिभावः ॥ **स्वतस्त्वप्राप्तिरिति** ॥ संवादेनाप्रामाण्यशंकानिवृत्तौस्वरूपग्राहके णैवप्रामाण्यनिश्चयादितिभावः ॥ **शंकाभावेपीति** ॥ अप्रामाण्यशंकाशून्यसुखादिज्ञानप्रमाण्यज्ञानेपीत्यर्थः ॥ **संवादक मुभयत्रापीति** ॥ अप्रामाण्यशंकानिरसनेप्रामाण्यग्रहणेचेत्यर्थः कुतइत्यतआह ॥ **कल्पकेति** ॥ कल्पकंशंकते ॥ **बाधकवदिति** ॥ विसंवादवदित्यर्थः । तथाचतत्रयथाविसंवादकस्यप्रामाण्यशंकानिरासाप्रामाण्यज्ञापनयोर्व्यापार स्तथात्रकिंनस्यादित्यर्थः । तथाचतद्वदेवात्राप्यन्वयव्यतिरेकयोःप्रयोजकत्वमितिभावः । वैषम्यमाह ॥ **अप्रामाण्य शंकाशून्यस्येति** ॥ सुखादिज्ञानेअप्रामाण्यशंकाशून्यस्यसंवादाभावेपिप्रामाण्यस्यानुभूयमानत्वेनव्यतिरेकव्यभिचा- रान्नसंवादस्यप्रामाण्यज्ञापनेव्यापारइत्यर्थः ॥ **बाधकेनाविनेति** ॥ तथाचानन्यथासिद्धान्वयव्यतिरेकाभ्यांबाधक स्याप्रामाण्यज्ञापनेव्यापारइतिभावः । परतः संवादतः । अभ्यासदशापन्नज्ञानप्रामाण्येसिद्धिवारणायाभ्यासदशायामि त्युक्तं ॥ **प्रतिकूलतर्केति** ॥ अनवस्थारूपेत्यर्थः । स्वतस्त्वेस्वरूपग्राहकेणैवप्रामाण्यनिश्चयेनतत्संशयोनस्यादिति-

बाधकसत्वात्कथमनुकूलतर्काभावइत्यतआह ॥ **संशयस्येति** ॥ दोषात् अप्रामाण्यशंकारूपात् तथाचतर्कस्यान्य
थासिद्धिरितिभावः । प्राचीनतार्किकमतावष्टंभेनाह ॥ **स्वतस्त्वेनेति** ॥ बौद्धचार्वाकादिविप्रतिपत्याअनुमानादिप्रामाण्ये
पिसंशयदर्शनादित्यर्थः । यद्वालिंगादिज्ञानप्रामाण्यसंशयेनतज्जन्यानुमित्यादिप्रामाण्यसंशयदर्शनादित्यर्थः । यद्वालिंगो
पहितलैंगिकभानपक्षेअनुमितिप्रामाण्यस्यसादृश्याद्यतिदेशवाक्यार्थोपहितवाच्यत्वभानपक्षेउपमितिप्रामाण्यस्यस्वतस्त्वांगी
कारात्तयोःप्रामाण्ययोःस्वग्राहकज्ञानप्रामाण्यसंशयाहितसंशयदर्शनादित्यर्थः । तथाचानुभवसिद्धतत्संशयोपपत्तिवदत्रापि
तदुपपत्तिरितिभावः ॥ **भागासिद्धिंचाह** ॥ **अनभ्यासेति** ॥ प्रत्यग्रोत्पन्नसुखादिस्थलइत्यर्थः । नन्वथापिप्रामा
ण्यंपरतोज्ञायतेप्रामाण्याप्रामाण्यान्यतरमात्रकोटिकसंशयकोटित्वादप्रामाण्यवदित्याद्यनुमानेनपरतस्त्वासिद्धिरितिचेन्न ।
अस्यापिप्रतिकूलतर्कपराहत्याद्युक्तदोषलंघनाजंघालत्वादित्याशयेनाह ॥ **अलमिति** ॥ प्रकृतोपयोगाप्रतीतेराह
॥ अत्रेति ॥ अनेनेति ॥ मैवंतदुक्तानुपलब्धेरप्रामाण्यमितिव्याख्यायनित्यत्वरूपाविलक्षणत्वंचशब्दादेवेतिव्याख्यानेने
त्यर्थः ॥ उभयतइति ॥ नैवशब्दादित्यनेनचेत्यर्थः । तस्मैनूनमभिद्यवेवाचाविरूपनित्यया वृष्णेचोदस्वसुष्टुतिमि
तिश्रुतिंव्याचष्टे ॥ तस्माइति ॥ अभिद्यवइत्यस्यार्थःसर्वतःप्रकाशायेति वृष्णेइत्यस्यातिसमर्थायेति ॥ **स्वात्मा
नमिति** ॥ अनेनविरूपवाक्यमेवेदमितिसूचयति ॥ **अनादिनिधनतयेति** ॥ अन्यथापौनरुक्त्यमितिभावः ।
साक्षितया प्रामाण्यतया ॥ **श्रुत्युपपादनमिति** ॥ स्वतःप्रामाण्यनित्यत्वयोःसिद्धौवेदप्रामाण्यसिद्धिःतत्सिद्धौचप्रमाण
भूतवेदेनतत्सिद्धिरित्यन्योन्याश्रयप्रसंगादितिभावः ॥ **अप्रामाण्येति** ॥ पाशुपतादेरंगीकृते ॥ **आपादनमात्रस्य**
क्रियमाणत्वादिति ॥ तथाचवेदप्रामाण्यस्यएतदधिकरणपूर्वपक्षिणांगीकृतत्वान्नान्योन्याश्रयइत्यर्थः । **प्रकारांतरेण**

अन्योन्याश्रयंपरिहरति ॥ युक्तेश्चेति ॥ भाष्येआप्त्यनिश्चयान्नित्यत्वापेक्षत्वाच्चमूलप्रमाणस्येतिदेवतानयेवेदनित्यत्वे अन्यथानवस्थितेरित्यत्रप्रामाण्यस्यस्वतस्त्वेचयुक्तेश्चोपन्यस्तत्वादित्यर्थः । तथाचयुक्तिसिद्धार्थेश्रुतेःसंवादित्वेनोपन्यासान्नान्योन्याश्रयइतिभावः । तदेवाविद्यमानाभिधायकत्वमेव । अत्रदोषएवनेत्यत आह ॥ अग्रमेवेति ॥ उक्तस्यादर्शनमितियद्यमेवेत्यर्थः ॥ ॐ दृश्यतेतु ॐ ॥ अधिकारिणांवेदोक्तफलंदृश्यतेउपलभ्यतइत्यर्थः ॥ योग्यानामिति ॥ तत्फलइतिशेषः । उपलक्षणमेतत् । तत्कर्मवैगुण्यादिप्रतिबंधकशून्यानामित्यपिद्रष्टव्यं । अप्रामाण्यप्राप्तेरेवेति । अन्यथा विप्रलंभकवाक्यस्याप्येवंप्रामाण्यंस्यादितिभावः । कोयमधिकारोयद्वतांफलदर्शनमितरेषांतदभावइत्यपेक्षायामाह ॥ अधिकारित्वमिति ॥ अन्योपलक्षणमिति । अयोग्यत्वोपलक्षणमित्यर्थः ॥ २ ॥ पूर्वोक्तंउभयविधवाक्यदर्शनं तथात्वेपीत्यस्योत्तरमाह । मृद्ब्रवीतीति । आदिसृष्टावेवेति ॥ उदाहृतवाक्यानांसृष्टिप्रकरणस्थत्वादितिभावः ॥ ॐ अभिमानिव्यपदेशस्तुविशेषानुगतिभ्यां ॐ ॥ मृदब्रवीदित्यादावभिमानिचेतनस्यैवव्यपदेशोनजडस्य नन्वभिमानिन्याअप्रत्यक्षत्वंपृथिव्यादिवस्त्वंतरमधिष्ठायवचनादिकंचकथं । कथंचपरिच्छिन्नानेकाभिमन्यमानगतत्वमित्यतउक्तं ॥ विशेषानुगतिभ्यामिति ॥ विशिष्यतइतिविशेषःशक्तिः अनुगतिःव्याप्तिःताभ्यामित्यर्थः ॥ अवधारणइति ॥ तस्यचवृथ्याविवेकेनाभिमानिपदेनान्वयः । ननुनयुक्तिविरोधमात्रेणश्रुतेरन्यार्थकत्वंकल्प्यते । किंतुयुक्त्युपजीव्यप्रत्यक्षविरोधादित्यत आह ॥ नचेति ॥ आदिकालीनमृदादीनामेवश्रुत्यावचनादिकमुच्यतेतेषांचनास्मदादिप्रत्यक्षत्वमितिनप्रत्यक्षंश्रुत्युपजीव्यमितिप्रागेवोक्तमित्यर्थः ॥ अन्यार्थकल्पनइति ॥ तदधीनत्वादिन्यायेनमृदादिशब्दानामभिमन्यमानानांमाभिमानिष्वेवमुख्यत्वेनमृदादिशब्दानांमुख्यार्थलाभादित्यर्थः । तथाचमुख्यार्थलाभायैवान्यार्थग्रहणंनयुक्तिविरोधभी

त्येतिभावः । नाभिमानिदेवताःसंतीत्यन्वयः ॥ **वचनाद्ययोगेति** ॥ शरीराद्यभावेवागाद्यभावादितिभावः । उक्तंतथा हीत्यनेन देवतेतितासामितिचवैरूप्येणमयोगेहेतुमाह ॥ **अत्रेति** ॥ ननुसूत्रेअभिमानिनीनांव्यपदेशइतिसंभवात्कैकव चनमित्यतआह ॥ **दृश्यतेचेति** ॥ अभिमानिन्याइत्येकवचनांतविग्रहस्यग्राह्यत्वमितिभावः । ननुतासांसामर्थ्यमिति भाष्येणदृश्यतेचेतिसूत्रेसामर्थ्यस्यैवकर्मत्वमुच्यते नदेवतायाइतिकथंतदत्रविग्रहज्ञापकमित्यतआह ॥ **दृश्यंतइति** ॥ तत्रताइतितच्छब्देनदेवतानामपिपरामर्शादितिभावः ॥ ॐ **दृश्यतेच** ॐ ॥ अभिमानिदेवतातत्सामर्थ्यंचयोगिभिरुपल भ्यतेचेत्यर्थः ॥ **कुतइति** ॥ महद्भिः दृश्यतइत्येतत्कुतःप्रमाणादस्माभिर्ज्ञेयमित्यर्थः । महद्भिरित्येतत्स्वारस्यानु- सारेणाह ॥ **अथवेति** ॥ **अभ्युपगमइति** ॥ अभ्युपगमरूपमूलंदृश्यतेचेतिसूत्रेणोच्यतइत्यर्थः । एवंतासामितिभा ष्यमाकांक्षाक्रमेणाद्विधायोजयित्वाइदानींयथाक्रमेणयोजयति ॥ **अथवेति** ॥ अत्रमृदब्रवीदित्यादौ ॥ ३ ॥ नन्वत्र शून्यस्यकारणत्वनिषेधपरतयाश्रुतिसूत्रव्याख्यानमभावस्यचभावोपिधर्मोथापिहिधर्मिणइत्यनुव्याख्यानविरुद्धं । तत्रवि ध्वप्रागभावस्यैवकारणत्वनिषेधपरतयाव्याख्यानादितिचेन्न । श्रुतिसूत्रयोरनेकार्थत्वेनैकार्थमभ्युपेत्यप्रवृत्तग्रंथयोर्विरोधाभा वात् वक्ष्यमाणत्वात् अर्थाद्युक्तिविरोधइतिभाष्यव्याख्यानावसरे ॥ ॐ **असदितिचेन्नप्रतिषेधमात्रत्वात्** ॐ ॥ असद्वेतिश्रुतावसच्छून्यंकारणत्वेनोच्यतइतिचेन्न । तस्यकेवलप्रतिषेधप्रतीतिविषयत्वेनशशविषाणवत्कारणत्वानुपपत्ते रित्यर्थः ॥ **तस्येति** ॥ घटादौनास्तीति बुद्धिविषयत्वसत्त्वेपिकारणत्वस्यैवसत्त्वाद्व्यभिचारइत्युक्तं ॥ **स्वरूपतएवेति** ॥ भावधर्मात्मकतामंतरेणेत्यर्थः । घटादेश्चप्रतियोगित्वरूपभावधर्मात्मकत्वेनैवतथात्वमितिनदोषः । स्वरूपतएवप्रतिषे धबुद्धिविषयत्वंप्रागभावेवर्ततेतत्रकारणत्वमेवास्तीतिव्यभिचारइत्यतउक्तं । अभावधर्मात्मकतामंतरेणेति । प्रागभावत्व

रूपाभावधर्मात्मकत्वेनैवप्रतिषेधबुद्धिविषयोनतदंतरेणेतिनदोषः । तथेत्यनंतरंसिद्धांतिनेतिशेषः ॥ **अर्थांतरइति** ॥
शून्यकारणत्वविषयत्वइत्यर्थः ॥ ॐ **अपीतौतद्वत्प्रसंगादसमंजसं** ॐ ॥ असतःकारणत्वेअपीतौप्रलये तद्वत्
प्रसंगात् तन्मात्रावशेषप्रसंगात् । असत्कर्तृत्वमतमसमीचीनमित्यर्थः ॥ ॐ **नतुदृष्टांतभावात्** ॐ ॥ नप्रलये
असन्मात्रावशेषोअभ्युपगंतुंशक्यते । तदानींपदार्थसत्वसाधकानुमानेदृष्टांतभावात् दृष्टांतसद्भावादेवेत्यर्थः । दृष्टांत
मात्रस्यासाधकत्वादाह ॥ अत्रैताविति ॥ ॐ **स्वपक्षदोषाच्च** ॐ ॥ स्वपक्षेसर्वासत्वसाधनेदृष्टांताभावरूपदोषाच्चेत्यर्थः
॥ **परंपरयेति** ॥ विमतंप्रलयेअसद्भवितुमर्हतिभावत्वान्नष्टभाववदितिपरंपरयेत्यर्थः । तर्हियत्रसर्वासत्वाभावःतत्रप्रल
यकालत्वाभावः यथास्थितिकालइतिव्यतिरेकोऽस्त्वित्यतआह ॥ **व्यतिरेकइति** ॥ स्थितिकालःअतीतानागतसकल
पदार्थोपेतः स्थितिकालत्वाद्व्यतिरेकेणप्रलयकालवदित्यपिव्यतिरेकसंभवादतिप्रसंगइत्यर्थः ॥ **एतेनेति** ॥ विमतंस्थिति
कालेऽप्यसद्भवितुमर्हतिभावत्वादतीतभाववदित्यतिप्रसंगेनेत्यर्थः ॥ ॐ **तर्काप्रतिष्ठानादन्यथानुमेयमितिचेदेवम**
**प्यविमोक्षप्रसंगः** ॐ ॥ तर्कस्यानुमानस्याप्रतिष्ठानादव्यवस्थितत्वेनाप्रमाणत्वात् अन्यथाअसतःकारणत्वादिरूपे
णापिअनुमेयमनुमानुंशक्यमितिचेन्न । एवंसतितर्कस्याप्रामाण्यांगीकारेमोक्षाभावप्रसंगइत्यर्थः । ननुत्वयाअसतःकारण
त्वेनिरस्यस्तेतर्कोऽभिहितो नित्यया अस्माभिस्तर्कोउपन्यस्तस्तद्दूषणायत्वयापुनस्तर्काभिधानमनुचितं किंचास्मत्तर्कएवत्वत्तर्क
बाधकानतुत्वदीयोऽस्मदीयस्येत्यतआह ॥ **नहीति** ॥ प्रामाणिकतर्कातिरिक्तप्रमाणप्राप्तं युक्तएवेति सत्कारणत्वंतुनैवमितिभावः ।
बाधो समर्थो समर्थप्रयोजनाभावादितिभावः ॥ **शास्त्रमंतरेणापीति** ॥ तथाचनतेनसमर्थयित्वमितिभावः । सोपिमोक्षसाध
कोऽपि यथाचार्वाकेणानुमानप्रामाण्यमपिनाभ्युपगतं तथापितत्रसंवादेनप्रामाण्यव्यवहारमात्रंतेनांगीकृतंअतएवमुक्तिः ।

यथोक्तं संवादेनचप्रामाण्याभिमानइति ॥ विरुद्धाविति ॥ परस्परमितिशेषः ॥ उभावपीति ॥ किंत्वेकंप्रामाणिकमप
रमप्रामाणिकमित्यर्थः । इत्यंगीकार्यमितिशेषः । तर्हिविप्रतिपन्नोत्पत्तिः सतोभवितुमर्हतीतिप्रकृततर्कएवाप्रामाणिकः
सन्प्रतितर्कबाध्योस्त्वित्यतआह ॥ प्रकृततर्केति ॥ ॐ एतेनशिष्टाअपरिग्रहाऽपिव्याख्याताः ॐ ॥ एतेन
दृष्टांतभावेनाभावेनशिष्टाअवशिष्टाअपरिग्रहाःवेदपरिग्रहरहितातद्विरुद्धाश्चाकारणत्वादिवादानिरस्ताइत्यर्थः ॥ नसंमनभि
त्ति ॥ तस्यापीश्वरजन्यत्वादितिभावः ॥ वक्ष्यमाणेत्ति ॥ द्वितीयपादइतिशेषः ॥ तृतीयानुप्रवेशादीति ॥
आदिपदेनतत्पादानंतर्भावग्रहणं ॥ पूर्ववदिति ॥ अर्थाद्युक्तिविरोधोपीत्युक्तरीत्येत्यर्थः ॥ अन्येष्वपीति ॥ जी
वकर्तृत्वेनाभिमतघटादिष्वित्यर्थः ॥ घटादीनांजीवकर्तृत्वाभावइति ॥ यदिघटादीनांजीवकर्तृत्वंनस्यात्तर्हिविम
तंचेतनकर्तृकंकार्यत्वादित्यनुमानेदृष्टांताभावःस्यात् । नचेष्टापत्तिः । तथात्वेअचेतनकर्तृत्वनिषेधाभावापत्तेरित्यर्थ
॥ अस्वातंत्र्यमित्युक्तमिति ॥ तथाचघटादौपराधीनजीवकर्तृत्वानिषेधान्नोक्तानुमानेदृष्टांताभावः ॥ ४ ॥ ॐ भो-
क्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॐ ॥ भोक्तुर्जीवस्यापत्तेर्ब्रह्मत्वप्राप्तेरेकीभवंतीतिश्रुत्युक्तत्वेनतयोरविभागःभे
दाभावइतिचेन्नस्याल्लोकवत् । यथालोकेस्थानैक्याभिप्रायेणोदकेउदकस्यैकीभावव्यवहारस्तथैकीभावव्यवहारः स्यादि-
त्यर्थः ॥ उभयगतेनेति ॥ विरुद्धधर्माधिकरणयोरैक्यायोगाज्जीवस्यअसर्वकर्तृत्वादित्यागेनेश्वरगतसर्वकर्तृत्वादि
सालक्षण्यग्रहणेनेश्वरस्यवासर्वकर्तृत्वादित्यागेनजीवगतासर्वकर्तृत्वादिसालक्षण्यग्रहणेनेत्यर्थः ॥ सर्वथेति ॥ आद्येति
व्याप्तेःद्वितीयेसंभवादित्यर्थः ॥ कर्माणीति ॥ पूर्वोक्ताकालाद्यभिमानिदेवताः कर्माणितदभिमानीपुष्करःविज्ञानस्व
रूपआत्माजीवश्चेत्येतेसर्वे अव्ययेपरेब्रह्मणिएकीभवंति संश्लिष्टाभवंतीत्यर्थः । अतश्चकिमितिप्रश्नोत्तरमाह ॥ तेनैवेति ॥

जीवईश्वराभिन्नः तथाश्रुत्युक्तत्वादित्यत्रव्याप्तिमाह ॥ **योयथेति** ॥ मुक्तजीवस्यानिर्धर्मकत्वेनसर्वकर्तृत्वादिविरुद्धधर्मा
भावात्तदभिन्नस्येश्वरस्यसर्वकर्तृत्वानिर्वाहः संभवतीत्याशयेनशंकते ॥ **मुक्तजीवाभिन्नस्येति** ॥ विरुद्धधर्माभावेपिनि
र्धर्मकाभिन्नस्यसर्वकर्तृत्वरूपधर्मनिर्वाहासंभवात्कथंचिदित्युक्तं । निर्वोढुं निर्वहितुं । कुतइत्यतआह ॥ **नहीति** ॥
नहिघटाभिन्नःपटःकदापिघटाभिन्नतांयातीत्यर्थः । तर्हिश्रुतेःकागतिरित्यतआह ॥ **ऐक्योक्तिस्त्विति** ॥ स्वातं
स्वेच्छया । नात्रश्रुतेरुपचरितार्थत्वमुच्यतइत्यतआह ॥ **एवंमुनेरिति** ॥ एवंविजानतांमुनीनामात्माधिपतिब्रह्मा
मुक्तः परमात्मानंप्राप्यतादृगेवभवतिकिमुतान्यइत्यर्थः । एतेनश्रुत्युदाहरणेन आंतरानुपपत्तिंचाह ॥ **निरंजनइति** ॥
॥ **सन्निहितेति** ॥ एकीभवंतीत्येतत्समीपस्थेत्यर्थः । तत्रक्रमेणसारूप्यसामीप्ययोर्भेदाविनाभूतयोरुक्तेरितिभावः यथा
तासंभवादाह ॥ **इत्युक्तोपीति** ॥ अध्याहारभयादाह ॥ **मुक्तोपीति** ॥ अत्रपरमात्मनेत्यस्यतत्प्रसादेनेत्यर्थोबोध्यः
तादात्म्यंमुक्तिरित्यत्रचतुर्थतात्पर्योदाहृतप्रमाणमाह ॥ **हराविति** ॥ तादात्म्यंहारिणेतियोज्यं । हरावित्यनेनतास्मिन्ह
आत्माअंतःकरणंनियतंयत्रभवतितत्तदात्मंतदेवतादात्म्यमितिवातस्यहरेरात्मादेहोयत्रप्रवेशस्थानंभवतितत्तदात्मंतदेवत
दात्म्यमितिवातादात्म्यंमोक्षइत्युक्तंभवति ॥ **अल्पेति** ॥ अधमेत्यर्थः । एतन्नासौभवतीत्यादिकं ॥ **वर्तमानेति**
नाश्रुत्वंर्नानिवर्तमाननिषेधादित्यर्थः ॥ **फलाध्यायेति** ॥ चतुर्थाध्यायएवमुक्तिरूपफलविचारादितिभावः ॥ **चेतन**
**चेतनेति** ॥ यदुक्तंप्रकृतिनयेब्रह्मणश्चेतनाचेतनात्मकप्रपंचोपादानत्वेनतदभिन्नत्वमिति । तदयुक्तं । तथात्वेभोग्या
घयादिपदाभिधेयाचेतनस्यभोक्तृविषयिशब्दाभिधेयचेतनत्वप्रसंगात् । यद्यदभिन्नाभिन्नंतत्तेनाभिन्नमितिव्याप्तेः । तथा
चाचेतनोभोग्यश्चेतनोभोक्तेतिव्यवस्थानस्यात् नचेष्टापत्तिः प्रत्यक्षसिद्धत्वादित्यर्थः ॥ **समुद्रेति** ॥ यथाफेनतरं-

गादेःसमुद्राभिन्नत्वेनपरस्परमैक्येपिव्यावहारिकभेदेनान्योन्यव्यवस्थातथेहापीत्यर्थः ॥ युक्तिविरोध परिहारेपीति ॥
प्रथमालिंक्रमेकारणाभावादितिभावः ॥ ब्रह्मात्मकत्वनिरासेनेति ॥ प्रकृतिनयादिभाष्योक्तदिशाब्रह्मोपादानकत्वा
भावेनतदात्मकत्वेनिरस्तेउक्तशंकायाएवानुदयान्नतत्समाधानायान्यथाव्याख्यानंयुक्तमित्यर्थः । भोग्यस्यभोक्तृत्वापत्ते
रितिव्याख्यानेअश्रुतकल्पनंचेत्याह ॥ भोक्तृत्वेति ॥ ५ ॥ तस्यजगत्कर्तृत्वस्य तेनयुक्तिविरुद्धत्वलक्षणेन
साध्यवैकल्यंपरिहरति ॥ घटस्रष्टाविति ॥ ॐ तदनन्यत्वमारंभणशब्दादिभ्यः ॐ ॥ स्वतंत्रसाधनस्यतदन
न्यत्वंब्रह्मानन्यत्वं तदतिरिक्तंस्वतंत्रसाधनंनास्तीतियावत् आरंभणमुपादानंतदभावप्रतिपादकश्रुतेः अपरतंत्रत्वा
दियुक्तिभिश्चेत्यर्थः । किमुक्तंभवतीतिप्रश्नोत्तरमाह ॥ स्वरूपसामर्थ्यादेवेति ॥ नतुसाधनांतरापेक्षयेत्यर्थः ।
आक्षेपमात्रस्याभिमतसाधकत्वाभावादाह ॥ विपर्ययेपर्यवसानादिति ॥ नकिंचिदित्यादिरूपेणेत्यर्थः
॥ सिद्धसाधनतेति ॥ ईश्वरस्यस्वतंत्रसाधनसापेक्षतांगीकारादितिभावः । यतोभूमिंजनयन्विश्वकर्मा विद्यामौर्णोन्महि
नाविश्वचक्षाइत्युत्तरार्धेनसहकिंस्विदितिश्रुतिंव्याचष्टे । विश्वकर्मेति । वीत्युपसर्गाद्धभूवेतिशेषोक्तिः । येनच आधिष्ठा
नादिना और्णोदित्यस्यार्थः ॥ आवृणोदिति ॥ भूमिंद्यामितिवर्तते कतमत्स्विदिति किमित्यर्थः । कथेत्यस्यार्थःकथंरूपमि
ति ॥ समत्वादिति ॥ कुत्साप्रश्नवितर्केषुक्षेपेकिंशब्दइष्यतइत्युक्तेरितिभावः ॥ किंस्विद्धिमस्येति ॥ हिमस्य
भेषजमौषधंनिवारकंकिंस्वित्किमित्यादिप्रश्नस्याग्निर्हिमस्यभेषजमित्यादिपरिहारवदित्यर्थः । युक्तिभिरितिबहुवचनघट
नायाह ॥ अत्रेति ॥ ईश्वरःस्वतंत्रसाधनंनापेक्षतइतिप्रतिज्ञायामित्यर्थः । अपरतंत्रत्वात् परसापेक्षत्वाभावात् ।
स्वतंत्रत्वात्स्वेच्छानुसारित्वात् अतोनाभेदः ॥ ॐ भावेचोपलब्धेः ॐ ॥ ईश्वरातिरिक्तस्वतंत्रसाधनस्यभावेसत्वे

उपलब्धेःप्रसंगः प्रमाणैरुपलभ्येतेतियावत् । तर्हिवेदानुक्तानांरमोपास्यानांगुणादीनामभावप्रसंगइत्यतआह ॥ भगव-
दिति ॥ कतिपयगुणादीन्विशिष्योक्त्वाइतोन्येपिसंतीतिप्रतिपादनेसामान्यतः श्रुत्युक्तत्वंप्राप्तमितिभावः । अवष्टभ्यआ
श्रित्य ॥ ॐ सत्वाच्चावरस्य ॐ ॥ अवरस्यभगवदधीनस्यसत्वादेवनाद्यइत्यादिविरोधइत्यर्थः । अद्भ्यःसंभूतःपृथि
व्यैरसाच्चविश्वकर्मणःसमवर्तताधि तस्यत्वष्टाविदधद्रूपमेतितत्पुरुषस्यविश्वमाजानमग्रइतिश्रुतिंव्याचष्टे ॥ तत्पुरुषा-
ख्यइति ॥ अवादीत्यादिपदेनपृथिवीतन्मात्राभिर्भूतगुणैःशब्दादिभिःआजानमित्यस्यार्थोजातइति । अथशब्दोहेत्व
र्थइत्याशयेनाह ॥ यस्मादिति ॥ उच्यते एकोनारायणआसीदित्यादौ ॥ साधनाद्यपेक्षेति ॥ किंस्विदासीदि
त्यादिसाधनाक्षेपः अद्भ्यः इत्यादिनाचतद्भावः । नह्येतद्द्वयंप्रकारांतरेणयुक्तं । अतःस्वातंत्र्येणनास्तितदधीनतयास्तीत्ये
वांगीकार्यंतथाचेदमपिनन्वित्यादिचोद्योत्तरमित्यर्थः ॥ ॐ असद्व्यपदेशान्नेतिचेन्नधर्मांतरेणवाक्यशेषात् ॐ ॥
नासदासीदितिप्रलयेसर्वासत्वप्रतिपादनेनसाधनस्यैवाभावान्नतस्येश्वराधीनत्वमितिचेन्न । स्वतंत्रत्वादिधर्मांतरेणैवासत्व
व्यपदेशोनस्वरूपेण । तदभावात् कुतः तमआसीदितिवाक्यशेषेप्रकृत्यादिसत्वप्रतिपादनेनतदन्यथानुपपत्तेरित्यर्थः ।
नासदासीन्नोसदासीत्तदानींनासीद्रजोनोव्योमापरोयत् । किमावरीवःकुहकस्यशर्मन्नंभःकिमासीद्गहनंगभीरं नमृत्युरा
सीदमृतंनतर्हिनराव्या अन्हआसीत्प्रकेतः आनीदवातंस्वधयातदेकंतस्माद्धान्यंनपरःकिंचनासेतिश्रुतिंव्याचष्टे ॥ तदा-
नीमिति ॥ यदन्यद्द्यावोश्चांतरिक्षाच्चेत्तत्सदितिवाय्वंतरिक्षंचासदितिश्रुत्यनुसारेणासच्छब्दस्यवाय्वाकाशपरत्वात्सच्छब्द
स्यपृथिव्यप्तेजःपरत्वादाह ॥ पंचभूतानीति ॥ रजःशब्दउपलक्षकइतिभावेनाह ॥ गुणत्रयमिति ॥ परंव्योमा
व्याकृताकाशमितितत्वोद्योतटीकायांव्याख्यातत्वेपिसाधनसत्वाक्षेपप्रकरणादत्रपरंव्योमप्रकृतिरितिव्याख्यानं । तर्हितदा

नीमितिस्पष्टत्वान्नोक्तं । प्रकेतइत्यस्यार्थःप्रभावइति कुहेत्यस्यकुत्रेति शर्मन्नित्यस्यसुखार्थमिति आवरीवइत्यस्यावर्त
तेति निवातं वातप्रेरणांविना ॥ विकृतेति ॥ महदाद्यात्मनापरिणतरूपंनासेत्यर्थः ॥ धर्मांतरापेक्षयेति ॥
व्यक्तंनासीदित्यादिध्येयम् । तमआसीत्तमसागूळ्हमग्रेप्रकेतंसलिलंसर्वमाइदमितिवाक्यंव्याचष्टे ॥ यत्तमइति ॥
आइत्यस्यार्थोअपरिमितमिति अप्रकेतंप्रभावरहितमितिस्फुटं । अन्यथास्वरूपतोअसत्वे व्यवहारं अयंभोक्ताइदंभोग्य
मितिलौकिकैःक्रियमाणं ॥ वाचारंभणमिति ॥ विकारोनामधेयंविकारिसर्वंजगत् वाचारंभणंवागालंबनमा
त्रंनवस्तुतोब्रह्मव्यतिरेकेणास्तीतितदाभिमतोर्थः । अजामेकांलोहितशुक्लकृष्णांबह्वींप्रजांजनयंतींसरूपामितिपूर्वार्धेनसहा
जोह्येकइतिश्रुतिंव्याचष्टे ॥ रजःसत्वेति ॥ तर्हिजीवेशभेदेकिमायातमित्यतआह ॥ अत्रेति ॥ तस्यापिगुहाधिकरण
न्यायेनभोगस्यसर्वदातदबद्धत्वरूपत्यागस्यचसद्भावात् क्रियाप्रबंधेलडितिस्मरणादितिभावः । प्रकृतोपयोगमाह
॥ नित्यमबाध्यमिति ॥ एतेनदृष्टानुसारेणेत्यनेन ॥ श्रुतियुक्तिभ्यामिति ॥ एकैकया असिद्धत्वेपिसमुचितयोर
नेकत्वेनप्राबल्यात्तत्सिद्धिर्भविष्यतीतिभावः ॥ तत्तोपीति ॥ अनेकत्वापेक्षयास्वभावबलीयस्त्वस्यतयोःस्वभावोबलवा
नितिप्रमाणसिद्धत्वादितिभावः ॥ आभासत्वाच्चेति ॥ तथाचनानेकत्वेपिप्राबल्यमितिभावः । अनाद्यनंतमित्या
दिबहुप्रमाणोदाहरणानुरोधेनाह ॥ प्रबलबहुप्रमाणेति ॥ विभज्याविविच्य तदर्थेप्रतीयमानार्थे अनुभवस्य
शास्त्रविशिष्टत्वाभावादाह ॥ तदनुकूलइति ॥ शास्त्रार्थविषयतयाशास्त्रानुकूलइत्यर्थः ॥ तत्साधनत्वेति ॥
ज्ञानावरत्वेहेतुः एवमनुप्रमाणस्येत्याद्यपि सर्वविषयेप्रत्यक्षादुत्तमत्वे प्रमाणांतरत्वेति प्रत्यक्षावरत्वेहेतुः ॥ ॐ युक्तेः
शब्दांतराच्च ॐ ॥ स्वेच्छयासाधनांतरोपादानस्य युक्तेः युक्तत्वात् महिमाऽविरोधित्वादितियावत् । प्रागुक्त

शब्दितोनास्यशब्दस्यतदावेदकस्यसत्वाच्चनसाधनाभावोवाच्यइत्यर्थः ॥ लोकसिद्धत्वादिति ॥ स्वाधीनभृत्यादि-
सापेक्षप्रवृत्तेः राजादेर्दृष्टत्वादितिभावः ॥ साम्येनेति ॥ दृढांगस्यलीलयादंडंग्रहीत्वागच्छतस्तन्निरपेक्षत्वप्रसिद्धेरि
तिभावः ॥ आधिक्योत्कर्षेणेति ॥ सकलवैभवेनराजगमनस्यतद्धेतुत्वदर्शनादितिभावः । राज्ञस्तत्सत्वात्तथास्तुप्रकृते
साधनभावेनेत्यतउक्तं ॥ साधनसत्वाभ्युपगमेनेति ॥ उक्तरीत्येतिशेषः । अद्भ्यःसंभूतोहिरण्यगर्भइत्यष्टावितिश्रु
तिः । हिरण्यगर्भःअनुपलक्षितैःभूतैःसंभूतइति । कलामुहूर्ताःकाष्ठाश्चाहोरात्राश्चसर्वशः अर्धमासामासाऋतवः संवत्सर
श्चकल्पंतामित्यनेनोक्ताः कल्पाद्यष्टौदेवताश्चसंभूताइतितत्वप्रदीपेव्याख्याता ॥ प्रतीतिश्चेति ॥ ईश्वरकर्तृकहिरण्यगर्भ
सृष्ट्यावेदवाक्यसाधनांतरप्रतीतिरित्यर्थः ॥ प्राचीनेति ॥ अद्भ्यःसंभूतःपृथिव्यैरसाच्चेत्यादीत्यर्थः ॥ ॐ पठवच्च ॐ ॥
पटस्यसूत्रसाधनांतरसापेक्षत्वेत्यर्थः ॥ ॐ यथाप्राणादिः ॐ ॥ यथाप्राणदेहेंद्रियादिकंप्रेरणार्थमीशेनानुप्रविष्टत्वेनास्य
नेतृत्वेदंसाधनजातमपीत्यर्थः । ननुतत्रप्रवेशमात्रमुच्यतेनप्रेरणार्थमित्यतआह ॥ अन्यथेति ॥ ६ ॥ तदनंतरं एते
तदनंतरं । अतएवकौडिन्यादिव । अनुभवात् घटादिकार्यं भ्रांतइति भावक्तःभ्रांतिरित्यर्थः ॥ एवंचेति ॥
महदादिकं अन्यानधीनजीवकर्तृकंकार्यत्वाद्घटवदितिप्रयोगादितिभावः ॥ ॐ इतरव्यपदेशाद्धिताकरणादिदोष
प्रसक्तिः ॐ ॥ इतरस्यजीवस्यजीवाद्ब्रह्मेत्यत्रकारणत्वेनव्यपदेशात्तस्यस्वतंत्रकारणत्वमितियदितर्हिहिताकरणाहित
करणादिदोषप्रसक्तिः ततस्यनस्यातामितियावत् । नहिस्वतंत्रस्यतद्द्वयंयुक्तं । ईश्वराधीनकर्तृकत्वेचसयथाकारयति
तथाकरोतीतिनदोषत्वमितिभावः ॥ नियमादिति ॥ लोकेप्रासादादिमहाकार्यकर्तुः श्रमादेःदर्शनादितिभावः ।
॥ ॐ अधिकंतुभेदनिर्देशात् ॐ ॥ ब्रह्मतुअधिकशक्त्यादिमत्वेनजीवतोभ्यधिकं श्रोतेत्यादिनाभेदस्याखिलश्रोतृ

त्वाद्यतिशयस्यनिर्देशादित्यर्थः ॥ **ईश्वराभ्युपगमेति** ॥ अभ्युपगमेतत्साधकमानविरोधः । तेनकर्तृत्वेनैवसिद्धेः अनभ्युपगमेदृष्टांताभावइत्यर्थः ॥ **परसिद्धेनैवेति** ॥ तथाचनेदंसाधनानुमानं किंतुदूषणानुमानं यदीश्वरोनन्यापेक्षयाजगत्कर्तातर्हिचेतनत्वाज्जीवोपितथैवजगत्कर्तास्यादितिपरसिद्धेनैवपरस्यबोधनादित्यर्थः । यथाहुःपरसिद्धेर्दूषणमिति ॥ ॐ **अश्मादिवच्चतदनुपपत्तिः** ॐ ॥ जीवस्यचेतनत्वेप्यश्मादिवत्पाषाणादिवत्अस्वतंत्रत्वेनस्वतंत्रकारणत्वानुपपत्तिरित्यर्थः । तर्हिकथंनिर्णयइत्यतआह ॥ **स्वतंत्रोहीति** ॥ स्वरूपप्रमितिप्रवृत्तिषुपरानपेक्षत्वंहिस्वतंत्रत्वं कार्यकरणेपरानपेक्षत्वंचतदेकदेशभूतं प्रवृत्तौपरानपेक्षरूपत्वात् समुदायत्वेनैकदेशसाधनंचसंगतं । शतवत्वेनपंचाशत्वसाधनात् अतस्तदेवप्रयोजयकमित्यर्थः ॥ **अपिशब्दार्थइति** ॥ तथापीत्यर्थइत्यर्थः । एतेनजीवस्यास्वातंत्र्यप्रयुक्ताकर्तृत्वकथनेन ॥ **कर्मसापेक्षत्वेति** ॥ जीवस्यास्वतंत्रकर्तृत्वेपिनहिताक्रियादिदोषप्रसक्तिः स्वीयहितक्रियादिप्रतिबंधकवशात्तदुपपत्तिरित्यर्थः । भाष्येइच्छानुसारेणकदाचिदेकमंगंकदाचित्सर्वाण्यंगानिइंगयतिचेष्टयतइत्यर्थः । पूर्वार्धंचिंसूचयन्नेवाह ॥ **अस्वातंत्र्यस्येति** ॥ ॐ **उपसंहारदर्शनान्नेतिचेन्नक्षीरवद्धि** ॐ ॥ जीवेउपसंहारस्यआरब्धकार्यसमापनस्यदर्शनान्नस्वतंत्रकर्तृत्वानुपपत्तिरितिचेन्न । क्षीरवत् यथागोष्ठुद्दश्यमानंक्षीरंप्राणाधीनंतथाजीवेप्रतीयमानमपितदीशाधीनमित्यर्थः । अवसाययति समापयति ॥ ओं **देवादिवदपिलोके** ओं ॥ देवादीनामिवसतोपीश्वरस्यानुपलंभोयुक्तः । तेषांतादृशसामर्थ्येनादृश्यत्वेपीशस्यतत्कुतइत्यतउक्तं ॥ **अपिलोकइति** ॥ पिशाचादीनामपितादृशसामर्थ्यमस्तिकिम्वीश्वरस्येत्यर्थः ॥ **तच्चेति** ॥ अभिमान्यधिकरणेतादृग्देवसत्वंप्रतिपादितमित्यर्थः । तदभावात् अश्रुतकल्पनाभावात् युक्तीनामित्यत्यध्याहारंविनायोजयति ॥ **वाक्यानामिति** ॥ ओं **कृत्स्नप्रसक्तिर्नि-**

वयवत्वशब्दकोपोवा ओं ॥ जीवःसर्वकार्येषुसर्वसामर्थ्येनप्रवर्ततेएकदेशेनवा नाद्यः तृणादानादावपकृत्स्न-सामर्थ्यप्रसक्तेः नाद्वितीयः निरंशत्वप्रतिपादकश्रुतिविरोधादित्यर्थः । अयमित्यनुवादः । एतेननिरंशत्वश्रुतिव्याकोपेन ॥ कार्यानुसारेणेति ॥ शिलोद्धरणेसर्वशक्त्याप्रवृत्तिःतृणोद्धरणेएकदेशेनप्रवृत्तिरित्यर्थः । उपहितःउपाधिविद्धः ॥ सर्वस्येति ॥ महारजनाद्युपाधेःस्वासंबद्धभागादेवभेदकत्वादितिभावः ॥ स्वाभाविकांशत्वेति ॥ अन्यथोपाधिसंबंधात्पूर्वंअंशव्यवहारायोगादितिभावः ॥ अनवस्थेति ॥ तस्याप्यौपाधिकांशसंबंधस्यैववक्तव्यत्वादितिभावः ॥ नापीति ॥ अविद्याया अपिअस्वतंत्रत्वादितिभावः ॥ ७ ॥ उक्तन्यायइति ॥ प्रथमाध्यायोक्तप्रमाणानीत्यर्थः ॥ नेहनानेति ॥ इहब्रह्मणिनानाअंशादिविभागोनेत्यर्थः ॥ एतेनेति ॥ ईश्वरस्यदोषित्वप्रतिपादनेनेत्यर्थः । नहिस्वदोषपरिहाराक्षमः परदोषंपरिहरतीतियुक्तमितिभावः ॥ ओं श्रुतेस्तुशब्दमूलत्वात् ओं॥ नेश्वरस्यकर्तृत्वेयुक्तिविरोधः श्रुतेस्तु । लोकविरुद्धधर्माणामीशेअविरुद्धत्वप्रतिपादकश्रुतेरेव । श्रुत्युक्तमपियुक्तिविरुद्धंकथमभ्युपेयमित्यतउक्तं ॥ शब्दमूलत्वादिति ॥ शब्दैकप्रमाणकत्वादीश्वरस्यनतत्रयुक्तिविरोधःशंक्यइत्यर्थः ॥ शब्दैकसमधिगम्यत्वस्येति ॥ शब्देतरप्रमाणागोचरत्वस्येत्यर्थः । तथोक्तइतिअमनुरवागनिंद्रोऽप्रवृत्तिरित्युक्तेत्यर्थः । स्वयंनुमंतृत्वादमनुरित्याद्युक्तइत्यापिध्येयं ॥ओं आत्मनिचैवंविचित्राश्चहि ओं ॥ आत्मनिचपरमात्मन्येवएवंविधायुक्तिविरोधनिरासकाः विचित्राः अघटितघटकाःशक्तयःसंतिनजीवे विचित्रशक्तिरितिश्रुतेरित्यर्थः । विचित्रशक्तेर्युक्तिविरोधनिरासकत्वंकुतइत्यतआह ॥ तदुक्तमिति ॥ गीताभाष्येइतिशेषः ॥ ओं स्वपक्षदोषाच्च ओं ॥ जीवपक्षेकृत्स्नप्रसक्त्यादिदोषादेवयुक्तिविरोधेनाविरोधतानेतव्यइत्यर्थः । निरंतरशब्दार्थोनिर्भेदइति ॥ पुण्यपापेति ॥ तेनसदोष

इत्यनेननपुनरुक्तिरितिभावः ॥ ॐ सर्वोपेताचतद्दर्शनात् ॐ ॥ आत्माख्यदेवतासर्वाभिःशक्तिभिरुपेता ।
तथाच ज्ञापकंसर्वैर्युक्तेतिश्रुतेरित्यर्थः । आत्मनीतिप्रकृतत्वात्सर्वोपेतइतिपुल्लिंगनिर्देशःस्यादित्यतआह ॥ श्रुत्यनुसारेणे
ति ॥ ॐ विकरणत्वान्नेतिचेत्तदुक्तं ॐ ॥ अपाणीत्यादौहस्तादिकरणशून्यत्वोक्तेर्नेशस्यकर्तृत्वमितिचेन्न ।
तत्करणादिराहित्यंप्राकृतविषयमितितत्रैवनतस्येत्यनेनोक्तंयतइत्यर्थः । मृतस्येतिदृष्टांतः ॥ प्राकृतविषयत्वेनेति ॥
तत्रकार्यंप्रकृतिजन्यमित्युक्तेरितिभावः ॥ ८ ॥ अपूर्णत्वादिति ॥ सृष्ट्यादिनायत्प्रयोजनंतदूनत्वादितिभावः
॥ ॐ नप्रयोजनवत्वात् ॐ ॥ नेश्वरप्रवृत्तिःस्वप्रयोजनार्था कुतःप्रयोजनवत्वात् । प्रवृत्यायत्प्रयोजनंप्रागेवतद्व
त्वादितिभावः ॥ प्राप्तप्राप्तव्येति ॥ प्राप्तंप्राप्तव्यंयेनासौतथोक्तस्तस्मादित्यर्थः ॥ ॐ लोकवत्तुलीलाकैवल्यं ॐ ॥
लोकेमत्तादेर्नृत्यादिक्रियायथा तथेशस्यापिसृष्ट्यादिक्रिया लीलायाःकैवल्यंकेवलत्वंप्रयोजनंविनालीलैवेत्यर्थः ।
॥ लोकानुग्रहेति ॥ अनेनकृपालूनांकेवलंपरप्रयोजनोद्देशेनप्रवृत्तेर्दृष्टत्वात्परमकृपालोरीश्वरस्यप्रयोजनोद्देशेनप्रवृत्ति
रित्यपिसमाधानंसूचितं ॥ ९ ॥ नैर्घृण्येति ॥ निर्दयत्वमित्यर्थः । विभागेनविषमतया ॥ ॐ वैषम्यनैर्घृण्येन
सापेक्षत्वात्तथाहिदर्शयति ॐ ॥ नेश्वरस्यवैषम्यनैर्घृण्ये कर्मसापेक्षत्वात् हियस्मात्तथाप्रस्तुतार्थंदर्शयति ।
पुण्येनपुण्यमितिश्रुतिरित्यर्थः ॥ ॐ नकर्माविभागादितिचेन्नानादित्वात् ॐ ॥ ईश्वरापेक्ष्यंकर्मनास्ति कुतःअवि
भागात् अस्वतंत्रत्वात् तस्यापीशकृतत्वादितियावत् । स्वकृतकर्मापेक्षयाफलदानेवैषम्याद्यनिस्तारादितिचेन्न ।
कर्मप्रवाहस्यानादित्वेनपूर्वपूर्वकर्मानुसारेणोत्तरोत्तरंकर्मकारयित्वातदनुसारेणफलदानेदोषाभावादित्यर्थः ॥ ॐ उपप
२ द्यतेचाप्युपलभ्यतेच ॐ ॥ कर्मापेक्षणेपिस्वातंत्र्यमुपपद्यतएव । तस्यस्वाधीनत्वात् स्वाधीनकर्मापेक्षानामानपेक्षे

देतिपुनर्वैषम्यादीत्यतउक्तं ॥ उपलभ्यतेचेति ॥ तादृशंवैषम्यादिकंसत्कारयेदित्यादिश्रुतावदोषत्वेनोपलभ्यतएवे-
त्यर्थः । तदुक्तमनुव्याख्याने वेदप्रामाण्यकारणमेववैषम्यादिकंनांगीकार्यं । अन्यत्तुस्वाधीनकर्मसापेक्षत्वेनप्राप्तंवै
षम्यादिनामकंदोषोनेत्यर्थः ॥ १० ॥ तर्हिपादालंगतिरितिपृच्छति ॥ किमुक्तंभवतीति ॥ उत्तरमाह ॥ उक्ता
वशिष्टेति ॥ अतिप्रसंगादिति ॥ श्रुतमश्रुतंपितज्ञियतवन्त्वभावनसंगादित्यर्थः ॥ ॐ सर्वधर्मोपपत्तेश्च ॐ ॥
सर्वेषांधर्माणांज्ञानानंदादीनांब्रह्मण्युपपत्तेस्तत्रसिद्धत्वाद्गुणाःश्रुताइतिश्रुतिसिद्धत्वाच्चेत्यर्थः । रमादीत्यादिपदेनचतु
र्मुखग्रहणं । तस्यापिश्रुत्यनुक्तभारताद्युक्तगुणचिंतयितृत्वादितिभावः ॥ ११ ॥ इतिश्रीमत्तत्वप्रकाशिकावाक्या
र्थमंजर्यांशर्करायांश्रीनिवासविरचितायांद्वितीयाध्यायस्यप्रथमः पादः ॥ २।१ ॥ ॥ ॥ ॥

॥ श्रीमत्कृष्णद्वैपायनायनमः ॥ इदानींसमयविरोधनिराकरणेनिमित्तमाह ॥ सर्वविरोधानामिति ॥ इदानींत
नमतानांकथमपौरुषेयश्रुतिसिद्धजगत्कर्तृत्वविशेषसिद्धिनित्यतउक्तं ॥ अनादीति ॥ प्रवाहतोअनादीत्यर्थः । वेदि
कानांदम्यतृतीयस्यमत्वात्कथंनिविध्यमित्यतआह ॥ वेदवादिनामिति ॥ वेदावष्टंभेनपूर्वपक्षंकुर्वतां असदित्या
दिप्रथमपादेनिगृहीतत्वादितिभावः । अक्षपादेनिनारदीयस्मृतिः तेषुहैतुकेषु ॥ अतिप्रसंगेति ॥ रक्ततंतुनाशुक्ल
पटोत्पत्तिरित्यर्थः ॥ ॐ रचनानुपपत्तेश्चनानुमानं ॐ ॥ सांख्यादिमानपरिकल्पितंप्रधानंनकर्तृ कुतःरचनानु
पपत्तेः अचेतनस्य रचयितृत्वानुपपत्तेः तत्र मानाभावाच्चेत्यर्थः ॥ कारणत्वमात्रसाधकमिति ॥ उपादानत्वेना
प्यनवस्थितिरितिभावः ॥ ॐ प्रवृत्तेश्च ॐ ॥ पटादिसृष्टौचेतनप्रवृत्तेर्दर्शनाच्चनप्रधानंकर्त्रित्यर्थः ॥ व्यवहारमात्रमिति ॥

नत्वात्मनिकर्तृत्वावगाह्यनुभवइत्यर्थः ॥ अन्यथेति ॥ अहंदुःखीत्येतदपिव्यवहारमितिवक्तुंशक्यत्वादितिभावः
॥ परस्पराश्रयेति ॥ प्रकृतेःकर्तृत्वसिद्धौअहंकरोमीत्यादेः व्यवहारमात्रत्वसिद्धिःतत्सिद्धौदृष्टांतस्यसाध्यविकलत्वेनानु
मानस्याविरोधकत्वेनप्रकृतेः कर्तृत्वसिद्धिरित्यन्योन्याश्रयप्रसंगादित्यर्थः । ईश्वरेछानुसारित्वस्यघटादिसृष्टावपिसत्वेन
नदृष्टांतःसाध्यविकलइतिभावेनाह ॥ प्रतिपादयिष्यतइति ॥ उत्तरसूत्रद्वयेनेत्यर्थः ॥ ॐ पयोंबुवच्चेत्तत्रापि ॐ ॥
यथापयः क्षीरंस्वतोदध्यात्मनापरिणमते यथाचांबुजलंस्वतोगच्छति तथाप्रधानंकार्त्रीतिचेन्न । तत्रापिपयःप्रभृतिष्वपि
ईशप्रवृत्तेः श्रुतिसिद्धत्वादित्यर्थः । स्यंदतेस्रवति स्यंदस्रवणइतिधातोः । पयोंबुवदेवायस्कांतोपिईशाधीनास्तित्वत्य
तआह ॥ उदाहरणेति ॥ तदेवव्यनक्ति ॥ नहीति ॥ ॐ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॐ ॥
नऋतइतिश्रुत्याईशव्यतिरेकेणकस्यापिकर्मणोअनवस्थानाच्चनकोपिदृष्टांतःसिध्यति । अतोनपेक्षणीयत्वात्सद्भिरनादरणी
यत्वाच्चाचेतनस्यकर्तृत्वमित्यर्थः । निषुसीदगणपतेगणेषुत्वामाहुर्विप्रतमंकवीनां नऋतेत्वत्क्रियतेकिंचनारेमहामर्कंमघवंचि
त्रमर्चेतिश्रुतिंव्याचष्टे ॥ इंद्रियेति ॥ भगवच्छब्दार्थोधनत्रमित्यादि निषुसीदअत्यंतस्थितोभव । निस्वित्युपसर्ग
द्वयं अर्कमित्यस्यार्थःपरमानंदमिति त्वांत्वमेवेत्येतद्द्वयंक्रमेणोपपादयति ॥ यतइति ॥ विशब्दार्थोविशेषेणेति ।
आरइत्यस्यदूरेसमीपेवेति ॥ १ ॥ तर्हिप्रधानस्यप्राधान्यंनस्यादित्यतआह ॥ यथेति ॥ ॐ अन्यत्राभावाच्चनतृणादि
वत् ॐ ॥ अन्यत्रईशादन्याधारत्वेनजगतोअभावात्तत्प्रेरणांविनाकस्यापिकार्यस्यसत्वाभावादितियावत् । तंविनाप्रकृ
त्यादिकारणसत्वाभावाच्चतृणादीनांपर्जन्यइवनेश्वरोनुग्राहकमात्रं किंतुसर्वस्वतंत्रएवेत्यर्थः ॥ सर्वपदार्थानामिति ॥
तथःचतदुदाहरणेनप्रकृतानुपयोगीतिभावः । अभेदप्रतिपादकत्वभ्रमंवारयति ॥ तदधीनसत्वेति ॥ द्रव्यं प्रकृतिः

नत्वात्मनिकर्तृत्वावगाह्यनुभवइत्यर्थः ॥ अन्यथेति ॥ अहंदुःखीत्येतदपिव्यवहारमितिवक्तुं शक्यत्वादितिभावः ॥ परस्पराश्रयेति ॥ प्रकृतेःकर्तृत्वसिद्धौअहंकरोमीत्यादेः व्यवहारमात्रत्वसिद्धिःतत्सिद्धौदृष्टांतस्यसाध्यविकलत्वेनानुमानस्याविरोधकत्वेनप्रकृतेः कर्तृत्वसिद्धिरित्यन्योन्याश्रयप्रसंगादित्यर्थः । ईश्वरेच्छानुसारित्वस्यघटादिसृष्टावपिसत्वेन नदृष्टांतःसाध्यविकलइतिभावेनाह ॥ प्रतिपादयिष्यतइति ॥ उत्तरसूत्रद्वयेनेत्यर्थः ॥ ॐ पयोंबुवच्चेत्तत्रापि ॐ ॥ यथापयः क्षीरंस्वतोदध्यात्मनापरिणमते यथाचांबुजलंस्वतोगच्छति तथाप्रधानंकार्त्रीतिचेन्न । तत्रापिपयःप्रभृतिष्वपि ईशप्रवृत्तेः श्रुतिसिद्धत्वादित्यर्थः । स्यंदतेस्रवति स्यंदस्रवणइतिधातोः । पयोंबुवदेवायस्कांतोपिईशाधीनोस्त्वित्यत आह ॥ उदाहरणानि ॥ तदेवव्यनक्ति ॥ नहीति ॥ ॐ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॐ ॥ नऋतइतिश्रुत्याईशव्यतिरेकेणकस्यापिकर्मणोअनवस्थानाद्यनकोपिदृष्टांतः सिध्यति । अतोनपेक्षणीयत्वात्सद्भिरनादरणीयत्वाच्चाचेतनस्यकर्तृत्वमित्यर्थः । निषुसीदगणपतेगणेषुत्वामाहुर्विप्रतमंकवीनां नऋतेत्वत्क्रियतेकिंचनारेमहामर्कंमघवंचित्रमर्चेतिश्रुतिंव्याचष्टे ॥ इंद्रियेति ॥ भगवच्छब्दार्थोधनत्वमित्यादि निषुसीदअत्यंतस्थितोभव । निस्त्वित्युपसर्गद्वयं अर्कमित्यस्यार्थःपरमानंदमिति त्वांत्वमेवेत्येतद्वयंक्रमेणोपपादयति ॥ यतइति ॥ विशब्दार्थोविशेषेणेति । आरइत्यस्यदूरेसमीपेवेति ॥ १ ॥ तर्हिप्रधानस्यप्राधान्यंनस्यादित्यतआह ॥ यथेति ॥ ॐ अन्यत्राभावाच्चनतृणादिवत् ॐ ॥ अन्यत्रईशादन्याधारत्वेनजगतोअभावात्तत्प्रेरणांविनाकस्यापिकार्यस्यसत्वाभावादितियावत् । तंविनाप्रकृत्यादिकारणसत्वाभावाच्चतृणादीनांपर्जन्यइवनेश्वरोनुग्राहकमात्रं किंतुसर्वस्वतंत्रएवेत्यर्थः ॥ सर्वपदार्थानामिति ॥ तथाचतदुदाहरणेनप्रकृतानुपयोगीतिभावः । अभेदप्रतिपादकत्वभ्रमंवारयति ॥ तदधीनसत्वेति ॥ द्रव्यं प्रकृतिः

त्वादितिभावः ॥ सिद्धांतइति ॥ मास्तुप्रयोजनमित्युक्त्योर्व्याहतिमुपपादयितुंतदर्थयोर्विरोधमाह ॥ नहीति ॥ सप्रयोजनस्यैवाभ्युपगमासिद्धांतत्वादितिभावः ॥ ३ ॥ ॐ पुरुषाश्मवदितिचेत्तथापि ॐ ॥ अत्रतथेत्यस्यावृत्तिः अव्ययानामनेकार्थत्वादेकस्यतत्रेत्यर्थकत्वं । द्वितीयस्यव्यतिरेकानवस्थितेरित्युक्तपरामर्शकत्वं । तथाचयथापुरुषस्यचे तनस्यसंबंधेनशरीरमश्मानयनादिकर्तृ तद्वत्प्रधानंजीवसंबंधाज्जगत्कर्त्रितिचेत् । तत्रापिपुरुषाश्मादावपितथाईश्वरव्यतिरेके णानवस्थितिः । ततश्चदृष्टांताभावइत्यर्थः ॥ पुरुषोपसर्जनस्येति ॥ पुरुषाख्यामुख्यसहकारिसहितस्येत्यर्थः । निवृत्तानिष्पन्ना हेतुकंमन्यमानः स्वात्मानंहेतुकंमन्यमानः । श्रुत्यवष्टंभेन श्रुतिबलेन ॥ ॐ अंगित्वानुपपत्तेः ॐ ॥ जीवस्य प्रधानत्वेत्वयोच्यमाने सर्वजनसिद्धस्यशरीरं प्रत्यंगित्वस्य प्रधानत्वस्यानुपपत्तेर्नोक्तदृष्टांतोयुक्तइत्यर्थः । अं गमप्रधानं ॥ ४ ॥ दोषःसाध्यवैकल्यं । नक्तइतिश्रुत्यातत्रापीश्वराधीनत्वमित्यतआह ॥ श्रुतेरिति ॥ प्रत्यक्ष बाधादित्यर्थः ॥ ॐ अन्यथानुमितौचज्ञशक्तिवियोगात् ॐ ॥ प्रागुक्तादन्यथाजीवप्राधान्येनप्रकृतेरुपसर्जनत्वे नानुमितौच शरीरत्वरूपांगित्वानुपपत्तिः कुतः ज्ञशक्तिवियोगात् । ज्ञस्यजीवस्यशरीरसंबंधे शक्त्यभावादित्यर्थः । ॥ अन्यत्रेति ॥ अशक्तत्वपक्षेजीवस्यवैयर्थ्यं शक्तत्वपक्षेशरीरवैयर्थ्यमित्यर्थः ॥ पूर्वमप्येवमिति ॥ प्रकृति संबंधार्थंकेवलस्यशक्त्यभावात्प्रकृत्यंतरसंबंधस्येतिवाच्यं । एवंतत्रापीत्यनवस्थेत्यर्थः । ननुप्रकृतिसंबंधस्यानादित्वात्त दर्थंप्रकृत्यंतरसंबंधापेक्षेत्यतोनानवस्थेत्यतआह ॥ अनादितेति ॥ उदाहर्तव्येति ॥ अचेतनसंबंधस्यैवप्रकृतिरि तिनियमेव्यभिचारस्थलत्वेनेतिशेषः ॥ ॐ विप्रतिषेधाच्चासमंजसं ॐ ॥ सर्वश्रुतिस्मृतियुक्तिविरुद्धत्वाच्चानीश्वर मतमसमंजसमित्यर्थः । परंस्वतंत्रं ॥ ५ ॥ परमाण्वारंभेति ॥ त्र्यणुकषष्ठभागस्यद्व्यणुकादिक्रमेणकार्यारंभकत्वं

मेवनतुतदात्मनापरिणामवादित्यर्थः । ईश्वरस्याष्टगुणमात्रत्ववक्तुंउपोद्घातमाह । षट्खल्वित्यादिना ॥ गुणाश्रयइति ॥ गुणात्यंताभावानधिकरणमित्यर्थः । तेनप्रथमक्षणावच्छिन्नघटेनाव्याप्तिः । अन्यत्कार्यरूपं ॥ कर्मान्यत्वेति ॥ अत्रकर्मसामान्यद्रव्यव्यावृत्तयेक्रमेणविशेषणानि । ननुगुणेगुणत्वसमवायस्यद्रव्यत्वाद्यभावस्यापिसत्वेनासंभवीदंलक्षण मितिचेन्न । संयोगसमवायान्यतरसंबंधेनयत्रयत्रास्तितत्प्रत्येवसआश्रयइत्यंगीकारात् । गुणस्याभावसमवाययोःप्रतिविशेष णविशेष्यभावेनाश्रयत्वेपिसंयोगसमवायान्यतरसंबंधेनानाश्रयत्वादितिभावः ॥ संयोगविभागयोरिति ॥ नचसं योगविभागयोरतिव्याप्तिः । उभयासमवायीकारणत्वस्याविवक्षितत्वादितिभावः ॥ नित्यमिति ॥ अत्रसंयोगविशे षगगनसमवायव्यावृत्तयेक्रमेणविशेषणानि । नन्वत्रानेकसमवेतत्वंनामानेकत्वसंख्यावत्समवेतत्वंवास्वाश्रयप्रतियोगि कान्योन्याभाववत्समवेतत्वंवा । नाद्यः रूपत्वेअव्याप्तेः । तदाश्रयेरूपेसंख्याभावात् । नद्वितीयः एकपदंवय्य र्थ्यात् । विशेषाणांप्रतिव्यक्तिनियतत्वेनैकैकस्यविशेषस्यस्वाश्रयप्रतियोगिकान्योन्याभाववत्समवेतत्वाभावेनतत्रातिव्या प्त्यभावात् । नचविशेषसमुदायेतिव्याप्तिः । समुदायिभिन्नसमुदायाभावात् । भावेनातस्यसमवेतत्वाभावेनतेनैवतद्व्या वृत्तेरितिचेदुच्यते नात्रैकत्वंलक्षणशरीरांतर्गतं । किंतुसामान्यंसर्वत्रानुगतव्यवहारहेतुत्वादेकमेव नतुविशेषवत्प्रतिव्यक्ति- भिन्नमितिस्वरूपकथनार्थमितिसंप्रदायविदः । नन्वथापिकालाकाशसंयोगेतिव्याप्तिरितिचेन्न अनंगीकारात् । तयोर मूर्तत्वेनपरस्परसंयोगाभावेनामूर्तत्वभंगाभावाच्चेत्यर्थः ॥ अनेकविधमिति ॥ सत्ताद्रव्यत्वादिरूपेणपरापरोभयविध रूपेत्यर्थः ॥ नित्यइति ॥ संयोगाकाशव्यावृत्तयेक्रमेणविशेषणे ॥ अंत्याइति ॥ अंतेभावाइत्यर्थः । गुणादीनां व्यावर्तकानामभावेस्वयंव्यावर्तकतयाविद्यमानाइतियावत् । आत्मपरिमाणुप्रभृतिषुसमानगुणकर्मजातिमत्सुयोगिनामय

मस्माद्भिन्नइतिव्यावृत्तिबुद्धिजनकस्यान्यस्याभावात्तदर्थंतन्मात्रवृत्तितयाव्यावृत्तिबुद्धिजनकाविशेषाअंगीक्रियंते । अत्रांत्याइत्येवलक्षणंअन्यत्स्वरूपकथनमितिबोध्यं । तत्रपदार्थेषु यद्यत्र स्वसमवेतकार्यजनकत्वमितिफलितोर्थः । द्रव्यमेव नगुणादिकंसमवायिकारणं ॥ आदिसृष्टाविति ॥ महेश्वरसिसृक्षयापरमाणुषुक्रियोत्पद्यते । ततोद्वयोर्द्वयोरन्योन्यसंयोगेनद्व्यणुकोत्पत्तिस्त्रिभिर्द्व्यणुकैस्त्र्यणुकमित्यादिक्रमेणमहापृथिव्याद्युत्पत्तिरित्यर्थः । प्रत्यासन्नंप्रत्यासत्तियुक्तं । ॥ अवधृतसामर्थ्यमिति ॥ अवधृतंसम्यङ्निश्चितंसामर्थ्यंकार्यजननेयस्यतत्तथोक्तं । तदवधारणेहेतुश्चानन्यथासिद्धत्वं । अत्रतंतुतंतुत्वव्यावृत्तयेक्रमेणविशेषणे ॥ कार्यैकार्थेति ॥ कार्येणसहैकत्रसमवायः कारणेनसहैकत्रसमवायश्चेत्यर्थः ॥ कार्यद्रव्यस्येति ॥ यथातंतुसंयोगः पटलक्षणकार्येणसहैकत्रतंतुषुसमवेतः पटसमवायिकारणं । ॥ कार्यगतेति ॥ यथातंतुरूपंकार्येणपटेनसहैकत्रतंतुषुसमवेतंपटरूपासमवायिकारणं ॥ कर्मचेति ॥ यथातंतुक्रियापटलक्षणकार्येणसहैकत्रतंतुषुसमवेतापटगतविभागकारणं । अत्रचशब्देनाश्रयगतगुणानामादिशब्देनकार्यैकार्थप्रत्यासत्तेश्चग्रहणं । यथापार्थिवपरमाणुगतंरूपादिकंप्रतिपार्थिवपरमाणुतेजः संयोगस्वरूपादिलक्षणकार्येणसहपरमाणुलक्षणैकार्थेसमवेतत्वेनकारणत्वं॥ कारणगतगुणकर्मणीति ॥ कर्मसमवायीकारणगतगुणकर्मणीत्यर्थः । यथाफलगतंगुरुत्वंतद्गतपतनंप्रतितल्लक्षणकार्येणसहफललक्षणैकार्थसमवेतमसमवायिकारणं । यथावाफलगतंद्वितीयपतनंतद्गततृतीयपतनासमवायिकारणं । इदंचैकदेशिमतेन । वस्तुतस्तुतृतीयादिपतनंप्रतिवेगस्यैवासमवायिकारणत्वं । अतएवसुधायांकर्मणआश्रयगताःगुरुत्वद्रवत्वसंयोगाअसमवायिकारणमित्येवोक्तं ॥ संख्यादिनैवेति ॥ परमाणुगतद्वित्वेनद्व्यणुकपरिमाणंतद्गतत्रित्वेन त्र्यणुकपरिमाणंआदिपदेनवर्तुलपिंडपरिमाणंकारणप्रचयसंग्रहः । तत्राप्यवयवपरिमाणस्यहेतुत्वमितिभावः ।

॥ एतदन्यदिति ॥ समवायसमवायिभिन्नमित्यर्थः ॥ **शिष्टषड्गुणायोग्यइति** ॥ नित्ययथार्थज्ञानस्येश्वरस्य मोहासंभवेनतत्प्रभवरागद्वेषयोरयोगेनतज्जन्यधर्माधर्मयोरभावात्तन्निमित्तसुखदुःखयोर्नित्यज्ञानत्वादेवस्मरणलक्षणकल्पकाभावेनभावनाख्यसंस्कारस्यचायोगाच्छिष्टषड्गुणायोग्यइत्यर्थः ॥ ॐ **महद्दीर्घवद्वाऽह्रस्वपारिमंडलाभ्यां** ॐ ॥ यथामहत्वाद्दीर्घत्वाच्चपरिमाणाच्चतुर्णकादिकार्यगतंपारिमाणंजायते तथाचह्रस्वत्वात्पारिमांडिल्याच्चपरिमाणात्तत्कार्येपरिमाणमुत्पद्येत। अन्यथामहत्वदीर्घत्वाभ्यामपिनोत्पद्येताविशेषादित्यर्थः ॥ **नतावदिति** ॥ नापिबाधकभावाभावाभ्यामितितावच्छब्दः ॥ **प्रत्यासत्तिरेवेति** ॥ नतुसामर्थ्यावधारणमितिलक्षणाभावएवेत्यर्थः । तत्रयंपुरस्कृत्ययस्ययंप्रतिपूर्वभावोवगम्यतेतत्तेनान्यथासिद्धमित्युक्तान्यथासिद्धिसत्वादितिभावः ॥ **महत्वेपीति** ॥ उक्तान्यथासिद्धेस्तत्रापिवक्तुंशक्यत्वादितिभावः । बाधकंशंकते ॥ **पारिमांडल्यादेरिति** ॥ **नास्तिनोहानिरिति** ॥ त्र्यणुकादिसर्वकार्याणामापेक्षिकाणुत्वसत्वेनतत्राणुशब्दवाच्यत्वस्येष्टत्वादितिभावः । ननुपरमाणुगतपरिमाणमेवअणुपरिमाणंनत्र्यणुकादिसर्वकार्यगतमतः कथमिष्टापत्तिरित्यतआह ॥ **संकेतमात्रमिति** ॥ अवर्जनीयप्रत्यासत्तिर्नेत्यत्रहेत्वंतरमाह ॥ **द्व्यणुकादीति** ॥ तथाचानन्यगत्यापारिमांडल्यादेरेवकारणत्वमितिनसामर्थ्यावधारणाभावइतिभावः। ननुसंख्यादिनैवतज्जन्मेत्युक्तत्वात्कथंकारणांतराभावइत्यतआह ॥ **संख्यादेरिति** ॥ त्र्यणुकादिगतबहुत्वसंख्यादेश्चतुर्णकादिमहत्वारंभकत्वप्रसंगादित्यर्थः । तथाचतत्रापिपरिमाणस्यारंभकत्वंनस्यादिभावः । यद्वाद्व्यणुकगतसंख्यावत्परमाणुगतसंख्याया अपिद्व्यणुकमहत्वारंभकत्वप्रसंगादित्यर्थः ॥ **भिन्नतयेति** ॥ समवायिकारणाद्विविक्ततयेत्यर्थः। तथाविधस्यैवदंडादेर्निमित्तकारणत्वादितिभावः ॥ **भिन्नतयेति** ॥ द्वित्वसमवायिकारणात्मनः सकाशादितिशेषः ।

अभ्युपगम्य संयोगस्यकारणत्वं विवक्षितः व्यतिषंगाविशेषविशिष्टः ॥ **कस्त्नदेति** ॥ व्यतिषंगाविशेषविशिष्टतंतू नामेवपटत्वादितिभावः ॥ ॐ **उभयथापिनकर्मातस्तदभावः** ॐ ॥ उभयथापीश्वरेच्छायानित्यत्वानित्यत्वरूपप्र- कारद्वयेपिपरमाणुषुकर्मनसंभवत्यतस्तदभावः । द्व्यणुकादिकार्याभावइत्यर्थः । तस्याःसकाशात् दूषणांतरमाह । ॥ **सतिकारणइति** ॥ तस्यकारणत्वेनाभिमतस्य नचकारणांतराभावात्कार्याभावइतिवाच्यं । वक्ष्यमाणरीत्या कारणांतरस्यैवाभावादितिभावः । अप्रसक्तत्वात्कथंतत्परामर्शइत्यतउक्तं ॥ **पारिमाणाभिदानेति** ॥ ह्रस्वादिप रिमाणाश्रयतयातदपिप्रसक्तमितिभावः । यथाकथंचिद्विशेषलाभात्किमनेनानौपाधिकत्ववर्णनेनेत्यतआह ॥ **सृष्टमिति** ॥ उपाध्यभावेउपाहितासंभवादितिभावः ॥ **आविर्भावेति** ॥ शक्त्यात्मनाविद्यमानस्यतदाव्यक्त्यंगीकारादित्यर्थः । उक्तदोषः अन्योन्याश्रयः ॥ **न्यायेति** ॥ कालस्यनित्यत्वेप्रलयेपिकार्योत्पत्तिः । अनित्यत्वेतस्यापिजन्यत्वेनका लांतरापेक्षेत्यादिन्यायेनेत्यर्थः ॥ समुद्बोधविशेषःकार्योन्मुखत्वं ॥ ॐ **समवायाभ्युपगमाच्चसाम्यादनवस्थितेः** ॐ ॥ अवयवावयव्यादीनांभिन्नत्वमुपेत्यतेषांसमवायाभ्युपगमाच्चतन्मतमसत् कुतः समवायस्यापिसमवायिभ्यांभिन्नत्वसा म्यात् मृद्घटःसमवायइत्यादिविशिष्टबुद्ध्युपपत्तयेसमवायांतरापेक्षायांतत्राप्येवंतत्राप्येवमित्यनवस्थानादित्यर्थः । ननुनित्य गुणादीन्प्रतिगुण्यादेसमवायिकारणत्वाभावात्तन्निरासस्समयेतेषांग्रहणमसंगतमित्यतउक्तं ॥ **प्रसंगादिति** ॥ समवायाश्रयनि रूपणप्रसंगादित्यर्थः । शंकते ॥ **भिन्नयोरिति** ॥ अवयवत्वादिविशेषणत्वोपपत्तयेअवयवीत्यादिविशेष्योपपत्तयेचे त्यर्थः ॥ **मृद्घटसमवायइति** ॥ मृद्घटयोःसमवायइत्यर्थः ॥ **संयोगेपीति** ॥ तथाचसंयोगीघटइत्येतन्निर्वाहा यसंयोगघटयोःसमवायांगीकारोव्यर्थःस्यादितिभावः ॥ **नचैवमिति** ॥ द्रव्यस्यैवस्वनिर्वाहकत्वमभ्युपेत्यसमवायि

णपूर्वकमाह ॥ अहमासमिति ॥ सृगालवाक्यमिति ॥ सृगालरूपेंद्रवाक्यमित्यर्थः । अनेनतर्कविद्यानुरागस्य जंबुकजन्महेतुत्वंसूचितंभवति ॥ ६ ॥ प्राथमिकत्वादिति ॥ बुद्धोक्तमतैकदेशमवलंब्यजिनेनमतांतरकरणादिति भावः ॥ बहुविधत्वेपीति ॥ वैभाषिकसौत्रांतिकमाध्यमिकयोगाचारभेदेनेत्यर्थः । ईश्वराभावंवक्तुमाह । रूप-विज्ञानेति ॥शरीरेंद्रियविषयात्मनावस्थिताःरूपरसगंधस्पर्शात्मकाःपरमाणवोरूपस्कंधाः । निर्विकल्पकज्ञानंविज्ञानस्कंधः दुःखंवेदनास्कंधः । सुखंचदुःखाभावएव । सविकल्पकंज्ञानंसंज्ञास्कंधः । समनंतरप्रत्ययःसंस्कारस्कंधइतिद्रष्टव्यं । अस्मन्मताभिप्रायेणाह ॥ परमाणुपरिमाणस्येति ॥ वैशेषिकमताभिप्रायेणाह ॥ तदारब्धस्येति ॥ यदिति॥ पदार्थानांसत्वंनामस्वसदृशकार्यजनकत्वरूपमर्थक्रियाकारित्वं । तत्रयदिघटस्यस्थायित्वंतर्हिप्रतिक्षणेघटांतरंसमुत्पादयेत् । सोप्येवं एवंचाल्पतरकालेकुलालशालापूर्त्तिःस्यात् । अतोघटांतरमुत्पाद्यस्वयंनश्यतीत्यंगीकार्यं । तथाघटस्यव्याप्तत्वे तत्कार्यस्यसर्वत्रोपलब्धिप्रसंगात्परिच्छिन्नत्वंचांगीकार्यमितिभावः ॥ ॐ समुदायउभयहेतुकेपितदप्राप्तिः ॐ ॥ समुदायःकिमेकपरमाणुजन्यउतानेकपरमाणुजन्यः । आद्ये एकस्मात्समुदायइतिव्याहतमित्यपिशब्दसूचितदूषणं । द्वितीयेसमुदायेउभयहेतुकेऽनेकपरमाणुजन्येअंगीकृतेसतितदप्राप्तिः तस्यसमुदायस्यानुपपत्तिः । अन्योन्याश्रयादित्यर्थः । ननुयेभ्योमिलितानेकपरमाणुभ्योसमुदायोजन्यतेनतेतत्समुदायजन्याः किंतुसमुदितपरमाण्वंतरजन्याइतिनान्योन्याश्रयइ-त्यतआह । अत्रातिपीडायामिति ॥ समुदितपरमाण्वंतरस्यापिमिलितानेकपरमाण्वंतरहेतुकत्वावश्यंभावादिति भावः ॥ ॐ इतरेतरप्रत्ययत्वादितिचेन्नोत्पत्तिमात्रनिमित्तत्वात् ॐ ॥ समुदायस्यसर्वदासत्वेपितत्प्रतीति व्यवहारयोरितरेतरप्रत्ययत्वादिदंचेदंचेत्यपेक्षाबुध्यधीनत्वात्तदभावेतत्प्रतीत्याद्यभावेनलयाद्युपपत्तिरितिचेन्न । विरलप-

रमाणुजातमिलितपरमाणूनांतादृशसमुदायोत्पत्तिमात्रेनिमित्तत्वादपेक्षाबुध्यादौनिमित्तत्वाभावादित्यर्थः ॥ **तदंगीक्रिय**
**तएवेति** ॥ नात्रसमुदायोनामपरमाणूनांसंयोगः । अनंगीकारात् नापिद्रव्यांतरं तस्यैवावयवित्वात् । किंत्वनेक
॥ १४ ॥ त्वसंख्यारूपएव । सचविरलेष्वपिपरमाणुषुसर्वदास्तीतिभावः । वित्तिःप्रतीतिः ॥ **व्यवहारादेरिदंचेदंचेति** ॥
अनेकत्वसंख्यायाअपेक्षाबुद्धिव्यंग्यत्वेनतत्प्रतीतिव्यवहारयोरप्यपेक्षाबुध्यधीनत्वादित्यर्थः ॥ **सामीप्यापेक्षेति** ॥
विप्रकृष्टेइदंचेदंचेत्ययोगादितिभावः । घटेतेत्यनंतरंकथमित्यनुवर्तते । कात्रकथंतेत्यतआह ॥ **नहीति** ॥ त्रयाणामेक
विषयत्वेनैवकार्यकारणभावादितिभावः।तथात्वंक्षणिकत्वंतथाचैकस्यपुरुषस्यदर्शनमन्यस्यापेक्षाबुद्धिरन्यस्यव्यवहारइतीभि
न्नाधिकरणत्वान्नतेषांकार्यकारणभावइतिभावः ॥ **तदभ्युपगमइति** ॥ एतद्बाधकवशात्वयाक्षणिकत्वमेवांगीकार्यं ।
स्थायित्वांगीकारेचतद्धानिरित्येवमर्थादुक्तैवेत्यर्थः ॥ **विशेषेति** ॥ विशिष्यतइतिविशेषः विसदृशइत्यर्थः । विरले
भ्योनिमित्तोत्पत्तिरितियावत् एवमग्रेपि ॥ ॐ **उत्तरोत्पादेचपूर्वनिरोधात्** ॐ ॥ उत्तरस्यस्वसदृशकार्यस्योत्पादे
चउत्पत्तावेवपूर्वस्यकारणस्यनिरोधान्नाशान्नविसदृशकार्योत्पत्तिश्चेत्यर्थः । तर्हिघटोपिस्वसदृशघटमुत्पाद्यतत्रवैसादृश्यमुत्पा
दयेदित्यतआह ॥ **नचेति** ॥ ॐ **असतिप्रतिज्ञोपरोधोयौगपद्यमन्यथा** ॐ ॥ किंकारणेनष्टेकार्यमुत्पद्यतेविद्य
मानेवा । आद्येअसति नष्टेकारणेकार्योत्पत्तिरित्यंगीकारेतस्यकार्यमितिप्रतिज्ञायाउपरोधोहानिरित्यर्थः । अन्यथाविद्य
मानेकारणेकार्योत्पत्तिरितिद्वितीयपक्षांगीकारेकार्याणांयौगपद्यमविच्छिन्नोत्पत्तिरेकदावस्थानंचस्यादित्यर्थः ॥ **अतिप्र-**
**संगादिति** ॥ तंतुनाशोत्तरक्षणजन्यघटस्यतत्कार्यत्वप्रसंगादित्यर्थः । आत्मानंस्वरूपं ॥ **विनाशाकारणाभावादिति** ॥
द्वितीयक्षणस्यैवतन्नाशकारणत्वादितिभावः ॥ **यौगपद्यमिति** ॥ घटिकादिस्थूलकालावच्छेदेनयुगपदवस्थानंस्यात् ॥ १९ ॥

तथाचाल्पेनरकालेकुलालशालापूर्तिःस्यादितिभावः । यौगपद्यंप्रकारांतरेणोपपादयति ॥ तथेति ॥ कारणंहिक्षणिकंय-
दिकार्यमपितत्सत्तासमानकालीनसत्ताकंतर्हिकार्यकारणयोःसहोत्पादइत्युक्तंस्यात् तत्कार्याणामप्येवमेवन्यायइतितत्संता
नभाविनामशेषकार्याणामेकक्षणावस्थानरूपंयौगपद्यंस्यात् तच्चप्रत्यक्षविरुद्धमितिभावः ॥ नचक्षणार्धेति ॥ तथाचन-
द्विक्षणिकत्वप्रसंगइतिभावः ॥ पूर्वमध्येति ॥ पूर्वमध्यांत्यभागराहित्याभिधानादित्यर्थः ॥ ॐ प्रतिसंख्याप्रतिसं-
ख्यानिरोधाप्राप्तिरविच्छेदात् ॐ ॥ प्रतिसंख्याबुद्धिः अप्रतिसंख्यातदभावः बुद्धिपूर्वकंमुद्गरप्रहरादिनाघटनाशः
प्रतिसंख्यानाशःसएवससंताननाशइत्युच्यते पुनर्घटानुत्पादात् तद्भिन्नाप्रतिक्षणंजायमानोनाशः अप्रतिसंख्यानाशः सए
वनिःसंताननाशइत्युच्यते । घटोत्पत्तिविच्छेदाभावात् तथाचससंताननाशप्रतिक्षणनाशयोरप्राप्तिरनुपपत्तिः कुतःकार्यज
ननाविच्छेदादित्यर्थः । निर्वर्त्य निष्पाद्य अन्यथासंतानसाहित्येननाशापत्तेरितिभावः ॥ स्वकार्यवियोगकालइति ॥
कार्योत्पत्त्युत्तरक्षणइत्यर्थः ॥ कारणंसदेवेति ॥ असतःकार्येणावियोगायोगादितिभावः ॥ विविक्ततयेति ॥
विविक्तिव्यवहारविषयामिलितपरमाणुजन्यपरमाणूनांविरलतयेत्यर्थः ॥ निरस्तमिति ॥ उत्तरोत्पादेचपूर्वनिरोधादिति-
विसदृशकार्यजनकत्वनिराकरणेनेत्यर्थः ॥ अवास्तवत्वादिति ॥ सत्वस्यैवतत्प्रयोजकत्वादितिभावः ॥ नहीति ॥
औपाधिकसत्वस्योपाधिसत्वाधीनत्वादितिभावः । कथमित्यतःसमुदायावास्तवत्वंतेनांगीकारयन्नतेनेत्युक्तंविशदयति
॥ समुदायेत्यादिना ॥ विरोधादिति ॥ विरलपरमाणूनांसमुदायोत्पादकत्वांगीकारेणतन्मात्रत्वेजन्यजनकभाव-
विरोधादित्यर्थः ॥ सएवावयवीति ॥ सचत्वयानांगीकृतइतिभावः । अवास्तवोवयवी अंगीक्रियतइत्यतआह

॥ अवास्तवत्वइति ॥ तेषामिति ॥ तथाचनतेषामेकोघटइतिसाक्षात्कारविषयत्वमितिभावः । शंकते ॥ तथा-
पीति ॥ ॐ उभयथाचदोषात् ॐ ॥ कारणेसतिकार्यंभवत्येवेतिनियमेसमानकालीनत्वेनकार्यकारणभावानुपपत्तिः
अनियमेऽसत्वापत्तिरित्युभयपक्षेपिदोषादित्यर्थः । पूर्वोत्तरक्षणस्थदीपयोर्भेदेक्षणिकत्वंसेत्स्यतीत्याह ॥ यद्विरूढेति ॥
॥ ॐ आकाशेचाविशेषात् ॐ ॥ आकाशेपरिमाणविशेषाभावात्तस्यस्थायित्वे अन्यस्यापितथात्वंशक्यसाधनमि-
त्यर्थः ॥ तत्रनदनभ्युपगमादिति ॥ आकाशेद्वौविनाशौचनित्यंत्रयमसंस्कृतमितितदुक्तेरितिभावः ॥ तत्रापीति ॥
त्वदभिमतक्षणिकत्वंतत्रनास्तितस्यबहुक्षणवृत्तित्वादितिभावः ॥ त्वदनुमानेसिद्धेरिति ॥ उभयथाचदोषादित्यत्र
प्रपंचमदीपादौत्वबौद्धांगीकृतार्थक्रियाकारित्वस्यदूषितत्वादितिभावः ॥ ननास्तीति ॥ किंत्वस्त्येव ततश्चनास्मदुक्तहे
तोत्वदुक्तसाधनत्वंकल्प्यमितिभावः ॥ ॐ अनुस्मृतेश्च ॐ ॥ तदेवेदमितिप्रत्यभिज्ञानाच्चनानुमानात्क्षणिकत्वसिद्धिरि
त्यर्थः ॥ परिलूनेति ॥ छिन्नोत्पन्नकेशसमुदायेयथासादृश्यात्सएवायमितिप्रत्यभिज्ञा तथापूर्वोत्तरक्षणस्थदेवदत्तयोः
सादृश्यात्सएवायमितिप्रत्यभिज्ञेत्यर्थः ॥ विरुद्धधर्मेति ॥ देवदत्तत्वाद्यादिरूपेत्यर्थः ॥ अन्यथाक्षणेपीति ॥
कालभेदेनविरुद्धधर्मवत्त्वेपिभेदे एकक्षणवृत्तिनोपिदेवदत्तस्यपुरुषभेदेनज्ञातत्वाज्ञातत्वरूपविरुद्धधर्माधिकरणत्वेनभेदःस्या-
दित्यर्थः ॥ प्रदीपइति ॥ तस्यापिकालभेदेनविरुद्धधर्माधिकरणत्वोपपत्तेरितिभावः ॥ निरंतरेति ॥ अव्यवहितेत्यर्थः
॥ उक्तरीत्याऽपास्तमिति ॥ अनुस्मृतेश्चेत्युक्तरीत्याबाधितविषयत्वादित्यर्थः ॥ दृष्टांताभावादिति ॥ मुसलाहत
क्षणवृत्तिपरमाण्वात्मकघटाख्यदृष्टांतस्वरूपेनत्रसाध्यसाधनयोःसत्वेचविप्रतिपत्तेरितिभावः ॥ तस्यावस्तुत्वादिति ॥

सनएवक्षणिकत्वस्यसाधनीयत्वेनावस्तुनस्तत्साधनमनुपयुक्तमितिभावः ॥ ७ ॥ **शून्यमतेति** ॥ शून्यजगत्कारणत्वाभिधायिमाध्यमिकमतेत्यर्थः ॥ **अतंत्रयेति** ॥ देशकालवस्तुभ्यःपरिछेदरहितमित्यर्थः ॥ **असंगस्येति** ॥ निष्क्रियस्येत्यर्थः । स्पष्टमेवंसुषुप्तौ । संव्रीयतेनेनेतिसंवृत्तिरविद्या ॥ ॐ **नासतोदृष्टत्वात्** ॐ ॥ असतःशून्यस्यजगत्कारणत्वंनयुक्तं असत्कारणत्वस्यलोकेऽदृष्टत्वादितिभावः । त्वद्रीत्यात्वांबोधयामीत्यतआह ॥ **दृष्टोवेति** ॥ नेतिवर्तते अप्रयोजकत्वंशंकते ॥ **नन्वदृष्टमपीति** ॥ ॐ **उदासीनानामपिचैवंसिद्धिः** ॐ ॥ एवमसतःकारणत्वेसति उदासीनानांहेयोपादेयधीविषयत्वराहित्यादुदासीनानांगगनारविंदादीनामसतांसकाशात्सौरभ्यादिकार्यसिद्धिःस्यादित्यर्थः । तर्केऽप्यप्रयोजकत्वंशंकते ॥ **खपुष्पादीनामिति** ॥ अन्यत्रेत्यनुवादः शून्यादितिव्याख्या परमार्थतोत्पद्येतेत्यन्वयः । विपरिवर्ततेविपरीतज्ञानविषयोभवति उक्तदोषः अन्यत्रादृष्टत्वरूपः असतएवशून्यस्यैव ॥ ॐ **नाभावउपलब्धेः** ॐ ॥ जगदभावःशून्यव्यतिरेकेणनास्तीतिनयुक्तं उपलब्धेः सदित्युपलभ्यमानत्वादित्यर्थः ॥ **बाधविरोधादिति** ॥ तथात्वेकिंतुशून्यमेवेतिस्यादितिभावः । स्वाप्नस्यगजादेः ॥ ॐ **वैधर्म्याच्चनस्वप्नादिवत्** ॐ ॥ स्वप्नजाग्रत्वादिवन्नेदंजगदसत् कुतःवैधर्म्यात् स्वप्नएवायंनजाग्रदितिबाधविषयत्वाख्यवैलक्षण्यादित्यर्थः । जाग्रत्वंजाग्रदभेदः ततःजगतःसकाशात् ॥ ८ ॥ ॐ **नभावोनुपलब्धेः** ॐ ॥ भावःज्ञानात्मकंजगदितिनयुक्तं तथाऽननुभवादित्यर्थः ॥ **अतीताधिकरणन्यायेनेति** ॥ सदितिदृष्टत्वादितिन्यायेनेत्यर्थः । ननुययोःसहोपलंभस्तयोरभेदोयथाघटरूपयोः सहोपलभ्येतेचनीलतज्ज्ञाने परस्परव्यतिरेकेणानुपलब्धेरित्यनुमानंमानमित्याशंक्याह ॥ **नचेति** ॥ **इतरेतराश्रय**-

त्वमिति ॥ प्रत्यक्षस्यभ्रांतित्वे अनुमानप्रामाण्यंतस्मिंश्चसतिप्रत्यक्षस्यभ्रांतित्वमित्यन्योन्याश्रयत्वमित्यर्थः ॥ स्ववृत्तिविरोधेनेति ॥ स्वस्यैवक्रियात्वेनकर्मत्वेनचवृत्तिविरोधादित्यर्थः । एतच्चपरमतेन सिद्धांतेसाक्षिणःस्वप्रकाशत्वांगीकारात् अतएवदोषांतरमाह ॥ अज्ञानइति ॥ ज्ञानप्रागभावादौज्ञानावरणसंवृतौचव्यभिचारः । नहिज्ञानाभावादिरपिज्ञानंविरोधादितिभावः ॥ असिद्धिरिति ॥ ज्ञानस्वरूपत्वस्यासम्मतेरितिभावः ॥ ॐ क्षणिकत्वाच्च ॐ ॥ ज्ञानस्यक्षणिकत्वात्पदार्थानांस्थायित्वाच्चनाभेदइत्यर्थः ॥ ॐ सर्वथानुपपत्तेश्च ॐ ॥ नसर्वंबौद्धमतंयुक्तं सर्वश्रुत्यादिविरुद्धत्वेनसर्वथानुपपन्नत्वादित्यर्थः । उक्तंप्रथमाधिकरणमारभ्यवक्ष्यमाणंसमाप्तिपर्यंतं बौद्धेनश्रुत्यप्रामाण्यस्यानभ्युपगमात्तंप्रतितद्विरोधाभिधानमयुक्तमित्यतआह ॥ एतच्चेति ॥ ९ ॥ सदसदुभयमिति ॥ सदित्येकः असदितिद्वितीयः सदसदात्मकमितितृतीयः सदसद्विलक्षणमितिचतुर्थः सत्वेसतिसद्विलक्षणमितिपंचमः असत्वेसत्यसद्विलक्षणमितिषष्ठः सदसदात्मकत्वेसतिसदसद्विलक्षणमितिसप्तमइतिसप्तप्रकारोपेतमित्यर्थः ॥ ॐ नैकस्मिन्नसंभवात् ॐ ॥ एकस्मिन् जगतिसत्वादिसप्तप्रकारानयुक्ताः कुतः असंभवात् अप्रामाणिकत्वेनासंभावितत्वादित्यर्थः । विरोधपरिहारायोक्तं ॥ व्यवस्थितेति ॥ देशादिभेदेनेत्यर्थः । सर्वमपि प्रकारसप्तकमपि । तत्राप्यस्माभिर्दोषाभिधानादितिभावः । असिद्धेत्वमवैत्रदोषदर्शनमित्याह ॥ सदसत्प्रकारेति ॥ व्यवस्थितेतियोज्यं ॥ शरीरावच्छेद्यमिति ॥ यथाघटगतंपरिमाणंघटाकाशेमनीयंनननत्रानिरेकेणतस्यस्वतःपरिमाणमस्ति तथात्मनोनस्वतःपरिमाणंकिंतुदेहपरिमाणमेवतत्रप्रतीयते अतोदेहप्रमाणपरिमाणमवत्वमित्यर्थः ॥ ॐ एवंचात्माकार्त्स्न्यं ॐ ॥ एवंचात्मनःकायपरिमाणत्वेसत्यात्मनःपिपीलि-

कादेहस्थस्यगजशरीरप्राप्तौतत्राकात्स्न्र्यंसर्वदेहाव्यापित्वंस्यादित्यर्थः ॥ **जैनमतप्रसंगेति** ॥ निरसनीयत्वेनबुद्धिप्रस
क्तेजैनमतेप्रसक्तमित्यर्थः । अतिरेकः आधिक्यं ॥ ॐ **नचपर्यायादप्यविरोधोविकारादिभ्यः** ॐ ॥ पर्याया-
दपिक्रमादपिक्रमात्तदेहपरिमाणत्वांगीकारादपि अविरोधोनचभवति कुतः विकारादिभ्यःविकारित्वानित्यत्वादिदो
षप्राप्तेरित्यर्थः ॥ ॐ **अंत्यावस्थितेश्चोभयनित्यत्वादविशेषात्** ॐ ॥ अंत्यस्यमुक्तिगतात्मपरिमाणस्यावस्थिते
स्तदवच्छेदकतयानित्यदेहावश्यंभावेनोभयस्यमुक्तात्मतद्देहयोर्नित्यत्वादद्यतनदेहानामपिनित्यत्वंस्यात् देहत्वाविशेषादि-
त्यर्थः । किंचातइतिप्रश्नोत्तरमाह ॥ **तथासतीति** ॥ व्याचष्टांवदतु । इदंकिमित्यतआह ॥ **तच्छरीरमिति** ॥
॥ १० ॥ **प्राबल्यादिति** ॥ शक्तिसूर्यगणपत्यादीतरदेवापेक्षयापशुपतेर्वेदपुराणादौमोहनार्थंजगत्सृष्ट्यादिकर्तृत्वसर्वो-
त्तमत्वादेरुक्तत्वेनतदवलंबेनप्रवृत्तपाशुपतमतस्यात्यंतास्मन्मतविरोधितयाप्राबल्यादित्यर्थः । मायां प्रकृतिं ॥ ॐ **पत्यु-
रसामंजस्यात्** ॐ ॥ पत्युःपशुपतेः नजगत्कारणत्वं कुतः असामंजस्यात् पारतंत्र्यादिदोषवत्वेनतस्यासमीचीनत्वा
दित्यर्थः । एषशब्दस्य आईशइतिविग्रहः गुणःशकारस्यव्यत्ययेनषकारइत्यभिप्रेत्याह ॥ **आसमंतादीशस्येति** ॥
मीळ्हुषइत्यस्यार्थः अभीष्टसेचकस्येति । वयाइत्यस्यबंधकइति वयबंधनइतिधातोः ॥ कथंबंधकत्वमतउक्तं ॥ **अहं-
काररूपेणेति** ॥ तस्यतदभिमानित्वादितिभावः । इरावशब्दार्थोन्नमिति ॥ ॐ **संबंधानुपपत्तेश्च** ॐ ॥ पत्युरशरीर-
त्वाज्जगताकार्यकर्तृभावसंबंधानुपपत्तेश्चनपत्युःकारणत्वमित्यर्थः ॥ ॐ **अधिष्ठानानुपपत्तेश्च** ॐ ॥ पृथिव्याद्यधिष्ठा-
नानुपपत्तेश्चनपत्युःकारणत्वमित्यर्थः ॥ ॐ **करणवच्चेन्नभोगादिभ्यः** ॐ ॥ कारकजातमेवतस्यकरणवद्देहइवातोनसं-

संबंधानुपपत्तिरितिचेन्न भोगादिभ्योःदुःखाद्यनुभवरूपभोगोत्पत्तिमरणाख्यदोषेभ्यइत्यर्थः । कारकग्रामस्य करणसमुदायस्य ग्रहादिव्यावर्तनायसाक्षादित्युक्तं । तत्रापि अस्मदादिशरीरेपि असंभवात्पुनःसृष्टिकाले उपादानहानयोरितिसत्सप्तमी ॥ उक्तपक्षावेवेति ॥ संबंधानुपपत्तेः करणवच्चेदित्युक्तशरीराभावतद्वत्त्वपक्षावित्यर्थः ॥ ॐ अंतवत्वमसर्वज्ञतावा ॐ ॥ शिवस्यदेहवत्वे अंतवत्वंपरिछिन्नत्वमशरीरत्वेसर्वज्ञताभावःस्यादित्यर्थः ॥ इच्छाग्रहीतेति ॥ यज्ञदत्तस्तुनैवमितिभावः ॥ अनेनेति ॥ शरीराभावेज्ञानस्यैवायोगेनेत्यर्थः । ज्ञानं ईशस्य ॥ सूत्रकृतानिरस्तमिति ॥ आत्मनिचैवंविचित्राश्चहि । सर्वोपेताचतद्दर्शनात् । विकरणत्वान्नेतिचेत्तदुक्तमित्यादावित्यर्थः ॥ प्रमाणविशेषैरिति ॥ श्रुतिरूपैरित्यर्थः । श्रुतौ अंगंदेहंप्रत्यंगंकरादिलक्षयामहेजानीमः ॥ देहस्येति ॥ व्यक्तिशब्दोक्तस्येत्यर्थः ॥
॥ ११ ॥ पूर्वोक्तन्यायेन असामंजस्यादित्यनेन महावाममतमाह ॥ शक्तिरेवेति ॥ ॐ उत्पत्यसंभवात् ॐ ॥ नशक्तेर्जगकारणत्वं कुतः उत्पत्यसंभवात् स्त्रीमात्रादपत्योत्पत्यसंभवादित्यर्थः । केषांचित् मध्यमवामानां ॥ ॐ नचकर्तुः करणं ॐ ॥ कर्तुश्चानुग्राहकस्याशिवस्यकरणंज्ञानादिसाधनंनास्तीत्यर्थः । केचित्तु अणुवामाः ॥ ॐ विज्ञानादिभावेवातदप्रतिषेधः ॐ ॥ कर्तुःविज्ञानादिसद्भावेंगीकृतेतदप्रतिषेधः तस्यशैवमतस्याप्रतिषेधोनकृतइत्यर्थः ॥ अनुमतमेवस्यादिति ॥ तथाचापसिद्धांतइतिभावः ननुतदपित्वन्मताविरोधित्यतआह ॥ तच्चेति ॥ ॐ प्रतिषेधाच्च ॐ ॥ सकलश्रुत्यादिविरुद्धत्वाच्चासमंजसंशाक्तेयमतमित्यर्थः ॥ १२ ॥ इतिश्रीमत्तत्वप्रकाशिकावाक्यार्थमंजर्यां शर्कराश्रीनिवासविरचितायां द्वितीयाध्यायस्य द्वितीयःपादः ॥ ॥ ॥ ॥ ॥ ॥

श्रीगुरुभ्योनमः ॥ अध्यात्मेति ॥ आत्मानंदेहमधिकृत्यवर्तमानामिंद्रियादीत्यर्थः ॥ अंतिमत्वादिति ॥ तस्याः सन्निहितत्वेनप्रथमप्रविचारविषयत्वेनतद्विचारश्चतुर्थपादइतिभावः ॥ उक्तेति ॥ जगत्कारणत्वादीत्यर्थः ॥ अभ्युपगतार्थद्वयइति ॥ श्रुत्यर्थत्वेनाभ्युपगतपरापरतत्त्वरूपद्वये अन्यतरार्थेजगतिश्रुतीनामप्रामाण्यप्राप्तावन्यार्थेब्रह्मजत्कारणत्वादावनाश्वासप्रसंगादित्यर्थः । प्रकारांतरेणोक्तोपयोगमाह ॥ जगत्स्वरूपेति ॥ नन्वत्रपादेसूचीकटाहन्यायेन वक्ष्यमाणक्रमानुसारेणाधिभूताधिदैवपरमात्मजीवेतिवक्तव्यं अतःकथंजीवादित्वेनग्रहणमित्यतआह ॥ अत्रेति ॥ जीवादिविचारस्यबह्वर्थविषयकत्वेन जिज्ञासुंप्रत्यभ्यर्हितत्वादल्पाचतरत्वाच्च क्रमोल्लंघनमित्यर्थः । नन्वधिभूताधिदैवेष्विति कथं अव्ययंविभक्तीत्यादिनाव्ययीभावेसति तस्याव्ययीभावश्चेत्यव्ययत्वादव्ययादाप्सुपइतिसुपोलुकाभाव्यत्वादितिचेदुच्यते । नात्राव्ययीभावोयेनोक्तदोषः किंतुकर्मधारयएव । तत्राधिभूतेत्यत्राधिराधिक्यार्थः । एवंचाधि आधिकानिचतानि भूतानिचेत्याधिभूतानि भूतानामाधिक्यंच कार्यकारणसाहित्येनेत्याभिप्रेत्य तस्यतात्पर्यमाह ॥ सकारणकार्यभूतानीति ॥ कारणमव्यक्तादिकार्यमन्नादि तत्सहितपंचभूतानीत्यर्थः । वक्ष्यमाणरीत्यावियदादिशब्दानामन्योपलक्षकत्वादितिभावः । आधिदैवेत्यत्राधिरैश्वर्यार्थः । ततश्चाधि ईश्वराणिचतानिदैवतानिचेतिविग्रहमभिप्रेत्यतत्तात्पर्यमाह ॥ तदभिमानिदेवतेति ॥ सकारणकार्यभूताभिमानिदेवतेत्यर्थः । आकाशोत्पत्तीत्येतदुपपादनायभूतेष्वित्याद्युक्तं ॥ असंभवीति ॥ आकाशोत्पत्तिविनाशाकर्तृत्वादितिभावः । आकाशोत्पत्तिसमर्थनेनैवासंभवेनिवृत्ते किंश्रुत्याविरोधनेत्यतउक्तं ॥ श्रुतिविरोधेनेति ॥ आकाशोत्पत्तिश्रुतेःश्रुत्यंतरविरोधेनाप्रामाण्येतद्दृष्टांतेनाविशिष्टभागस्याप्यप्रामाण्यप्रसंगादितिभावः ॥ अतएवेति ॥ उत्पत्तिश्रुतेरप्रमाणत्वेनतद्विरोधाभावादेवेत्यर्थः ॥ भाक्तत्ववर्णनमिति ॥ आकाश

पदवाच्यानांभूताव्याकृततदभिमानिनांमध्ये अव्याकृतादीनांस्वरूपानादित्वपरत्ववर्णनमित्यर्थः ॥ अन्यार्थतयेति ॥
प्रादुर्भावतयेत्यर्थः । वाय्वादावित्यनंतरमनुवृत्तसंभूतशब्दस्येतियोज्यं । कुतइत्यतआह ॥ नहीति ॥ ॐ नवियद
श्रुतेः ॐ ॥ वियदनुत्पत्तिमन्नभवति कुतः अश्रुतेः अनुत्पत्तिश्रुत्यभावादित्यर्थः ॥ नियमेनेति ॥ क्वचिदभावसद्भा
वेपि पृथक्प्रमाणस्योपन्यासादितिभावः ॥ ॐ अस्तितु ॐ ॥ अस्त्येववियदुत्पत्तिश्रुतिरात्मनआकाशइत्यादिकेत्य
र्थः ॥ ॐ गौण्यसंभवात् ॐ ॥ अनादित्वश्रुतिर्गौणी गौणानादिपरा अन्यथोत्पत्तिश्रुतिबाहुल्यासंभवादित्यर्थः ।
सूक्ष्मोप्रतिघातः अतींद्रियः बाह्येंद्रियागोचरः आकाशपदेनात्मनआकाशइत्यत्रत्येन ॥ भूताकाशेति ॥ भूता
व्याकृततदभिमानिरमागणेशावित्यर्थः ॥ रूपित्वादिति ॥ भौतिकरूपित्वादित्यर्थः । नीलिमा नीलरूपवान् ॥ प
राधीनविशेषेति ॥ अत्राकाशस्यमूर्तपदार्थसंबंधरूपः रमायासिसृक्षत्वरूपः पराधीनविशेषोनुव्याख्यानानुसारेणद्र
ष्टव्यः ॥ सर्वेति ॥ आकाशपदवाच्यसर्वेत्यर्थः । कुतइत्यतआह ॥ भूतइति ॥ अनादिपदार्थस्यस्वरूपतोत्पत्त्यभा
वस्यभूतबाधितत्वादित्यर्थः । नन्वनयाव्यवस्थयाबहुवाक्याविरोधनिरासेपि अनुभवयुक्तिविरोधस्तुस्यादेवेत्यतआह ॥ अ
नेनेति ॥ उत्पत्तिश्रुतिप्राबल्यनिरूपणेनसाक्ष्यनुभवस्य विभुत्वयुक्तेश्चाव्याकृताकाशस्वरूपानादित्वविषयत्वेनसावका
शत्वादितिभावः ॥ असंभवयुक्तीति ॥ अनादित्वे उत्पत्तिश्रुतिबाहुल्याद्यसंभवयुक्तीत्यर्थः ॥ ॐ शब्दा
च्च ॐ ॥ अथहवावेतिश्रुतेश्चानादित्वश्रुतिर्गौणी उत्पत्तिश्रुतिर्मुख्यार्थेत्यर्थः । पुरुषप्रकृतिकालानांदेहोत्पत्त्याद्युत्पत्तेःसत्वे
नकथंनित्यत्वोक्तिरित्यतआह ॥ पुरुषादिपदैरिति ॥ प्राणश्रुत्योर्जीवचैतन्यस्यसकलजीवचैतन्यग्राहकपुरुषपदेनैव
नित्यवर्गेगृहीतत्वाद्देहादेश्चभौतिकानीत्यनित्यवर्गेग्रहणात्किमर्थंपृथग्ग्रहणमित्यतआह ॥ पुरुषपदेनेति ॥ आधिकमनो

वृत्तिज्ञानं तस्यमलयेप्यपरिलोपादितिभावः । पृथग्ग्रहणेनापिज्ञानजनित्यत्वंकथंज्ञापितमित्यतउक्तं ॥ सपरिकरयोरि
ति ॥ देहज्ञानादिपरिकरविशिष्टयोरित्यर्थः । प्राणश्रद्धापदप्रवृत्तिनिमित्तभूतपरिकरविशिष्टयोर्नित्यानित्यत्वंपरिकरस्व
पधर्माणांमध्ये कस्यचिनित्यत्वंकस्यचिदनित्यत्वंविनानुपपन्नमितिपरिकरभूतमनोवृत्तिज्ञानविशेषस्यनित्यत्वंदेहादेरनित्यत्वं
परिकरयोर्ग्रहणेनज्ञापितंभवतीत्यर्थः ॥ उक्तप्रतिज्ञाद्वयेति ॥ पुरुषाद्योनित्याः प्राणादयोऽनित्याइतिप्रतिज्ञाद्व-
येत्यर्थः ॥ तत्प्रकारश्चेति ॥ चतुष्टयात्मकआकाशश्चतुर्भिरपिभागैरुत्पद्यते उक्तायाउत्पत्तेश्चतुर्ष्वपिसत्वात् अवकाश
तदभिमानिस्वरूपभागेननोत्पद्यतइतिभागेवोक्तइत्यर्थः । उपरि उत्तराधिकरणे ॥ मुख्यार्थत्वदर्शनादिति ॥ नहि-
परमात्मनोमुख्योत्पत्तिरस्ति येनतत्रानुत्पत्तिमच्छब्दस्य मुख्यार्थःस्यादितिभावः ॥ ॐ स्याच्चैकस्यब्रह्मशब्द-
वत् ॐ ॥ यथैकस्यैवब्रह्मशब्दस्यहरौमुख्यत्वं अन्यत्रामुख्यत्वं तथैकस्यैवानुत्पत्तिवाचिशब्दस्यविष्णौमुख्यत्वेप्यन्यत्रामुख्य
त्वंस्यादित्यर्थः ॥ कारणेति ॥ पूर्णरूपप्रवृत्तिनिमित्तभावाभावरूपेत्यर्थः ॥ ॐ प्रतिज्ञाहानिरव्यतिरेकाच्छ
ब्देभ्यः ॐ ॥ आकाशेप्यनुत्पत्तिवाचिशब्दस्यमुख्यत्वे इदंसर्वमसृजतेतिप्रतिज्ञाविरोधःस्यात् कुतः अव्यतिरेकात्
आकाशस्यसर्वमध्यपातितत्वादित्यर्थः । आत्मनेत्यादिस्पष्टंसादित्वप्रतिपादकशब्देभ्यइत्यर्थः । ननुगौण्यसंभवादित्यत्रा-
संभवादित्यनेनैवश्रुतिबाहुल्यस्यलाभाच्छब्देभ्यइत्येतत्पुनरुक्तमित्यतआह ॥ अनेनेति ॥ असंभवप्रतियोगिनःश्रुति
बाहुल्यस्यशब्देभ्यइत्यनेनोक्तेतद्विवरणरूपत्वमितिभावः । इदमित्यनुवादः ॥ ॐ यावद्विकारंतुविभागोलो-
कवत् ॐ ॥ यावदित्यवधारणेयावद्विकारंविक्रियमाणएवार्थोविभागोविभक्तः अल्पशक्तिमान् लोकवत् घटवदि-
त्यर्थः । आकाशेत्यनुवादः परंपरयेतिव्याख्या आकाशाद्वायुरित्युक्तपरंपरयेत्यर्थः ॥ असित्वमिति ॥

द्रव्यत्वस्यसंयोगविभागाविनाभावादितिभावः । नन्वथहवावनित्यानिपुरुषःप्रकृतिरात्माकालइतिप्रकृत्यादीनांत्रयाणांनि त्यत्वस्योक्तेःकथंतद्विभागेननायंतइत्युत्पत्तिरुच्यतइत्याशंक्यपरिहरति ॥ नचास्येति ॥ अनेनेति ॥ प्रकृत्यादेरपिविका रित्वसाधकविशेषप्रमाणोदाहरणेनेत्यर्थः ॥ १ ॥ तासामिति ॥ प्राच्यादिदिक्स्थितपरमात्मबाहुविशेषाणांधर्मज्ञाना दिरूपप्रधानवायुपुत्रइत्यर्थः । योवंपवते वीजतेसैषादेवतानादिरित्यर्थः । गौणार्थत्वंस्वरूपानादित्वरूपं ननुभाष्योदाहृत श्रुतावाकाशादिपदैर्भूतान्येवोच्यंतेतेभ्यश्चमुख्यवायोःस्वरूपनित्यत्वमेवविशेषइत्यतआह ॥ नचाकाशपदेनेति ॥ नि म्लोचोस्तमयः ॥ एवंविधस्येति ॥ नित्यत्वव्याप्तोक्तबहुहेतुमतउत्पत्तिरनुभवबाधितेत्यर्थः ॥ ॐ एतेनमातरि श्वाव्याख्यातः ॐ ॥ एतेनाश्रुतेरित्यादिप्रागुक्तहेतुसमुदायेनमातरिश्वावाय्वनुत्पत्यादिपरशब्दोपिगौणत्वेनव्याख्या तइत्यर्थः । एतेनेत्यनेनपरामृष्टहेतुसमुदायंक्रमेणाह । अनुत्पन्नत्वेनाश्रुतत्वादिनामुख्यानुत्पत्यनुपपत्तेरित्यंतेन ॥ प्रमा णविरोधेनेति ॥ नजायतेम्रीयतइत्यादीश्वरस्यानादित्वप्रतिपादकप्रमाणविरोधेनेत्यर्थः । कुतइत्यतआह ॥ पराधी नेनि ॥ तथाचोत्पत्तेःपारतंत्र्यरूपत्वेनतदनंगीकारेस्वातंत्र्यमनिवार्यमितिभावः ॥ द्वयोर्युक्तमिति ॥ तथात्वेद्वयोरपि सर्वोत्तमत्वप्राप्तेरितिभावः । तदप्यस्त्वित्यतआह ॥ अन्योन्येति ॥ परस्पराधीनत्वानधीनत्वयोरित्यर्थः । वायोः सर्वोत्तमत्वेविष्णुस्तदधीनइत्यंगीकार्यं । विष्णोःसर्वोत्तमत्वेवायुस्तदधीनइत्यंगीकार्यं । एकस्यैवोच्चत्वंनीचत्वंविरुद्ध मितिभावः । व्यूह्य समूहीकृत्य स्वात्मानंनियामकत्वेन कथमनेनस्मृतिवचनेनश्रुतियुक्तिपरिहारइत्यतआह ॥ अत्रेति ॥ प रात्परनित्यत्वमित्यस्यव्याख्यानंस्वातंत्र्यलक्षणमिति परनित्यत्वमित्यस्यदेहादेरपिनित्यत्वमिति ॥ सम्यगनित्यतेति ॥ पार्थिवादिवदुपचयापचयशून्येभ्यइत्यर्थः ॥ अतिशयेननित्यतोच्यतइति ॥ उपलक्षणमेतत् अतिशयितचेतनत्वंसर्वदे

घोपास्यत्वंद्वत्तिज्ञानप्रवाहोदयनिम्लोचाभावेनतस्योदयनिम्लोचाभावश्चोच्यतइतिनयुक्तिविरोधोपीतिभावः । अमुख्यमु
ख्याभिमानिनौभवद्रप्रधानवायू विरोधंशंकते॥तैत्तरीयेति ॥ तेजःपूर्वंवेति ॥ तत्तेजोऽसृजतेत्युक्तेरितिभावः । प्रागेवमू
लतएव ॥ २ ॥ सत् ब्रह्म । सौम्येतिसंबुद्धिः इदं अस्य ॥ ॐ असंभवस्तुसतोनुपपत्तेः ॐ ॥ सतोब्रह्मणअसंभवस्त्वनु
त्पत्तिरेव कुतः अनुपपत्तेः असतःसकाशात्सज्जन्मनोक्वाप्यदर्शनेनानुपपत्तेरित्यर्थः । तर्हितस्याःकागतिरित्यतआह॥अनुप
पत्तिश्रुतिश्चेति ॥ व्यवस्थास्वरूपानादित्वरूपा॥ सिद्धेति ॥ सिद्धार्थेत्यर्थः । अतएव उक्तव्यवस्थायाव्यवच्छेद्यत्वा
देव ॥ सतइत्यनेनैवेति ॥ सत्वंस्वातंत्र्यमुद्दिष्टमितिभारतोक्तेरितिभावः । तेनैवसच्छब्देनगतिः अस्वतंत्ररूपो
पाधिः एतदेवाह ॥ गगनेति ॥ कथंप्राणःसदितिप्रश्नोत्तरमाह ॥ महत्वादिति ॥ स्मृतिंचाहेति ॥ हेदेव
त्वंकविःसर्वज्ञोजश्च तथापिभवान् शक्त्यां भार्यायां गुणानां कर्मणां अदृष्टानां योनौ हेतावजायां प्रकृतौ रेतोगर्भं
आदधे स्थापितवान् । ततस्तस्याःप्रकृतेःसत्प्रमुखावायुप्रधानावयंयदर्थंयत्प्रयोजनायवभूविम तेतवाकिंकरवामेत्यर्थः
॥ उपचयेति ॥ उत्तरोत्तरमुपचयोधिकइत्यर्थः । विशेषितत्वंविशिष्टत्वं विकारवद्देहसंबंधएवतस्यनस्वतोविकारइ
तिभावः । कारणत्वात् उपादानत्वात् ॥ तद्धर्मादेरिति ॥ अतोनाविकारइत्यनेनपुनरुक्तमितिभावः । भगवद
भिन्नत्वानुवादप्रतीतिनिरासायाह ॥ एकैवेति ॥ तथात्वेइच्छाद्यभेदेनोक्तःस्यादितिभावः । अविभिन्नेत्यादेःप्रयो
जनांतरमाह ॥ एतेनेति ॥ ३ ॥ ननुतेजउत्पद्यतेनवेत्याविचार्यपरमात्मनोजायते अन्यतोवेतिविशेषविचारकरणम-
युक्तमित्यतउक्तं ॥ एवमिति ॥ तर्ह्याकाशाविषयेतत्किनविचार्यतइत्यतउक्तं ॥ वियदादीनांचेति ॥ तद्ब्रह्मवा
युद्वारेति वायुलक्षणावांतरकारणव्यवधानेनेत्यर्थः ॥ अविरोधादिति ॥ अन्यनिषेधाभावादितिभावः ॥ ॐ तेजो

तस्तथाप्याह ॐ ॥ यथावियदादितथातेजोप्यतःभगवतएवोत्पद्यते कुतः हियस्मात्तत्तेजइतिश्रुतिराहेत्यर्थः ॥ देव
तात्वादिति ॥ तथाचश्रुतिद्वयस्यापिनिमित्तपरत्वेनविरोधप्राप्तौवायोरग्निरितिश्रुतेर्देवताद्वारत्वमात्रपरत्वेनव्यवस्थां
वक्तुमयमायासइतिभावः । ननुवाय्वादिशब्दानामुभयपरत्वेनोपादनत्वमात्रग्रहणेविरोधाभावस्तदवस्थएवेत्यतआह
॥ उपादानशक्तिश्चेति ॥ तत्तेजोऽसृजतेतिश्रुतेःब्रह्मणोभूतवाय्वनुप्रवेशेनतद्भूतोपादानत्वशक्तिप्रेरकत्वेनापिकारण
त्वप्रतिपादकत्वेनवायोरग्निरितिश्रुतेर्ब्रह्मनैरपेक्षेणोपादानत्वप्रतिपादकत्वेविरोधप्राप्तौब्रह्मप्रेरितोपादानत्वशक्तियुक्तत्वरूप
द्वारत्वप्रतिपादकत्वेनवायोरग्निरितिश्रुतेर्व्यवस्थांवक्तुमयमायासइतिभावः ॥ ४ ॥ प्रत्यक्षमूलव्याप्तिकत्वेनयुक्तेःप्राब
ल्यमुक्त्वाश्रुतिमूलव्याप्तिकत्वेनापितदाह ॥ तथाचश्रुत्यंतरमिति ॥ तत्तेजइति ॥ तत्तेजोरमाख्यमैक्षताविचारमक
रोत् । किमित्यहंबहुरूपंस्यांतदर्थंजगदुत्पादयामीति इत्थंविचिंत्य तत्तेजोपोऽम्नामकप्राणसहितं तदाभिमन्यमानं अबा
ख्यं भूतमसृजत् यस्मादादौतेजसएवापोजातास्तस्मादद्यापि पुरुषः यत्रक्वचिद्देशे कालेवा शोचतिरोदतेस्वेदतेतिस्विद्य
तेवातत्त्रापस्तेजसएवजायंतइतिहिप्रसिद्धमित्यर्थः ॥ ॐ आपः ॐ ॥ आपोप्यतएवजायंतेयस्माद्ब्रह्मैवेदमितिश्रुति
स्तथाहेत्यर्थः । तद्वसूत्रितत्वंस्यादित्यतआह ॥ सूत्रपदमिति ॥ तद्विषयंतेजोगतभगवद्विषयं ॥ पूर्वन्यायेनैवेति ॥
द्वारत्वप्रतिपाकत्वन्यायेनेत्यर्थः ॥ ५ ॥ साक्षादन्यद्वारावेति ॥ नवियदश्रुतेरेवेनमातरिश्वाव्याख्यातइत्यधिक
रणाभ्यां आकाशवाय्वोः साक्षाद्ब्रह्मजातत्वे तेजोतस्तथाह्याह आपइत्याधिकरणाभ्यां भूतवाय्वादीनामाकाशादिद्वारा
ब्रह्मजातत्वेचसिद्धेसतीत्यर्थः ॥ द्वारविषयेति ॥ अवांतरकारणविषयेत्यर्थः । तत्रकोटिद्वये किमस्येत्यादिप्रश्न
द्वयोत्तरमाह ॥ तत्रश्रुतीति ॥ शंकायामित्यर्थः । सावकाशत्वादिनाव्यवस्थास्तित्याह ॥ निरवकाश

त्वेनेति ॥ श्रुतिद्वयस्येतिवर्तते । अन्यतरसावकाशत्वमाशंक्यनिराकरोति ॥ नचेत्यादिना ॥ बहु-
वाक्येति ॥ ताअन्नमसृजंतताआपोन्नमसृजंत अद्भ्यएवतदध्यन्नाद्यंजायतइत्यादिहुवाक्येत्यर्थः ॥ तस्मादिति ॥
तस्मादन्नस्याप्कार्यत्वादेवयत्रक्कचदेशेवर्षतितत्रैवभूयिष्ठमन्नंभवति । अन्यथासिद्धिंनिरस्यति ॥ अद्भ्यएवेति ॥
तदन्नाद्यंप्रसिद्धान्नप्रभृतिपार्थिवमद्भ्यएवजायतेनान्यस्मादित्यर्थः । अशितंभक्षितं त्रेधापुरीषमांसमेदोरूपेण ॥ लिंगा
दिति ॥ वृष्टिजन्यत्वाद्यत्वपुरुषाद्यात्मनापरिणामरूपादित्यर्थः । उक्तश्रुतिविरोधादिति पृथिवीजन्यौषधिजन्यत्वप्रति
पादकौषधीभ्योन्नमितिश्रुतिविरोधादित्यर्थः॥ बहुकल्पनापातादिति ॥ अन्नस्याजन्यत्वमौषधिजन्यत्वंपृथिव्याश्चाज
न्यत्वंचेतिबहुकल्पनापातादित्यर्थः ॥ मुख्यार्थेति ॥ साक्षादजन्यत्वरूपेत्यर्थः ॥ ॐ पृथिव्यधिकाररूपश
ब्दांतरादिभ्यः ॐ ॥ अन्नंपृथिव्यैव नप्रसिद्धान्नं कुतः अधिकारात् तत्तेजोसृजतेत्यादिभूतप्रकरणात् । यत्कृष्णंतद
न्नस्येतिकृष्णरूपात् पृथिवीवान्नमितिशब्दांतरात् वेदोनाप्रमाणमपौरुषेयत्वादितियुक्तेश्चेत्यर्थः ॥ तासामिति ॥
तासांतेजोबन्नादिदेवतानांमध्येकैकदेवतांत्रिवृतंत्रिवृतंस्वाभिमन्यमानभूतेनसहान्योन्यप्रविष्टामकरोदित्यर्थः ॥ भूतवि
षयत्वादिति ॥ अन्नंचभौतिकमेवनभूतमितिभावः । ननुदेवतानामन्योन्यप्रवेशे एकैकत्रकार्यंत्रयेणभाव्यंतत्कथमित्य
तोयदग्नेरित्यादिवाक्यंप्राप्तंतस्यार्थः । अग्नेर्यद्रोहितंलोहितंरूपंतत्तेजसोरूपंतेजोभिमानिश्रीरूपसंभवं अग्नेर्यच्छुक्लंरूपंतदपां
रूपमन्नामकवायुरूपजन्यं अग्नेर्यत्कृष्णंरूपंतदन्नाभिमानिरुद्ररूपसंभवं ॥ जानीयादिति ॥ तेजोशितमितिव
दिति ॥ तत्रतेजसएवभक्षणासंभवात् यथातेजःशब्दःतैजसपदार्थपरस्तथापृथिवीवाचकोन्नशब्दःपार्थिवपदार्थपरइ-
त्यर्थः । प्रत्यक्षवत् साक्षिवत् पक्वस्वर्णगतपीतयोर्लोकेऽवांतरविशेषदर्शनान्नभाष्येपुनरुक्तिःशंक्या ॥ ६ ॥

तदभावेति ॥ आदिपदोक्तसंहारकर्तृत्वाभावेत्यर्थः । यथाकथंचित् उक्तप्रकारद्वयेनापि तदेवव्यनक्ति ॥ त
स्येति ॥ भाक्तार्थत्वेनेति ॥ रुद्रोमाविशांतकइति श्रुतेर्विष्णुसंहृतभिन्नपदार्थसंहर्तृत्वरूपाविभागविषयत्वेनेत्य
र्थः ॥ युक्तीति ॥ क्वचिदपिविष्णोःसंहारकर्तृत्वेनांगीकारोपिपितृत्वरूपयुक्तिविरोधानिस्तारादित्यर्थः । असि
आविशेति मध्यमपुरुषानुरोधेनाह ॥ रुद्रत्वामिति ॥ मेत्येतदस्मच्छब्दादेशरूपंनिषेधार्थकंचतंत्रेणोपात्तमितिभावेनाह
॥ मामाविशेति ॥ मेत्यस्यानुवृत्तिमत्वाह । मामाप्ययस्वेति ॥ ॐ तदभिध्यानादेवतुतल्लिंगात्सः ॐ ॥
सतुविष्णुरेवसंहर्ता कुतः संसारमोक्षस्यतदभिध्यानात्तस्यभगवतोभिध्यानमिछातदधीनत्वात् । किंततइतिचेत् तल्लिं
गात् । तस्मान्मोक्षस्यभगवदिच्छाधीनत्वलिंगात् सपरमात्मासंहारकर्तृत्वेनानुमीयतइत्यर्थः । किंचातइतिप्रश्नो
त्तरमाह ॥ तदिच्छेति ॥ तत्कृतइत्यनंतरंमोक्षइत्यनुवर्ततेभूयश्चेतिचशब्दाद्वीप्सालोपइत्याशयेनभूयोभूयइत्युक्तं ।
तत्वभावादित्यस्यार्थोयथार्थध्यानाच्चेति ॥ शक्तस्यैवेति ॥ प्रामाणिकत्वाल्लयस्तावदंगीकार्यः । सचकार्यत्वात्सकर्तृकः
कर्ताचशक्तएवभवेच्छक्तश्चविष्णुरेवेतिसंहर्तेतिभावः । ईरितमित्यस्यनपुंसकत्वेक्रियाशब्दवृत्त्ययोगादाह ॥ सृष्ट्यादि
कमिति ॥ पूर्वत्रापीत्यर्थः । तेनसमस्तमित्यस्यनविशेष्यानुक्तिदोषः । आख्यारूपेनामशरीरेयस्यासाविर्तान्प्रत्ययार्थः
॥ संहर्तृत्वेति ॥ कलसंहरणइतिधातोरिरितिभावः ॥ ममत्वेति ॥ अनेनममत्वादिदोषयुक्तत्वाख्यसाधनधर्माव
च्छिन्नसाध्यव्यापकरूपोपाधिरुक्तोभवति ॥ ७ ॥ उत्तरयति ॥ श्रुतिविगानमिति ॥ ॐ विपर्ययेणतुक्रमोत
उपपद्यतेच ॐ ॥ लयक्रमः विपर्ययेणतुसृष्टिक्रमाद्विपर्ययेणैवभवति कुतः अतोयःक्रमाद्युत्क्रमाच्चेतिश्रुतेरेव तर्हि
लोकविरोधइत्यतउक्तं ॥ उपपद्यतेचेति ॥ पूर्वोत्पन्नानांसामर्थ्याधिक्याद्विपर्ययउपपद्यतेचेत्यर्थः । उत्तरमाह ॥ एते

नेति ॥ क्रमशब्दस्यव्युत्क्रमपरत्ववर्णनेत्यर्थः तत्रापिक्रमशब्दस्यव्युत्क्रमपरत्वादितिभावः ॥ **लौकिकानामिति** ॥ अनेनपूर्वोत्पन्नत्वात्पूर्वंलयइत्यत्रसामर्थ्याभावउपाधिरित्युक्तंभवति ॥ **सन्निधानमिति** ॥ पदार्थस्वारस्यानुसारेणोक्त्वातेषामितिबहुवचनानुरोधेनाह ॥ **प्रथमावेति** ॥ पूर्वव्याख्यानेतुवीप्सयैवबहुवचनोपपत्तेरितिभावः । सन्निधीयतेसन्निहितोभवति ॥ ८ ॥ **अक्षरादिति** ॥ अत्रसर्वशब्दस्यषष्ठ्यंततयाविपरिणतस्यविलयशब्देनाप्यन्वयादितिभावः ॥ **लिंगेति** ॥ क्रमादुत्पन्नयोर्मनोविज्ञानयोःक्रमाद्विलयाख्येत्यर्थः ॥ ॐ **अंतराविज्ञानमनसीक्रमेणतल्लिंगादितिचेन्नाविशेषात्** ॐ ॥ विज्ञानमनसीविज्ञानमनस्तत्वे अंतरा बिनाक्रमेणव्युत्क्रमेणान्येषांलयः कुतः तल्लिंगात् तत्रोक्तेथैमनसश्चेत्यादिश्रुत्युक्ताक्क्रमादुत्पन्नयोर्विज्ञानमनसोःक्रमाल्लयाख्यार्लिंगादित्तिचेन्न अविशेषात् विज्ञानमनसोरुत्पत्तिक्रमेणैवलयइत्यत्रविशेषप्रमाणाभावाद्युत्क्रमाद्विलयश्चेत्याविशेषप्रमाणाच्चेत्यर्थः ॥ **नचसामर्थ्येति** ॥ पूर्वोत्तरलययोःक्रमेणाल्पाधिकसामर्थ्ययोःप्रयोजकत्वेनमनोविज्ञानयोश्च सामर्थ्याधिक्यमेतेषामित्युक्तरीत्याक्रमेणाधिकाल्पसामर्थ्यवत्वादितिभावः ॥ **समसामर्थ्यस्यापीति** ॥ स्मृतौपूर्वोत्पन्नानांसामर्थ्याधिक्यायोगव्यवच्छेदकावधारणाभावादितिभावः । वाक्तदभिमानिन्युमामनसितदभिमानिनिरुद्रे तन्मनोज्ञानआत्मनि विज्ञानतत्वाभिमानिनि लीयतइति स्मरेदितिवाक्यशेषार्थः ॥ ॐ **चराचरव्यपाश्रयस्तुस्यात्तद्व्यपदेशोभाक्तस्तद्भावभावित्वात्** ॐ ॥ अत्रचरेतिचंचलत्वान्मनोरूपमिंद्रियंतज्जन्यंज्ञानंचोच्यते अचरेत्यचंचलत्वान्मनस्तत्वंविज्ञानतत्वंचोच्यते स्यादितिसंभावनायां सचासौव्यपदेशश्चतद्व्यपदेशस्तथाचतद्व्यपदेशःमनोविज्ञानामितिशब्दःचराचरव्यपाश्रयःस्यात् । यद्यपिमनस्तत्वांतःकरणविज्ञानतत्वावबोधरूपचतुष्टयविषयकःसंभावितः तथापिप्राणान्मनोमनसश्चविज्ञानमितिश्रुतौ तद्व्यपदेशस्तुभाक्तः अंतःकरणावबोधरूप

विषयएवनतुमनोविज्ञानविषयकः नचांतःकरणावबोधकविषयकत्वेनुपपत्तिरस्ति कुतः तद्भावभावित्वात् अत्रत दितितंत्र तत्राद्यःसप्तम्यंतश्चराचरपरामर्शकः चराचरशब्दौचचेतनाचेतनात्मकसर्वपरौ द्वितीयश्चषष्ठ्यंतोमनःपरामर्शकः त थाचतेषुचराचरेषुस्थावरजंगमात्मकसर्वविषयेतस्यमनसोभावेनधर्मेणालोचनेनावबोधस्यभावित्वादुपपन्नत्वादित्यर्थः॥ अध ज्ञानामिति ॥ उभयत्रापितत्वानांनीचक्रमेणाभिव्यक्तेरितिभावः। देहस्येत्यपरोक्षापेक्षया व्यक्तावपरोक्षे नीचक्रमेणव्य क्त्यंगीकारएवसर्वोत्तमस्यहरेरंतेपरोक्षज्ञानमितियुज्यतइतिभावः ॥ ९ ॥ ॐ नात्माश्रुतेर्नित्यत्वाच्चताभ्यः ॐ ॥ आत्मापरमात्मानलीयतेकुतः अश्रुतेःब्रह्मलयस्याश्रवणात् ताभ्योनित्योनित्यानांसनित्योनिर्गुणःसनित्योविभुरित्यादि श्रुतिभ्यस्तस्यनित्यत्वाच्चेत्यर्थः ॥ उक्तत्वादिति ॥ असंभवस्तुसतोनुपपत्तेरित्यत्रेतिशेषः ॥ प्रेरयतीति ॥ अ- तोनपुनरुक्तिरित्याशयः ॥ अपिहितत्वेति ॥ आच्छादितत्वेत्यर्थः। प्रादुर्भावश्चेति तपसस्तन्महिनाजायतैकमितिश्रुतिवि शेषेणेत्यर्थः अपिहितार्थेप्रयुक्तइतिलयादर्शनादितिभावः। श्रुत्यंतरबलादित्यनंतरमर्थांतरंपरिकल्प्यतइत्यनुवर्तते परत्वंप्र तिगुणशब्दोक्तब्रह्मादेरवधित्वात्तत्रचापादानेपंचम्याभाव्यत्वादाह ॥ गुणेभ्यइति ॥ अप्रधानेभ्यइत्यर्थः ॥ देहानि त्यत्वस्येति ॥ अन्यथास्वरूपनित्यषष्ठ्यतनित्यपदोक्तजीवाधिक्यालाभादितिभावः ॥ १० ॥ असंगतिंपरिहरति ॥ नित्यत्वादेवेति ॥ विवक्षितत्वात् अनादिपदेनतत्रजीवस्यप्रागभावाप्रतियोगित्वे उत्पत्तेरेवेति प्रलयेसर्वोत्प त्तिनिमित्तकारणदृष्टाश्रयत्वेनजीवसत्वस्यांगीकार्यत्वेनतस्यप्रागभावप्रतियोगित्वेतदानींजीवाभावेननिराश्रयादृष्टासंभवात् कारणाभावेनजगदुत्पत्तेरेवाभावप्रसंगादित्यर्थः ॥ नचाकाशादीनामिति ॥ अनादित्वरूपहेतुविशिष्टानामप्यव्या कृताकाशादीनांपराधीनविशेषलाभरूपोत्पत्तिमत्वेनव्यभिचारइत्यर्थः। तेषांपक्षसमत्वान्नव्यभिचारइत्याह ॥ असंप्र-

त्तिपत्तेरिति ॥ उत्पत्तेरितिशेषः ॥ व्यधिकरणत्वादिति ॥ अनुमानस्यजीवानुत्पत्तिसाधकत्वेनप्रत्यक्षस्यदेहोत्प त्तिग्राहकत्वेनभिन्नविषयत्वादित्यर्थः ॥ ॐ ज्ञोतएव ॐ ॥ जानातीतिज्ञोजीवः अतःपरमात्मनःसकाशादुत्पन्नतएव कुतः अतएततेवाएतइतिश्रुतेरेवेत्यर्थः ॥ ॐ युक्तेश्च ॐ ॥ अनादिनोपिजनेर्युक्तत्वाच्चेत्यर्थः । उपाधेः देहस्य ॥ पराधीनेति ॥ जीवस्यदेहलाभएवपराधीनविशेषावाप्तिरूपोत्पत्तिरितिभावः ॥ ११ ॥ आत्मनइत्यनेनपुनरुक्तिंसर्वा भेदप्रतीतिंचनिवारयितुमाह ॥ सर्वस्येति ॥ सर्वस्वरूपत्वप्रतीतिमपाकर्तुमाह ॥ पूर्णाइति ॥ सर्वःपूर्णगुणत्वतइत्युक्त रितिभावः । भाष्येशिनीतः बंधयतः ॥ व्याप्तत्वमणुत्वंचेति ॥ व्याप्तत्वंप्रतीयतइत्यनंतरंजीवस्येतिशेषः अणुत्वमि त्यनंतरंजीवस्यप्रतीयतइतिशेषइतिविवेकः । जीवविषयेत्यनंतरंकिंत्वीश्वरविषयेतिशेषः परिशेषरूपयुक्तिवक्तुंप्रसक्तंप्रति क्षिपति ॥ नतावदित्यादिना ॥ नन्वात्मेंद्रियसन्निकर्षस्याप्रयोजकत्वादणोरात्मनोयुगपत्सर्वेंद्रियजन्यज्ञानमस्त्वित्यत आह ॥ नहीति ॥ अप्राप्तेति ॥ असंबंधेत्यर्थ निवर्तयाति निष्पादयति ॥ उक्तदोषत्वादिति ॥ एवंचात्माकात्स्न्यमित्यत्रपिपीलिकादेहप्राप्तौ अपूर्तिःस्यादित्यादिदोषोक्तेरित्यर्थः । ततःकिमितिचेदत्रप्रष्टव्यं किमंशाएवगमनादिक्रि यांकुर्वंति उततत्समुदायः अथतदारब्धोवयवी आद्येआह ॥ तेषांचेति ॥ अंशानांप्रत्येकंगमनसामर्थ्यमस्तिनवा आद्येकश्चिदेकांदिशंगच्छेदपरस्त्वन्यां शरीरैकदेशगमनंभागांतरस्यान्यत्रगमनमतःशरीरविनाशःस्यात् द्वितीयेशरीरेक्रियान स्यात् नहियदैकांशोगच्छतितदंशेनापिगंतव्यमितिनियमोस्तीत्यर्थः । एकमत्यात्पक्षद्वयेप्यदोषइत्यतआह ॥ नहीति ॥ द्वितीयंदूषयति ॥ नचेति ॥ समुदायिभिन्नसमुदायाभावादितिभावः । तृतीयंव्याचष्टे ॥ नचांशेति ॥ एवंपरि शेषमुक्त्वानुमानंचाह ॥ तथाचेति ॥ सर्वभूतसंयोगित्वमेवव्याप्यत्वमितिभावः ॥ ॐ उत्क्रांतिगत्यागतीनां ॐ ॥

अणुरेवजीवः कुतः उत्क्रांतिमत्यागतीनांहेतूनांसकाशात् उत्क्रांत्यादिमत्वादितियावत् ॥ प्रसंगादिति ॥ जीवस्योत्क्रां
त्यादिकर्तृत्वोक्तौक्रियास्वातंत्र्यंसर्वकर्तृत्वमितितस्यस्वातंत्र्यप्रतीतौतस्यात्यंतंनिषिद्धतयातदस्वातंत्र्यंस्मृतमत्रविचार्यतइ—
त्यर्थः । स्वयमेवस्वेनैव ॥ स्मृत्यनुसारेणेति ॥ तत्रैकशब्देनान्यनिषेधादितिभावः ॥ ॐ स्वात्मनाचोत्तरयोः ॐ ॥
जीवस्योत्क्रांतिःस्वात्मनाचपरमात्मनैवनस्वतः कुतः उत्तरयोः उत्तरवाक्ययोःसकाशात् उत्तरवाक्यद्वयेतथाप्रतिपादना
दितियावत् उन्नीयते ऊर्ध्वंनीयते अतोनपुनरुक्तिरितिभावः । नन्वेषह्येवेतिद्वितीयवाक्येस्वात्मशब्दाभावात् सूत्रयुत्तरयोरिति
द्वितीयवाक्यग्रहणंकथमित्यतआह ॥ एषह्येवेति ॥ सुआनंदमादत्तइतिस्वात्मोच्यते एतदेवानंदमादत्तइत्यनेनोच्यतइति
भावः ॥ ॐ नाणुरतच्छ्रुतेरितिचेन्नेतराधिकारात् ॐ ॥ जीवोनाणुःकुतःअतच्छ्रुतेः व्याप्तइत्यनणुत्वश्रुतेरितिचेन्न तस्याः
श्रुतेर्ब्रह्मपरत्वात् कुतः इतराधिकारात् सआत्मेदंसृजतीतिपरस्यब्रह्मणःप्रकरणादित्यर्थः ॥ उपपादयतइति ॥ यथाभव
न्मतेमनोगतमेवदुःखाद्यात्मनिष्ठतयोपपादयतेतथेतिभावः । अतएव भगवत्परत्वादेव निरंतरोनिर्भेदः आतेनयातंमनसोजवी
यसारथंयंवामृभवश्चक्रुरश्विना यस्ययोगेदुहिताजायतेदिवउभेअहनीसुदिनेविवस्वतः । निमिषश्चिज्जवीयसारथेनायातम
श्विना अंतिषक्तुवामवइतिमंत्रद्वयंव्याचष्टे । हेअश्विनावित्यादिना ऋभवइत्यस्यार्थोदेवाइति यस्ययोगइति निमित्त
सप्तमीत्यभिप्रेत्याह ॥ परसंबंधादिति ॥ विवस्वतइत्यस्यतात्पर्यंभगवत्प्रसादेनेति दिवोदुहितइत्यस्यार्थोविद्योत्पन्नत
त्वज्ञानइति अस्यजायतइतिश्रौतपदेनान्वयः उभेअहनीइत्यस्यार्थः जीवन्मुक्तिमुक्त्यवस्थेइति सुदिनइत्यस्यार्थःसाध्या
विति जायतइत्यस्यवचनविपरिणामेनानुवृत्तिमभिप्रेत्याह भगवतइति भूत्वित्यस्यार्थोभवत्विति श्रुतौसदित्येतदवइत्यस्य
विशेषणं ॥ ॐ स्वशब्दोन्मानाभ्यां ॐ ॥ स्वशब्दपर्यायात्मशब्दः उन्मानमपरिमितत्वं ताभ्यांचव्याप्यत्वश्रु

तेरीश्वरपरत्वमित्यर्थः ॥ आनंत्येनेति ॥ तत्रानंताइत्युक्तेरितिभावः ॥ ॐ अविरोधश्चंदनवत् ॐ ॥ जीवस्याणुत्वेप्यविरोधःदेहव्याप्तिविरोधाभावः कथं चंदनवत् हरिचंदनबिंदुवदित्यर्थः ॥ ॐ अवस्थितिवैशेष्यादितिचेन्नाभ्युपगमाद्धृदिहि ॐ ॥ चंदनबिंदोर्देहैकदेशस्थितस्य सम्यगन्यत्रासम्यगित्यवस्थानविशेषाद्देहव्याप्तिःसंभवेपिजीवस्यतदभावाभयुक्तादेहव्याप्तिरितिचेन्न । जीवस्याप्यत्रस्थितिवैशेष्याभ्युपगमात् कुतः हृदिह्येषआत्मेतिश्रुत्याहृद्येवजीवस्यसम्यगवस्थित्युक्तेरित्यर्थः ॥ व्याप्त्यव्याप्तीति ॥ स्वरूपेणाव्याप्तिरंशैर्व्याप्तिरितिविवेकः ॥ ॐ गुणाद्वालोकवत् ॐ ॥ अणोरपिजीवस्यगुणाच्चिद्गुणाद्देहव्याप्तिःसंभवति कथं आलोकवत् आलोकस्यदीपादेःप्रकाशाख्यगुणेनगेहादिव्याप्तिवदित्यर्थः । आलोकवत् दीपवत् आलोकस्यप्रकाशस्य उभयोरप्यालोकशब्दवाच्यत्वादेवंव्यवहारः ॥ घटादिरूपस्यैवेति ॥ नीलघटसंबंधआलोकप्रभादौप्रतीयमानमारुण्यादिकंन्यायमतेपिनप्रभानिष्ठं तस्यशुक्लभास्वररूपत्वादितिभावः । ननुदीपेगच्छतिप्रभायागतिदर्शनेनक्रियावत्वाद्द्रव्यत्वमितिचेन्न । घटेगतेरूपस्याप्यगतिदर्शनेनव्यभिचारात् अन्यथातत्रैवरूपस्यस्थितिःस्यादितिध्येयं प्रकाशस्यापिरूपंप्रतीयतइतिकिंनस्यादित्यतआह ॥ नहीति ॥ यद्यालोकेरूपंस्यात्तर्हिघटाद्यसंबद्धस्याकाशेविद्यमानप्रकाशस्यापिरूपंगृह्येत नचैवमस्ति अतोनरूपित्वमित्यर्थः ॥ दीपंविहायेति ॥ गुणस्तुरूपादिर्न द्रव्यव्यतिरेकेणवृत्तेरितिभावः ॥ विवादादिति ॥ उत्तराधिकरणेगुणस्यापिगंधस्यद्रव्यंविहायप्रवृत्तेर्वक्ष्यमाणत्वादितिभावः ॥ तदनुविधानेति ॥ दीपानुसारेणगमनागमनादिमत्वेनेत्यर्थः । तेजोबलैश्वर्यमहावबोधसद्वीर्यशक्त्यादिगुणैकराशिरितिस्मृतौतेजसिगुणत्वसंग्रहायादिशब्दः कारणं उपादानं ॥ कारणांतरेति ॥ तदैवतत्रैव तैजसपरमाणवएवद्व्यणुकादिक्रमेणालोकमंडलमारभंतइत्येतच्चमानाभावात्नापेक्ष्यतइतिभावः

त्यर्थः ॥ ॐ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॐ ॥ जीवस्य तद्व्यपदेशो ब्रह्माभेदकथनं तद्गुणसारत्वात् तस्य ब्रह्मणो गुणः आनंदादिः तत्सदृशगुणः सारः स्वरूपं यस्य तद्गुणसारः तस्य भावस्तत्त्वं तस्मादेव न तत्त्वभेदात् कथं प्राज्ञवत् यथा प्राज्ञः परमात्मा जगद्गुणसदृशस्वरूपत्वेन तद्भिन्न उच्यते तथेत्यर्थः । गौण्या मुख्यया सादृश्यं निमित्तीकृत्य प्रवृत्ततया ॥ अन्यश्चाभिविशेषादिति ॥ अज्ञ इदन्य इत्यर्थः ॥ उपजीव्येति ॥ धर्मिग्राहकत्वेनोपजीव्येत्यर्थः । कथमित्यत आह ॥ जीवेति ॥ नाहं सर्वज्ञ इति ॥ साक्षिणा जीवस्य यः सर्वज्ञ इति ब्रह्मणश्च विरुद्धधर्माधिकरणतयावगमादिति भावः ॥ प्रमाणविरोधेति ॥ तत्त्वंपदमुख्ययोः सार्वज्ञ्यासार्वज्ञ्यविशिष्टयोरैक्यस्य विरुद्धधर्माधिकरणत्वयुक्तिविरुद्धत्वेन तत्त्वंपदयोश्चिन्मात्रलक्षकत्वं मायिनाप्यंगीकृतमित्यर्थः । तदेव व्यनक्ति ॥ लक्षणा तु ताविति ॥ तथा लाक्षणिकार्थत्वेन लोकोत्तरप्रज्ञेन लोकोत्तमज्ञानवतेत्युपहासः देवानांप्रियो मूर्ख इति निपातादलुक्समासः अनभिज्ञ इत्यर्थः । तदेव व्यनक्ति ॥ नहीति ॥ लिंगं तात्पर्यनिर्णय इत्युपक्रमादीनां तात्पर्यमात्रज्ञापकत्वेन शब्दार्थज्ञापकत्वायोगादिति । तर्हि मयापि तात्पर्यज्ञापकं तमित्युच्यते इति शंकते ॥ लिंगबलादिति ॥ अन्यार्थत्वादिति ॥ भेदपरत्वादित्यर्थः । तथाहि शकुनिसूत्रादिदृष्टांतबलेन स आत्मा तत्त्वमसीत्यत्रातत्त्वमसीति पदच्छेदेन भेद एवोच्यते न ह्यभेदं प्रतिज्ञाय भेददृष्टांताभिधानं युक्तं अत एवैकमेवेत्येतत्समाभ्यधिकराहित्यप्रतिपादनेन भेदपरं एवमैतदात्म्यमित्यपि यथा सोम्येत्यादिप्राधान्यादिनैकविज्ञानेन सर्वविज्ञानपरं एवं चैकमेवाद्वितीयमिति भेदस्योपक्रमादैतदात्म्यमिदं सर्वमिति तस्यैवोपसंहारात् । अतत्त्वमसीति नवकृत्वोऽभ्यासात् शास्त्रं विना ब्रह्मण्येश्वरभेदस्याप्राप्त्यापूर्वत्वात् अथ संपत्स्यत इति फलश्रवणात् येनाश्रुतं श्रुतं भवतीत्यर्थवादात् शकुनिसूत्रदृष्टांतैरुपपादनाच्चेति । अन्यत्र छांदोग्यभाष्यादौ वदन्कर्मनिर्णये एवं गौणार्थतया ॥ समन्वयेति ॥ वैदिकशब्दानां रूढि-

योगौविनावृत्त्यंतरेणभगवत्परत्वनिषेधकंतद्वाक्यमित्यर्थः ॥ अर्थांतरेति ॥ योगस्याप्यावश्यकत्वप्रतिपादनावसरएवे त्यर्थः ॥ क्वचिदितिविशेषणादिति ॥ तेनार्थमात्रनिषेधादितिभावः । ननुतत्वमसीत्यादेर्गौणार्थमात्रप्रतिपादक त्वेनरूढ्यादिनार्थांतरप्रतिपादकत्वाभावाद्विरोधस्तदवस्थएवेत्यतआह ॥ साचेति ॥ सागौणीवृत्तिश्चपरकीयन्यायेन तत्वमसीतिपदच्छेदमभिप्रेत्येव वस्तुतस्तुशकुनिसूत्रदृष्टांतानुसारेण सआत्माअतत्वमसि त्वंअतदसि तद्भिन्नोसि इति रूढ्याभेदप्रतिपादकत्वमेवेत्यर्थः ॥ १४ ॥ ब्रह्मन्ब्रह्मणि ॥ आनंत्यायेति ॥ कदापिनाशरहितमोक्षायसमर्थोभव तीत्यर्थः ॥ सफलमिति ॥ आनंत्यावाप्तिश्चनयुज्यतइतिभाष्ये उक्तत्वादितिभावः ॥ अत्रेति ॥ नाहिंसादिवि नाशिनएतद्वयंयुक्तमितिभावः ॥ प्रतिबिंबस्यैवेति ॥ ब्रह्मप्रतिबिंबभूतस्येत्यर्थः ॥ नहीति ॥ प्रतिमुखादेरनि त्यत्वस्यैवदर्शनादितिभावः ॥ ॐ यावदात्मभावित्वाच्चनदोषस्तद्दर्शनात् ॐ ॥ जीवस्यतदुपाधेश्चयावदात्मभा वित्वादात्मापरमात्मायावत्कालंतिष्ठतितावत्कालसत्वान्नदोषः अनादिकर्मनिर्बंधानंत्यावाप्त्यनुपपत्तिरूपदोषोनास्ति कुतः तद्दर्शनात् तस्ययावदात्मभावित्वस्यानित्यःपरइतिश्रुतावुक्तेः चशब्दात्स्मृतेरित्यर्थः । नाशत्वयाभावमुपपादयति ॥ बिं बस्येत्यादिना ॥ आ मानित्यो जीवोनित्यइतिपादद्वयस्याभिन्नस्थानगतत्वान्नपुनरुक्तिरितिभावेनाह ॥ स्मृतिद्वय वचनाच्चेति ॥ भाष्योदाहृतश्रुतिस्मृतिभ्यांजीवस्वरूपस्यनित्यत्वंबाधदेहस्यानित्यत्वमित्येवोच्यतेनतुस्वरूपस्यैवप्रतिबिं बपरत्वंनवाधोपाधेरित्युक्तं । तथाचकथंताभ्यामुक्ताखिलार्थप्रतिपत्तिरित्यतःस्वयमुक्ताशेषार्थप्रतिपादकंप्रमाणांतरमाह ॥ उक्तंचेतदिति ॥ अन्यत्रचतुर्थेनान्वयं कुतोन्यस्थितिरित्यतआह ॥ सर्वेति ॥ भवेत् विद्येत मास्तु प्रतिबिंबावस्थानमित्यतआह ॥ कथंचेति ॥ उपाधेश्चेति ॥ प्रथमतात्पर्यं ॥ १५ ॥ आनंदादि

स्वरूपत्वाभावइति ॥ आनंदीभवतीतिमुक्तौतद्वत्वोक्त्यातत्स्वरूपत्वाभावस्यैवोक्तेरित्यर्थः ॥ प्राणाभू तानीति ॥ यत्रजीवेप्राणाइंद्रियाणिभूतान्याकाशादीनिबंधकतयासम्यक्तिष्ठंति सपरमात्मप्रसादेनपरलोकंयातीतिभाष्योदात्हृतश्रुतिशेषार्थः । व्यवधानस्य प्रतिबंधकस्य एवमावरणत्वेनाभिमतस्यावरकत्वंनसंभवतीत्युक्तं इदानीमावरणमेवनेत्याह ॥ अत्रेति ॥ संसारइत्यर्थः ॥ तस्यैवेति ॥ जीवस्याहमित्यादिनावरणानुपपत्युक्त्याज्ञानाभावरूपाज्ञानस्यैवानुपपत्तेरुक्तत्वादित्यर्थः । नह्यावरणाभावेऽज्ञानाभावेनिर्निमित्तंभवितुमर्हतीतिभावः ॥ वैपरीत्यादिति ॥ शरीरस्यानंदाद्यनुभवरूपभोगायतनत्वेनभोगप्रतिबंधकत्वानुपपत्तेरितिभावः ॥ अतएव इदानीमावरणाभावादेव ॥ ॐ पुंस्त्वादिवत्त्वस्य सतोभिव्यक्तियोगात् ॐ ॥ जीवस्यसतस्तुसतएवप्राग्विद्यमानस्यैवास्य ज्ञानानंदादिरूपत्वस्य पुंस्त्वादिवत् बाल्येऽसतःपुंस्त्वस्त्रीत्वादेरिवाभिव्यक्तियोगात् अभिव्यक्त्याभितःसुष्ठुव्यक्त्यानिमित्तेनयोगादानंदीभवतीत्यादिव्यपदेशोपपत्तेरित्यर्थः । कालतःयौवने ॥ तन्निमित्तेति ॥ ज्ञानाभावनिमित्तत्रिगुणात्मकस्वगुणाच्छादिकाविद्यांगीकारादित्यर्थः । वक्ष्यमाणानुरोधेनाह ॥ केषांचिदिति ॥ तदामुक्तौ ॥ ॐ नित्योपलब्ध्यनुपलब्धिप्रसंगोन्यतरनियमोवान्यथा ॐ ॥ अन्यथावरणानंगीकारेमध्यमजीवानामानंदादेर्नित्योपलब्ध्यनुपलब्धिप्रसंगःनित्यमानंदादेरुपलब्धिस्तथा अनुपलब्धिः आनंदोपलब्ध्यभावोदुःखाद्युपलब्धिरितियावत् तदुभयंसमंस्यात् अन्यतरनियमः मुक्तियोग्यानामानंदादेरुपलब्धिनियमः तमोयोग्यानामानंदाद्यनुपलब्धिनियमःस्यादित्यर्थः व्यक्तिरित्यनुवादः ऋग्भाष्यादिसंग्रहायाह ॥ मोक्षयोग्यानामिति ॥ नन्वसुरादीनामानंदस्वरूपत्वाभावादेवतदनुपलब्धिरित्यतस्तस्यतात्पर्यमाह ॥ दुःखाद्यनुभवएवेति ॥ स्वरूपदुःखस्यावरणाभा

वैषयिकसुखोत्पत्तेरप्ययोगादितिभावः । आवरणाभावस्योपलब्धिप्रत्येवप्रयोजकत्वेनकथमनुपलब्धिःसंपद्यतइत्यत आह ॥ दुःखाद्यनुपलब्धिश्चेति ॥ समैवेति ॥ मध्यममनुष्याणामिश्रस्वरूपत्वेनसुखदुःखस्यचोपलब्धिः समैवस्यादित्यर्थः । नित्यानंदइतिस्मृत्यनुसारेणाह ॥ एवमिति ॥ अन्यथोक्तयावदर्थाप्रतिपादकत्वेनप्रकृतासंगते रितिभावः । संसारदशायांतन्मात्रोपलब्ध्यभावादाह ॥ तद्योग्याइति ॥ १६ ॥ अन्यःईशात् शंकते ॥ जीवकर्तृ त्वेति ॥ तत्कर्मफलं संपद्यते प्राप्यते अनन्ययोगेन अन्यसाहाय्यत्यागेन हियस्मादतएवेत्यन्वयः । तथाचस्ववचनावि रोधइतिभावः । तर्हिलाघवायजीवस्यैवकर्तृत्वमस्त्वित्यतआह ॥ नखल्विति ॥ ॐ कर्ताशास्त्रार्थवत्वात् ॐ ॥ जीवःकर्तैव कुतःतथात्वेशास्त्रस्यविधिनिषेधरूपस्यप्रयोजनवत्वलाभात् अन्यथातद्व्यर्थ्यापत्तेरित्यर्थः ॥ परगतेति ॥ ईश्वरगतेत्यर्थः ॥ विवेकाग्रहइति ॥ इदंकर्तृत्वंनेश्वरगतमपितुमद्गतमेवेत्यात्मीयतयाकल्पनमस्त्येवेत्यर्थः । तादृशं काल्पनिककर्तृत्वापेतं ॥ ॐ विहारोपदेशात् ॐ ॥ नजीवस्यकर्तृत्वंभ्रांतिकल्पितं कुतः विहारस्यक्रीडाकर्तृत्वस्यो पदेशात् मोक्षेपिजक्षनक्रीडन्नित्यभिधानादित्यर्थः । मोक्षेपीत्यस्यार्थोविगलितेति निवृत्ताशेषभ्रमेपीत्यर्थः । अतएवाह ॥ कैवल्यइति ॥ केवलं याथार्थज्ञानादिस्वरूपाविर्भावरूपइत्यर्थः ॥ ॐ उपादानात् ॐ ॥ मोक्षाद्युद्देशेनसाधना नुपादानस्यप्रत्यक्षसिद्धत्वान्नकाल्पनिककर्तृत्वमित्यर्थः ॥ अतिप्रसंगादिति ॥ परकृतभोजनेस्वकृतानुसंधानमा त्रेणस्वात्मनःतृप्तिःस्यादित्यर्थः ॥ ॐ व्यपदेशाच्चक्रियायांनचेन्निर्देशविपर्ययः ॐ ॥ जीवःकर्तैव कुतः उपासनाख्यायांक्रियायांतस्यकर्तृत्वेनव्यपदेशात् आत्मानमेवलोकमुपासीतेत्याभिधानात् जीवस्यकर्तृत्वंनचेत्तर्हिनिर्देश स्यात्मानमित्यस्यविपर्ययः आत्मनेत्यत्यासःस्यादित्यर्थः । लोकंसर्वाधारं ॥ नहीति ॥ कर्तुःक्रियाश्रयत्वेनतदभा

वेनिराश्रयक्रियायोगादितिभावः ॥ ॐउपलब्धिवदनियमः ॐ ॥ यथोपलब्धौज्ञानेऽनियमःइच्छानुसारेणप्राप्त्य भावस्तथाक्रियायामपीत्यर्थः । निरूपिते अपेक्षिते ज्ञानविशेषणमेतत् साध्यसमःपक्षसमः कर्मणीवज्ञानेप्यनियम स्यप्रत्यक्षेणानिश्चयादितिभावः । स्वज्ञानेतावद्यंप्रत्यक्षः परकीयेप्रकारांतरमाह ॥ नहीति ॥ व्याप्रियतेव्यापा रवान्भवतियेनपरकीयज्ञानेच्छादेरतींद्रियत्वेनानिश्चयइतिभावः ॥ तत्साधनइति ॥ स्वाभिलषितज्ञानायतत्सा धनंसंपादयति तच्चप्रत्यक्षसिद्धं तथाचतेनतदनुगुणज्ञानेच्छानुमानमनंतरंफलविशेषेणज्ञानविशेषानुमानंचसुलभमितिभावः ॐ शक्तिविपर्ययात् ॐ॥ नजीवःस्वतंत्रः कुतःजीवशक्तेःपरमात्मशक्त्यपेक्षयाविपर्ययादल्पत्वादित्यर्थः ॥ ॐ समा ध्यभावाच्च ॐ ॥ समाधेःअलंबुद्धेःजीवेअभावाच्चतस्यास्वातंत्र्यमित्यर्थः ॥ स्वतंत्रस्येति ॥ स्वसत्तादौपरानपेक्षस्यैवे त्यर्थः ॥किमिति ॥ कुतइतिप्रश्नोत्तरंकिमित्यर्थः । स्वतंत्रःक्रियायां ॥ ॐ यथाचतक्षोभयथा ॐ ॥ यथातक्षावर्धकीउभ यथाचेतनदातृनियम्यत्वेनकर्तृत्वेनचोच्यते तथाजीवोपीशनियम्यः कर्तेत्यर्थः । चशब्दोदार्ष्टांतिकसमुच्चायकः ॥ वचनचेत नेति ॥ इत्थंकुर्विति वचनानुसारेणकरणेनद्रव्यदानादिना चतक्ष्णःशक्तेःकारयित्रधीनत्ववदित्यर्थः ॥ गतःपक्षइति ॥ तथाचापसिद्धांतइतिभावः ॥ नजीवस्येति ॥ कर्तृत्वशक्तेरीश्वराधीनत्वेतस्यैवकर्तृत्वादितिभावः ॥ ॐ परात्तुतच्छ्रुतेः ॐ ॥ जीवस्यकर्तृत्वशक्तिःपरात्तुईशादेव कुतःतच्छ्रुतेः तस्यकर्तृत्वशक्तेरीश्वराधीनत्वस्यैव कर्तृत्वंकरणत्वंचेतिश्रुतिसिद्धत्वादित्यर्थः ॥ ॐ कृतप्रयत्नापेक्षस्तुविहितप्रतिषेधावैयर्थ्यादिभ्यः ॐ ॥ कृतंकर्म ईशः जीवस्यकर्मप्रयत्नादिकमपेक्ष्यैवतंप्रे रयति किमर्थंविधिनिषेधशास्त्रवैयर्थ्याभावाय वैषम्यादिनिरासायचेत्यर्थः । उक्तोपिवैषम्यनैर्घृण्यइत्यादिना ॥ तत्क र्मेति ॥ अपेक्ष्यकर्मेत्यर्थः ॥ तत्प्रेरणाइति ॥ तादृशकर्मप्रेरणइत्यर्थः ॥ इत्युच्यतइति ॥ अतोनव्याह

तिरितिभावः ॥ १७ ॥ यवव्रीहिश्रुत्योरिति ॥ यथायवैर्यजेतव्रीहिभिर्यजेतेतिश्रुत्योर्यवैर्वायजेतव्रीहिभिर्वायजेतेतिव्य वस्थितविकल्पेनविरोधपरिहारस्तथाजीवोंशोवानंशोस्त्विवतिव्यवस्थितविकल्पेनांशानंशश्रुत्योर्विरोधपरिहारइत्यर्थः ॥ वस्तु विकल्पेति ॥ तत्रश्रुतिद्वयस्यनिरवधारणत्वेनोक्तरीत्याविकल्पसंभवेपिप्रकृतेश्रुतिद्वयस्यसावधारणत्वेनोभययथार्थग्र- हेएकस्मिन्जीवाख्येवस्तुन्यंशत्वानंशत्वरूपद्वैरूप्यायोगादित्यर्थः ॥ नचेति ॥ यथैकस्यैवघटस्यदेशकालभेदेनस- त्वासत्वंतथेत्यर्थः ॥ समस्तेति ॥ अत्रसर्वेषांतंतूनांपटाद्भेदाभेदांगीकारादेकस्येत्युक्तं एकस्यापितंतोःखंडपटाद्भेदाभे दांगीकारात्समस्तपटेति नानात्वात् विरुद्धार्थप्रतिपादकत्वात् ॥ ॐ अंशोनानाव्यपदेशादन्यथाचापिदाश कितवादित्वमधीयतएके ॐ ॥ जीवःपरमात्मनोंशएव कुतः नानाव्यपदेशात् पितापुत्रत्वादिनानाप्रकारेणतस्ये शसंबंधित्वोक्तेः किंचब्रह्मदाशाब्रह्मकितवाइत्येकेशाखिनः दाशाःमत्स्यग्राहिणःब्रह्मकितवाःवंचकाः ब्रह्मेत्येवंब्रह्मणो दाशकितवादित्वंदाशकितवोपलक्षितसर्वजीवाभेदमधीयंतेपठंति एकेचअन्यःपरोन्योजीवइत्यन्यथाचभेदेनाधीयंते अतएत दुभयान्यथानुपपत्यांशत्वमित्यर्थः ॥ वक्ष्यामइति ॥ अंशोह्येषःपुत्रभ्रात्रित्यादिश्रुतिस्मृत्युदाहरणेनेतिशेषः । परेणेत्य स्यार्थःपरादिति अवइत्यस्यावमइति जानइतिव्यपदेशइतिशेषोक्तिः व्यंजकत्वादितिभावः ॥ तज्ज्ञानंचदुर्लभमिति ॥ कवीयमानःकइहप्रवोचद्देवंमनःकुतोअधिप्रजातामित्युत्तरार्धंतज्ज्ञानंचदुर्लभमित्याहेत्यर्थः । तद्व्याचष्टे ॥ कोन्विति ॥ कवीयमानइत्यस्यार्थःमंत्रज्ञकल्पइति इहेत्यस्यप्रजास्विति ब्रह्मेतिशेषोक्तिः कुतइत्यस्यतात्पर्यंकस्यचेति अधीत्यस्याधि कयेनेति स्त्रियःसतीस्तांउमेपुंसआहुःपश्यदक्षण्वान्नविचेतदंधः कविर्यःपुत्रःसईमाचिकेतयस्ताविजानात्सपितुष्पितासदिति ऋचंव्याचष्टे ॥ यइति ॥ तांइत्यस्यार्थःतानेवेति नइत्यस्यार्थः एवेति आङोर्थः सम्यगिति मदुपास्याइतिकोवक्ती || २७ ||

त्याकांक्षायामाह ॥ एतद्दीर्घतमोवाक्यमिति ॥ उक्तंचानुव्याख्याने ॥ ॐ मंत्रवर्णात् ॐ ॥ पादोस्येतिश्रुतेश्च जीवईशांशइत्यर्थः ॥ ॐ अपिस्मर्यते ॐ ॥ नकेवलमंशत्वंश्रूयतेकिंतुममैवांशइतिस्मर्यतेपीत्यर्थः ॥ ॐ प्रकाशादिवन्नै वंपरः ॐ ॥ परोमत्स्यादिरूपोपरमात्माएवंजीववत् भिन्नांशोन कथं प्रकाशाद्यभिमानिवदित्यर्थः । चार्थःचशब्दार्थः ॥ भेदाभेदानुपपत्तिरिति ॥ मत्स्यादीनामभेदोजीवानांभेदइत्यनुपपत्तिरित्यर्थः ॥ भेदाभेदसाम्यादिति ॥ उभयोरपिखंडितत्वेनस्वोपादानेनतेजआदिनाभिन्नाभिन्नत्वेनकालाग्न्यादेरभेदःखद्योतादेर्भेदइतिकथमित्यर्थः ॥ ॐ स्म-रंतिच ॐ ॥ जीवस्याभिन्नांशत्वंमत्स्यादेरभिन्नांशत्वंचस्मृतिकर्तारःस्मरंतिचेत्यर्थः ॥ इत्युक्तइति ॥ प्रथमभागवतेजगृहे पौरुषंरूपमित्यादिना यस्यांशांशेनसृज्यंतेदेवतिर्यङ्नरादयइत्यंतेनोक्तइत्यर्थः । द्वितीयंतुभवायास्यरसातलगतांमहींउद्धरि ष्यन्नुपादत्तयज्ञेशःसौकरंवपुरित्यादिनोक्तेरित्यर्थः।इंद्रारिव्याकुलंलोकंमृडयंतियुगेयुगेइत्युत्तरार्धंव्याचष्टे॥वराहादयइति॥ मृडयंतिसुखयंतीत्यभिधीयतइतिसंबंधः।परमित्यस्यार्थोऽभिन्नमिति । अव्यक्तमित्यस्याकार्यमितिअव्यूढगुणेत्यस्यानाद्य नपगतेति वस्त्वित्यस्यभगवत्स्वरूपेति पुनर्भवइत्यस्यसंसारीति इत्युच्यतइत्यन्वयः कृष्णशब्दस्यावतारेप्रसिद्धत्वेनकथं मूलरूपेवेतिव्याख्यानमित्यतआह॥ कृष्णशब्दश्चेति ॥ ईज्यतेपूज्यते इदंवाक्यंमुक्तसेव्येमूलरूपेप्रयुक्तमितिभावः। तदेवस्वरूपांशस्यभवतीतिशेषोक्तिः कृष्णाद्यवतारइति तस्यकृष्णंप्रत्यर्जुनवाक्यत्वादितिभावः ॥ ॐ अनुज्ञापरिहारौदे हसंबंधाज्ज्योतिरादिवत् ॐ ॥ जीवस्यदेहसंबंधान्निमित्तात्तदनुज्ञापरिहारौपरमात्मानुज्ञाधीनवृत्तिमोक्षौचस्तःकथंज्यो तिरादिवत् यथाज्योतिरादेरक्ष्यभिमान्यादेर्देहसंबंधात्सूर्याद्यनुज्ञाधीनप्रवृत्त्यादिस्तथेत्यर्थः॥ कनीनकेति ॥तारकेत्यर्थः रक्तेत्यर्थः ॥ उत्तरत्रेति ॥ब्रह्मांडबाह्यजलाभिमानीवरुणः अंतःशुद्धोदकसमुद्राभिमानीतदभिन्नांशःश्लेष्माभिमानी तद्भि

न्नांशइतिद्रष्टव्यमित्यर्थः ॥ स्वांशिकर्मेति॥ शरीरसंबंधित्वस्याभिन्नांशेपिसत्वाद्व्यभिचारः ततःस्वांशिकर्मानिर्मितेत्युक्तं शरीरसंबंधित्वंचतद्योग्यत्वंतेननमुक्तेपुभागासिद्धिः।मोक्षधर्मेचेतीति॥तत्रहिनशरीराणिभौतिकानिभवंतिभूतानिचेश्वरबुद्धिजातानितत्कथंतानितंबध्नीयुरित्युक्तेरितिभावः। अक्षरार्थश्च हेविशांपते इहचेतनवर्गेअस्मिन्लोकेयत्किंचिद्देहसंबद्धंतत्सर्वेश्वरबुद्धिजैःपंचभिर्भूतैराविष्टंबद्धं ईश्वरस्तु महत् महनीयःभूतंसर्वदाविद्यमानःनारायणःमुक्ताश्रयः विराट् नित्याभिव्यक्तिरूपःसगुणःस्वा[illegible]यादिगुणवान्भूतानिप्रलीयंतेयस्मिन्तत्भूतप्रलयं अव्यक्तंतदभिमानिनीरमा तस्येशस्यशुश्रूषुःसेवाकर्तीतिप्रमेयदीपिकातोवगंतव्यः अस्त्वेतन्मूलरूपविषयं अवताराणांतुदेहसंबंधित्वंस्यादेवेत्यतआह ॥ अवतारप्रसंगादिति ॥ यत्तद्दर्शितवान्ब्रह्मरूपंहयशिरोभिदमितिहयग्रीवावतारप्रसंगइत्यर्थः ॥स्वांशिकर्मेति ॥ देहसंबंधित्वादित्युक्तेस्वरूपासिद्धिः दृष्टांतस्यसाधनविकलताच अतःस्वांशिकर्मानिर्मितेत्युक्तं स्वांशिकर्मनिर्मितदेहसंबंधित्वस्यदृष्टांतेसत्वेपिपक्षेतदभावान् नद्भयगर्भत्वंनथाचपक्षेविशेष्याभावेनदृष्टांतेविशेषणाभावेनाविशिष्टाभावानुगमइतिभावः ॥ अतएवेति ॥ एवंप्रयोगद्वयस्याप्यभिमतत्वादेवज्योतिरादिवदितिदृष्टांतोयथेत्यादिनाविवृतइत्यर्थः अतोनभाष्यकारानभिमतमेतदितिभावः ॥ॐ असंततेश्चाव्यतिकरः ॐ ॥ जीवस्यानंततोऽपूर्णत्वान्नमत्स्यादिसाम्यंनास्तीत्यस्याव्यतिकरःव्यत्यासाभावइत्यर्थः ॥ ॐ आभासएवच ॐ ॥ जीवईशस्याभासएवप्रतिबिंबएवमत्स्यादिस्तुनतथा अतोपिनोक्तव्यत्यासइत्यर्थः। रूपंरूपंप्रतिरूपोबभूवतदस्यरूपंप्रतिचक्षणाय । इंद्रोमायाभिःपुरुरूपईयतेयुक्ताह्यस्यहरयःशतादशेति ऋचंव्याचष्टे ॥ जीवसमुदायइति ॥ शृण्वेर्वाग्मिन्यादित्रिविधजीवसंघस्यप्रस्तुतत्वादेवमुक्तं मायाभिरित्यस्यार्थःसामर्थ्यैनेति पुरुरूपइत्यस्यानंतबिंबरूपइति युक्ताह्यस्यव्यूहइति तदतिरिक्तेतिस्वरूपातिरिक्तेत्यर्थः । भाष्येयथाछायापुरुषाधीनातथैत

ज्जीवजातमेतस्मिन्नीशे आततमधीनमित्यर्थः । अनंशत्वश्रुतेर्गतिंचाहेत्यादिनालब्धमर्थं दर्शयति ॥ एवमिति ॥ १८ ॥
श्रुतिविगानमेवदर्शयति ॥ रूपंरूपमिति ॥ प्रकरणवशादिति ॥ श्रुतीनांपरस्परविरोधपरिहारात्मकपादरूपप्रक
रणवशाच्छ्रुत्यंतरंप्रतिबिंबत्वाभावप्रतिपादकमनुगीयतइत्यर्थः । यद्यपिनैवांशोनैवसंबंधइत्यादिप्रत्यक्षश्रुतिरस्तितथापित
स्याःस्पष्टंप्रतिबिंबत्वाभावप्रतिपादकत्वाभावादेवमुक्तमितिध्येयं । भेदःवैचित्र्यं एवमग्रेपि ॥ भवत्वेकइति ॥ तथा
चश्रुत्यंतरविरोधादितिभावः ॥ ॐ अदृष्टानियमात् ॐ ॥ जीवानामीश्वरप्रतिबिंबत्वेप्यन्योन्यवैचित्र्यंसंभवति कु
तः अदृष्टानांयोग्यतादिनामनियमाद्वैचित्र्यादित्यर्थः ॥ कारणांतरमिति ॥ पूर्वंवाद्युक्तैकप्रतिबिंबत्वाभावरूपनिमि
त्तंविनानिमित्तांतरमित्यर्थः ॥ ॐ अभिसंध्यादिष्वपिचैवं ॐ ॥ इच्छादिष्वपिएवंवैचित्र्यमदृष्टवैचित्र्यादेवेत्यर्थः
॥ उत्तरेति ॥ उत्तरदोषवैचित्र्यादेवेत्यर्थः । तदभावेदोषवैचित्र्याभावे ॥ ॐ प्रदेशादितिचेन्नांतर्भावात् ॐ ॥
प्रदेशात्स्वर्गादिस्थानवैचित्र्याज्जीववैचित्र्यमितिचेन्न स्थानवैचित्र्यस्यापिअदृष्टवैचित्र्येंतर्भावात् तदधीनत्वादित्यर्थः॥यु
क्तेरविरुद्धत्वादिति ॥जीवानांमिथोवैचित्र्यरूपयुक्तेरदृष्टवैचित्र्येणान्यथासिद्धत्वादुपोद्बलकाभावेनानुमितिश्रुतिर्जीवस्य
सोपाधिप्रतिबिंबत्वाभावविषयेत्यर्थः ॥ १९ ॥ इतिश्रीमत्तत्त्वप्रकाशिकावाक्यार्थमंजर्यांद्वितीयाध्याय-
स्यतृतीयःपादः संपूर्णः ॥ ॥ ॥ ॥ ॥ ॥

॥ श्रीगुरुभ्योनमः ॥ ॐ तथाप्राणाः ॐ ॥ यथावियदादयोजातास्तथाप्राणाइंद्रियाण्यपिजायंतइत्यर्थः ।
॥ विप्रतिपत्त्यभावेनेति ॥ तेजआदेर्ब्रह्मान्यकार्यत्वेघर्मात्स्वेदादिदृष्टिवदत्रप्राणानांब्रह्मान्यकार्यत्वेप्रापकाभावेनविप्र

तिपत्त्यभावेनेत्यर्थः ॥ ॐ गौण्यसंभवात् ॐ ॥ प्राणानादित्वश्रुतिःसूक्ष्मरूपेणानादित्वरूपगौणानादित्वपरा कुतः मुख्यानादित्वासंभवात्तथातदुत्पत्तिश्रुतिबाहुल्यासंभवादित्यर्थः । अन्यथोत्पत्तिश्रुतिबाहुल्यासंभवादितिवियदधिकरणीयभाष्यानुरोधेनाह ॥ एतस्माज्जायतइति ॥ नन्विंद्रियाणामुपचयंविनासंसारकारणमस्तिनवा नाद्यः उपचयवैयर्थ्यात् द्वितीयेआह ॥ उपचयादिति ॥ प्रलयेवियुक्तानामिति ॥ प्रलयकालेस्वोपचयकारणभूतैर्वियुक्तानामिंद्रियाणांप्रतिसृष्टिकालंप्राग्वियुक्तभूतैःपुनरुपचयइत्यर्थः । तथाचयस्मिन्प्रलयकालेऽनुपचयस्तदासंसारकारणत्वंनास्त्येव यदासृष्टिकालेसंसारकारणत्वंतदोपचयोस्त्येवेतिनोक्तदोषइतिभावः । नन्विंद्रियाणांभूतैरुपचयांगीकारोऽनुपपन्नः तथात्वेतैजसानींद्रियाण्याहुरितितेषांतैजसाहंकारकार्यत्वप्रतिपादकप्रमाणविरोधादित्यतआह ॥ अत्राहंकारेति ॥ तैजसाहंकारोत्पन्नानामेवेंद्रियाणांभूतैरुपचयमात्रमुच्यतेनत्वहंकारकार्यत्वंनिषिध्यतइत्यर्थः । नन्वथापिप्राणाएवेदमग्रआसुस्तेभ्योभूतानिजज्ञिरइतिभूतानामिंद्रियजन्यत्वकथनमयुक्तं । तथात्वेतामसानितुभूतानीतितेषांतामसाहंकारकार्यत्वप्रतिपादकप्रमाणविरोधादित्यतआह ॥ अहंकारोत्पन्नेति ॥ अन्योन्याश्रयवारणायसूक्ष्मेत्युक्तं केषांचिदेवसूक्ष्मप्राणानांभूतोपचयकारणत्वंतदन्येषांभूतोपचितत्वमितिव्यक्तिभेदेनान्योन्याश्रयत्वाभावादितिभावः । ननुप्रागभावाप्रतियोगित्वादिनासाम्यसंप्राप्तिपरिशिष्टैवेत्यतआह ॥ मुख्यनित्यतायामिति ॥ पराधीनविशेषतादिराहित्यादेरवमुख्यनित्यताशब्दार्थत्वादितिभावः ॥ अनेनेति ॥ परेणसाम्यसंप्राप्तेरितिस्वातंत्र्यमापादयतातेषामस्वातंत्र्यसूचनेनाल्पशक्तित्वादियुक्तयोपिसंगृहीताइत्यर्थः ॥ ॐ प्रतिज्ञानुपरोधाच्च ॐ ॥ सइदंसर्वमसृजतेतिप्रतिज्ञानुसाराच्चप्राणाउत्पत्तिमतएवेत्यर्थः । सर्वशब्देनप्राणानामपिगृहीतेरितिभावः ॥ १ ॥ इंद्रियाणामिति ॥ मनोव्यतिरिक्तेंद्रियाणामित्यर्थः । यदाहुर्वायुपु-

राणे ॥ सर्वप्रमाणेति ॥ सोनादिनापुण्येनपापेनचानुवत्थइत्यादिप्रमाणेत्यर्थः । नित्यमनुत्पत्तिमत् ॥ ॐ तत्प्रा
क्श्रुतेश्च ॐ ॥ मनउत्पत्तिमदेव कुतः तेभ्यःप्राणेभ्यःप्राक् पूर्वश्रुतेरेतस्मादितिमनउत्पत्तिश्रुतेरित्यर्थः ॥ अतए
वेति ॥ उक्तरीत्यामनसोनादित्वेनपुंसोवियोगाभावात् नह्यमनाःपुमांस्तिष्ठतीत्युक्तयुक्ति विरोधेनेत्यर्थः ॥ नचावि
शेष्येति ॥ अन्येंद्रियाण्यनित्यकोटौनिक्षिप्याविशेष्यमनसोनित्यत्वोक्तिविरोधइत्यर्थः ॥ २ ॥ नचेत्यस्यवाच्यमिति
वक्ष्यमाणेनान्वयः ॥ समाख्याश्रुताविति ॥ नित्ययानित्ययास्तौमि ब्रह्मतत्परमंपदमिति श्रुतिर्वाचानित्या अनि-
त्यावावस्मृतयश्चान्यावाचइतिसमाख्याश्रुतावित्यर्थः । अवतार्य उदाहृत्य ॥ उत्पत्तीति ॥ इंद्रियोत्पत्तिश्रुत्यानुकू
ल्याच्चेत्यर्थः । श्रुत्याश्रयत्वेपिवाचोनादित्वश्रुतेःसूक्ष्मरूपानादित्वपरत्वउत्पत्तिश्रुतेस्तु उपचयार्थत्वंकिंनस्यादित्यतआह
॥ श्रुत्याश्रयत्वंनामेति ॥ अन्यथाश्रुत्याधारत्वमात्रत्वेश्रुतेरपिवर्णात्मकत्वादितिभावः । ततःकिमित्यतआह
॥ सदेति ॥ ॐ तत्पूर्वकत्वाद्वाचः ॐ ॥ वाचःवागिंद्रियस्यतत्पूर्वकत्वान्मनःकारणत्वादुत्पत्तिमत्येववागित्यर्थः ।
साधारणत्वात् इंद्रियव्यवहारयोरितिशेषः ॥ पूर्ववाक्यबलेनेति ॥ व्यवहारस्यव्यवहारकारणत्वायोगेनतत्प्राक्
शब्देंद्रियपरत्वेसिद्धेतत्समभिव्याहृतोत्तरवाक्यस्थस्यापितस्यैंद्रियपरत्वस्यैववक्तव्यत्वादितिभावः ॥ नित्यत्वोपचा-
रइति ॥ एवंचवाग्वेतिश्रुतेरुपचरितार्थत्वान्नतद्विरोधइतिभावः । किंचेत्युक्तदोषंनिराह ॥ नचेति ॥ श्रुत्याश्रयत्वं
नामेत्यादिनोक्तयुक्तिंनिरस्यति ॥ अतएवेति ॥ उपचयात्पूर्वंयोग्यतामात्रसत्वेप्युच्चारणासमर्थत्वेनतदर्थमुपचयस्या-
वश्यकत्वमितिभावः । षष्ठीभ्रमंनिरस्यति ॥ मनःसकाशादिति ॥ नकेवलंवागिंद्रियस्योत्पत्तिप्रतिपादकतस्मान्मन
इतिश्रुतिबलाद्वाग्वावनित्येतिश्रुतेरुपचरितार्थत्वं किंतु अस्यांहिश्रुतिरवतिष्ठतइतिवाक्यशेषान्यथानुपपत्तिलक्षणांतरानु-

पपत्यापीत्याह ॥ **एवमभ्युपगमएवेति** ॥ वागिंद्रियस्योत्पत्तिमभ्युपगम्यश्रुतेरुपचरितार्थत्वाभ्युपगमएवेतिभावः ॥ **नित्यत्वइति** ॥ सर्वथोत्पत्तिराहित्यलक्षणनित्यत्वइत्यर्थः ॥ **तस्यापीति** ॥ नित्यत्वप्रतिपादकत्वेनप्रतीयमानायाअप्येतदर्थत्वात् उपचयरूपोत्पत्तिमतोपिश्रुतिसन्निधियोग्यत्वरूपनित्यत्वार्थकत्वादित्यर्थः। तदेवोपपादयति ॥ **घा-ग्वेति** ॥ उक्तार्थत्वांगीकारेपूर्ववाक्यार्थोपपत्तिरपिनियामकेत्यभिप्रेत्यनित्ययानित्ययेतिपूर्ववाक्यंयोजयति ॥ **एवंच्च सतीति** ॥ अस्यांहीतिवाक्यशेषस्योपचारबीजप्रतिपादकत्वेसतीत्यर्थः ॥ **पुराणाद्याश्रयत्वेनचेति** ॥ अनेनास्यांहिश्रुतिरित्युपलक्षणं। अस्यांहिपुराणादिकमवतिष्ठतइत्यपिग्राह्यमित्युक्तंभवति ननुपुराणाद्याश्रयत्वमात्रेणकथंवागिंद्रियनित्यत्वानित्यत्वेत्यतआह ॥ **एवंचसमाख्यानुरोधइति** ॥ तथाचसमाख्याश्रुतौश्रुतिर्वावनित्याऽनित्यावानस्मृतयोयाश्चान्यावाचइति श्रुतिपुराणयोर्नित्यत्वानित्यत्वयोरुक्तत्वात्तत्रनिर्णीतनित्यत्वानित्यत्वश्रुतिपुराणाद्याश्रयत्वेनवागिंद्रियस्यनित्यत्वानित्यत्वेघटेतइतिभावः ॥ **अन्यथेति** ॥ स्वरूपेणनित्यत्वानित्यत्वविवक्षायांनिरोधात्स्वरूपेणनित्यत्वमुपचितांशेनानित्यत्वमितिविवक्षायांचवाक्यशेषादौनित्यवेदाश्रयत्वाद्युक्त्ययोगात् वाक्यदेनवेदाविवक्षायांचास्यांहिश्रुतिरवतिष्ठतइतिवाक्यशेषविरोधात् अस्मदुक्तवाक्यार्थादन्यथावाक्यार्थोनयुक्तइत्यर्थः। यद्वाअन्यथासमाख्यानुरोधेननित्ययानित्ययास्तौमिपरमात्मानमितिवाक्यस्यनित्यवेदाश्रयत्वेन नित्ययाऽनित्यपुराणाद्याश्रयत्वेनानित्ययेत्यर्थकत्वांगीकारेतस्यवाक्यस्यार्थोपपत्तिर्नविद्यतइत्यर्थः। वाक्यशेषेनित्ययेत्युक्तनित्यत्वंवाग्वावनित्येतिवाचःप्रतिज्ञायाअस्यांहिश्रुतिरवतिष्ठतइतितदुपपादनवदनित्यत्वप्रतिज्ञातदुपपादनयोरभावादितिभावः ॥ ३ ॥ **ग्रहाःसोमस्येति** ॥ सोमरसग्रहणार्थाःसूक्ष्मोलूखलाकाराःपात्रविशेषाइत्यर्थः ॥ अध्वरेषुग्रहांत्सोमस्यमिमतेद्वादशेतिश्रुतेरितिभावः ॥ एकदैवत्याभिप्राये-

णेति ॥ समसंख्यादैवताकत्वाभिप्रायेणेत्यर्थः । द्वादशमासादीनांद्वादशादित्यादिदेवताकत्वादितिभावः ॥ कथित
युक्तेरिति ॥ अभिमान्यभिमन्यमानयोःसमसंख्याकत्वयुक्तेरितिभावः । अन्यथाएकदैवत्यभिप्रायाभावे ॥ उन्म-
त्तेति ॥ द्वादशेत्यादिनाप्राणादिसंख्याकथनस्यवैयर्थ्यादितिभावः ॥ ॐ सप्तगतेर्विशेषितत्वाच्च ॐ ॥
गतेर्ज्ञानस्यजनकाःप्राणाःसप्तैव कुतःविशेषितत्वात् सप्तप्राणाइत्युक्तसप्तप्राणानामुत्तरत्रगुहाशयानिहिताःसप्तसप्तेति-
ज्ञानकारणत्वविशेषणोपेतत्वकथनादित्यर्थः । येषुचरंतिप्राणागुहाशयामितिवाक्यंव्याचष्टे ॥ गुहात्हृदयमिति ॥
द्वितीयाविभक्त्यर्थमाह ॥ तदर्थमिति ॥ नन्वत्रसूत्रेसप्तप्राणाइतिश्रुतेःसावकाशत्वमेवोक्तंनतुद्वादशत्वेकिंचित्प्रमाणं
अतःकथंद्वादशत्वनिर्णयइत्यतआह ॥ एतच्छुताविति ॥ सप्तप्राणाइतिश्रुतौस्मृत्युक्तरीत्यासावकाशायांसत्यामितरा
द्वादशवाएतेप्राणाइतिश्रुतिरत्रप्राणानांद्वादशत्वेप्रमाणत्वेनोदाहर्तव्येत्यर्थः । असहपाठेनिमित्तमाशंक्यदूषयति ॥ अन्ने
ति ॥ उक्तविरुद्धमिति ॥ तथाप्राणाइतिप्राणानांपरमात्मजन्यत्वोक्तिर्विरुद्धेत्यर्थः । कारणांतरं असहपाठे एभिः
श्रोत्रादिभिः ॥ ॐ हस्तादयस्तुस्थितेतोनैवं ॐ ॥ हस्तादयस्तुप्राणाःस्थितेकर्मविषये अतःकर्मकारणत्वेनवैल
क्षण्यात् एवंश्रोत्रादिभिःसहपाठोनेत्यर्थः । गतिस्थितिशब्दौसूत्रद्वयस्थौ । ननुकाम्यकर्मणःसंसारहेतुत्वेपिनिष्काम्यस्यत
दभावात् तथाब्रह्मज्ञानस्यसंसारादुद्गतिहेतुत्वेपि इतरज्ञानस्यतदभावात्कथंतयोःस्थितिगतिप्रवृत्तिरित्यतआह ॥ सजा
तीयत्वेनेति ॥ यथायत्प्रपदाभ्यांप्रापद्यतब्रह्मेमंपुरुषंतस्मात्प्रपदइत्याचक्षतइतिश्रुत्युक्तप्रपदशब्दप्रवृत्तिनिमित्तस्यचतु
र्मुखपादतलोपरिभागगतत्वेपितज्जातीयेपुरुषांतरसंबंधिन्यपिपादतलोपरिभागेप्रपदशब्दप्रयोगः तथेहापिकाम्यकर्मब्रह्म
ज्ञानसजातीययोर्निष्कामकर्मान्यज्ञानयोरपिस्थितिगतिशब्दप्रयोगइत्यर्थः । तस्मात्प्रपदनादेवप्रपदंनामकीर्तितं चतुर्मुखा

कारवतांतृणांपादतलोपरि प्रपदाख्यावर्ततइत्यैतरेयभाष्योक्तिरितिभावः ॥ ४ ॥ श्रोत्राद्यनुगमायाह ॥ **जानाती**
कारवतांनृणांपादतलोपरि प्रपदाख्यावर्ततइत्यैतरेयभाष्योक्तिरितिभावः ॥ ४ ॥ श्रोत्राद्यनुगमायाह ॥ **जानाती ति** ॥ कृणोतीत्यस्यकरोतीत्यर्थः स्फुटएवेतिभावः । प्राणैर्हीतद्भवतीत्येतदवतारयति ॥ **कुतोत्रोक्तेति** ॥ अत्राणुभिरितिश्रुतौज्ञानादिकारणत्वेनोक्ताइत्यर्थः । एतच्छब्देनपश्यतीत्याद्युक्तपरामर्शः हिशब्दोहेत्वर्थइत्याभिप्रेत्यतद्वाक्यंव्याचष्टे ॥ **ज्ञानकर्मेति** ॥ ज्ञानकर्मकारणत्वस्यप्राणासाधारणधर्मत्वादितिभावः ॥ **विष्णोर्व्याप्तत्वइति** ॥ यथाहिचक्षुराकाशेव्याप्तमपिनदृश्यते केवलंविषयोपलब्धिलक्षणेनफलेनानुमीयते तथापरमेश्वरस्वरूपंसर्वगतमपिनदृश्यते किंत्वस्वतंत्राणांपदार्थानांसत्ताप्रतीतिप्रवृत्तिभिर्ज्ञायतइतितदर्थः । चक्षुर्दिवीवव्याप्तंयददृश्यं फलदर्शनमितिऋग्भाष्योक्तेरितिभावः ॥ **प्राप्यकारित्वादिति** ॥ वस्तुसंबध्यज्ञानकारणत्वादित्यर्थः ॥ **अन्यथेति** ॥ व्यापारवतएवकारणत्वाद्विषयप्राप्तिरूपसन्निकर्षस्यैवव्यापारत्वात्तदभावेकारणत्वविरोधादित्यर्थः ॥ ॐ **अणवश्च** ॐ ॥ प्राणाःस्वरूपेणाणवएवतेजसाव्याप्ताश्चेत्यर्थः ॥ **अतिसुदृढेति** ॥ दृष्टांतत्वान्यथानुपपत्यासुदृढेत्यर्थः । आत्मनः जीवस्य तर्हिसाम्येनानिगेयःस्यादित्याह ॥ **विशेषश्रुतित्वाच्चेति** ॥ चक्षुसःप्रकाशोव्याततइत्यनेनादिर्वीवेतिव्याप्तिश्रुतेःसावकाशत्वप्रदर्शनेनास्याःश्रुतेःनदपेक्षयाविशेषश्रुतित्वान्निर्णयइत्यर्थः । स्वरूपेणव्याप्तत्वेबाधकंचाह ॥ **यदिंद्रियाणीति** ॥ सुप्त्याद्यभावश्चेति ॥ सर्वविषयैःसहमनस्कोंद्रियसन्निकर्षस्यसदासत्वप्राप्त्यासर्वदातद्गृहणेसर्वेंद्रियव्यापारोपरमरूपसुप्त्यभावःस्यादित्यर्थः । द्रव्येणकुड्यादिना अनुज्ञायते अभ्युपगम्यते पूर्वपक्ष्युक्तस्यदूरश्रवणस्यानिराकृतत्वेनांगीकारोज्ञायतइतिभावः ॥ **अवकाशइति** ॥ अव्याकृताकाशइत्यर्थः ॥ **परिशेषादिति** ॥ घ्राणादिजनकानांपृथिव्यादीनामन्यथासिद्धत्वेनश्रोत्रोत्पादकत्वानुपपत्तौतस्यपरिशिष्टाकाशकार्यत्वस्यैवांगीकार्यत्वादितिभावः ॥ **श्रुत्यादिविरोधइति** ॥

आत्मनआकाशःसंभूतः आकाशेनीलिमोदेति शब्दमात्रमभून्नभइत्यादिविरोधइत्यर्थः ॥ **पृथिव्यादीनामिति** ॥ तेषांभूतैरुपचयइतिसामान्योक्तेरितिभावः । अन्यत्रघ्राणाद्यारंभे ॥ **तच्छरीरेति** ॥ अन्यत्रोपक्षीणत्वादवपार्थिवादिशरीरानारंभकत्वप्रसंगइत्यर्थः ॥ **बधिराभावइति** ॥ पृथिव्यादीनांतान्प्रत्यप्यविशिष्टत्वादितिभावः । सत्यपींद्रिये पापवशाद्श्रवणमित्यतआह ॥ **अदृष्टेति** ॥ तदिंद्रियस्यबलवन्निबिडवायूपहतत्वेनाश्रवणोत्पत्तिरित्यतआह ॥ उपहतिश्चेति ॥ आकाशस्यानिस्पर्शत्वेनाप्रतिघातद्रव्यत्वादितिभावः ॥ **अभ्युपगमइति** ॥ पूर्वपक्ष्युक्तदूरस्थश्रवणाभ्युपगमइत्यर्थः । अत्रसर्वत्रशब्दपदेनवर्णात्मकशब्दोग्राह्यः नध्वन्यात्मकः तेनात्राकाशगुणेशब्देव्यज्यमानावर्णादयइतितत्वनिर्णयतट्टीकाविरोधः तत्रध्वन्यात्मकशब्दस्यस्यादेतदित्यादिनोक्तप्रकाराभ्युपगमादितिनिरस्तम् नचश्रोत्रस्यगत्वाग्राहित्वेध्वन्यात्मकस्यापिशब्दस्यतत्प्रकाराभ्युपगमोव्यर्थइतिवाच्यं शब्दस्यशब्दांतरजनकत्वस्वाभाव्यादेवतथांगीकारात् तत्कुतःसिद्धमितिचेत् बहुजनाकीर्णसभादौजनेषुमंदंमंदंभाषमाणेषुतदीयशब्दैर्महाशब्दोत्पादस्यावरकादौप्रतिध्वन्युत्पादस्यबहुलमुपलंभात् तर्हिश्रोत्रस्यगत्वाग्राहित्वंकुतइतिचेन्न प्राणावाइंद्रियाणिप्राणाहीदंद्रवंतीतींद्रियाणामिदंविषयजातमुद्दिश्यद्रवणस्यश्रुतिसिद्धत्वात् श्रोत्रस्यागत्वाग्राहित्वेशब्देनदिङ्निश्चयाभावप्रसंगाच्च अस्तितावच्छब्दश्चाविणांपूर्वभागेदूरेशब्दोभवतीतिनिश्चयः नचश्रोत्रस्यगमनाभावेसंभवति श्रोत्रेणागत्यैवस्वसमीपस्थशब्दग्रहणेतस्यादूरभावित्वेनदूरेशब्दइतिज्ञानानुपपत्तेश्च क्वचिच्छब्देदिक्संशयस्तुरूपादाविवदोषबलाद्युक्तइतिध्येयं ॥ ९ ॥ प्रकृत्याप्रकरणेनान्यथास्वरूपानुत्पत्तिपरत्वेन ॥ **नहीति** ॥ सर्वस्यापितज्जन्यत्वेनतज्जनकस्यैवाभावादितिभावः । स्वेच्छयास्वतएवजन्मकिंनस्यादित्यतआह ॥ **दुःखहेतवइति** ॥ ॐ **श्रेष्ठश्च** ॐ ॥ नकेवलमन्येप्राणाउत्पद्यंतेकिंतुप्राणःश्रेष्ठोमुख्यप्राणश्चोत्पद्यतइत्यर्थः । अतिरोहितः

अनाछादितः ॥ उत्पत्त्यंगीकारइति ॥ तयोरित्यनुवर्तते ॥ ॐ नवायुक्रियेपृथगुपदेशात् ॐ ॥ वायुक्रियेवाह्यवायुचेष्टा
रूपक्रियेणप्राणो पात्तिश्रुतिप्रतिपाद्ये कुतस्तदुभयोत्पत्तेःपृथगभिधानादित्यर्थः । श्रद्धा मुख्यवायुभार्या ॥ युक्तीति ॥ जनका
भावरूपेत्यर्थः । नन्वखिलजनकत्वादिमहात्म्योपेतस्यकथंविष्णुजनकत्वमित्यतआह ॥ यत्प्राप्तिरित्याद्युक्तेति ॥ महत्वा
दिति ॥ महतोमहत्वात् महतोपिप्राणस्यकर्ता एकराट् स्वतंत्रः येनविष्णुनास्वशक्त्यैवेदंजगदावृतंसएषप्राणंनसृजेत् किंनाम
सृजेदेवेत्यर्थः ॥ ६ ॥ विरोधव्यंजनायाह ॥ तस्मादिति ॥ तथाचप्राणोत्पत्त्यनंगीकारे आत्मनएषप्राणोजायतइत्यादिश्रुति-
विरोधइत्यतआह ॥ तछ्रुतीनामिति ॥ लीलयेति ॥ तथाचोत्पत्त्यंगीकारेनस्वातंत्र्यहानिरितिभावः ॥ ॐ चक्षुरादिव
त्तुतत्सहशिष्ट्यादिभ्यः ॥ ॐ ॥ चक्षुरादिवत्तुयथाचक्षुरादीशाधीनंतथाप्राणोपीशाधीनएव नस्वतंत्रः कुतःतत्स
हतेश्चक्षुरादिभिःसहशिष्ट्यादिभ्यः ईशवत्वाभिधानादिहेतोरित्यर्थः ॥ युक्तिविरोधादिति ॥ उभयोरप्यन्योन्यानुरो
धेननसर्वैश्वर्यमित्युक्तरीत्येश्वरद्वयासंभवयुक्तिविरोधादित्यर्थः । बाध्यतेप्रतीतार्थत्वात् ॥ ॐ अकर्णत्वाच्चनदोषस्त
थाहिदर्शयति ॐ ॥ प्राणस्याकरणत्वात्कर्तृप्रयोज्यत्वादिंद्रियाणांचतत्प्रयोज्यत्वान्नदोषः । अवांतरेश्वरत्वाभावदो
षोनास्ति कुतःहियस्मात्तथाप्राणस्याकरणत्वमिंद्रियाणांकरणत्वंचश्रुतिर्दर्शयतीइत्यर्थः ॥ कर्तृप्रयोज्येति ॥ सुषुप्तौप्र
यन्नाभावेनचक्षुरादीनांव्यापारादर्शनाज्जीवप्रयोज्यत्वंमुख्यप्राणस्यतुतदापिव्यापारदर्शनात्तदप्रयोज्यत्वमितिभावः ॥७॥
॥ प्राणादीति ॥ प्राणापानादीत्यर्थः ॥ मुख्यप्राणप्रसंगेति ॥ तेषांवक्ष्यमाणरीत्यातत्संबंधित्वादितिभावः
॥ शेषइति ॥ कर्मणेतिशेषः ॥ कर्मकारित्वादिति ॥ तेषांकर्मणिचप्राणापानाविडायांचपिंगलायांचवर्ततः व्या
नःसुद्धिपुम्नवज्रउदानोब्रह्मनाडिगः सर्वत्रैवसमानस्तुसंचरतिसर्वशइति भारतवचनाज्ज्ञेयानि । प्राणाज्ञयाकर्मकारित्वेश्रु

तिमाह ॥ तथाचश्रुतिरिति ॥ एषमुख्यप्राणइतरान्प्राणानपानादीन्पृथक्स्वस्वकार्यकरणायोक्तस्थानेषुसन्निधत्ते संस्थापयतीत्यर्थः ॥ व्यक्तसद्गुणत्वादिति ॥ व्यक्ताःसंतोगुणाःवक्ष्यमाणश्रुत्युक्ताःयेषांतेतथातेषांभावस्तत्वंतस्मादित्यर्थः । व्यक्तसद्गुणत्वेश्रुतिमाह ॥ पायूपस्थेति ॥ अपानमपानःपायूपस्थेगुदगुह्येंद्रिययोर्मलादेरपनयेनगुणेनापाननामासन्प्रतिष्ठतितेमुखनासिकाभ्यांसहचक्षुः श्रोत्रेचक्षुःश्रोत्रेषुप्राणश्वासादिप्रणयनात्प्राणनामास्वयमवतिष्ठते समानस्तुमध्येप्राणापानयोर्मध्येनाभिदेशेप्रतिष्ठतिहियस्मादेषःसमानःहुतंभुक्तमन्नंसमंयथास्यात्तथाशरीरावयवंप्रतिनयति अतःसमाननामा तस्मादन्नस्यसमीकरणादेताःसप्तार्चिषाःसप्तज्ञानेंद्रियवृत्तयोभवंति । अस्मिन्शरीरेद्वासप्ततिसंख्याकाःनाड्यःसंति आसुनाडिषुव्यानश्चरति अथोदानएकयानाड्यासुषुम्नयोर्ध्वगतिश्चरतिं सतत्रचरन्जीवकृतपुण्येननिमित्तेनपुण्यंलोकंस्वर्गादिकंनयति पापेननिमितेनपापफलंनिरयादिनयति बहिःपृथिव्यांयाधारिका व्यानाख्यादेवतासैषापुरुषस्यापानंदेहेविद्यमानमपानवायुमवष्टभ्यधृत्वांतराशरीरांतर्वर्ततइत्यर्थः । उभयंदासत्वंस्वरूपं विकल्पोद्वैरूप्यं ॥ ॐ पंचवृत्तिर्मनोवद्व्यपदिश्यते ॐ ॥ मुख्यप्राणःपंचवृत्तिः प्राणादिपंचस्वरूपवानुपलक्षणमेतत् प्राणादिपंचदासवांश्च कुतः मनोवत् यथामनोमनआदीश्वरस्वरूपवत् तज्जन्यमनआदिवृत्तिपंचकवच्च तथामुख्यप्राणोपिवर्गद्वयवानिति अथपंचवृत्त्येतिश्रुतौव्यपदिश्यतेयतोतइत्यर्थः एतद्वर्गद्वयवलं ॥ चेतसोव्यासिरिति ॥ बहुस्मरणशक्तिरित्यर्थः । बहुस्मरणशक्तिश्चचेतनेत्यभिधीयतइत्युक्तेः तत्रैवश्रुतिमाह ॥ अशेषेति ॥ अतिबाढित्यर्थः ननुपायूपस्थेपानमितिसद्गुणत्वप्रतिपादकश्रुतेर्मुख्यप्राणस्वरूपविषयत्वांगीकारेणवोपपत्तौसद्गुणद्वैविध्यकल्पनंकिमर्थमित्यतआह ॥ दासानुपक्रम्येति ॥ इतरान्प्राणान्पृथक्पृथगेवसन्निधत्तइतिदासानुपक्रम्यतदनंतरमेवापानमित्यादिनासद्गुणोक्तेरित्यर्थः ॥ ८ ॥ अन्यथेत्युक्तव्याप्य

भावस्यकेनधार्यतइत्याक्षेपेसाक्षाद्धेतुत्वासंभवादाह ॥ **व्याप्त्यभावइति** ॥ **ससस्कंधेति** ॥ जगदाव्यवृक्षस्यशाखा-
रूपसप्तलोकगतइत्यर्थः ॥ ॐ **अणुश्च** ॐ ॥ मुख्यप्राणोदेहांतर्गतेनरूपेणाणुर्बहिर्मुख्यवायुरूपेणव्याप्तश्चेत्यर्थः ॥ **वा**
**क्यशेषइति** ॥ प्राणोवाईशितव्येशइत्युदाहरणमित्यर्थः । अन्यथापरमात्मपरत्वशंकास्यादितिभावः ॥ **विशेषश्रुति**
त्वादिति ॥ अंतर्वाणुर्बहिर्महानित्यणुत्वमहत्वयोर्व्यवस्थापकत्वेनविशेषश्रुतित्वादित्यर्थः ॥ **नाडीति** ॥ व्याप्तत्वेगत्य
योगादितिभावः । यत्यस्मात् अतोयुक्तेःश्रुत्युक्तत्वेनप्राबल्यमितिभावः ॥ ९ ॥ अकरणत्वाच्चनदोषइतिसूत्रेमुख्यप्राण
स्यकरणत्वमेवोक्तं नतुप्राणानांकरणत्वंतत्कथमेतादितितत्राह ॥ **चशब्देनेति** ॥ ॐ **ज्योतिराद्यधिष्ठानंतुतदा-**
**मननात्** ॐ ॥ ज्योतिराद्यधिष्ठानमग्न्यादिभूतनियामकंयद्ब्रह्मतत्तुतदेवज्योतिराद्यधिष्ठानं अग्न्याद्यंशचक्षुरादिनियामकं
तत्करणमितियावत् कुतःतदामननात् तस्यचरादिनियामकत्वस्ययश्चक्षुषितिष्ठन्नित्यादिनाभिधानादित्यर्थः ॥ **सर्वप्रा**
**णप्रेरकेति** ॥ यःप्राणेतिष्ठन्नितिप्राणशब्दस्येंद्रियपरत्वेयश्चक्षुषीत्यादिपौनरुक्त्यापत्तेरितिभावः । आदिपदोपात्तमाह
॥ **यश्चक्षुषीति** ॥ ननुकारणक्रमेणवचने आकाशाद्यधिष्ठानमिति कार्यक्रमेणवचनेपृथिव्याद्यधिष्ठानमितिवक्तव्यं ज्योतिरा
द्यधिष्ठानमितिवचनेकिंनिमित्तमाह ॥ **चक्षुरादिवदिति** ॥ **उपलक्षणमेतत्** । चक्षुपादर्शयतीतिश्रुतौचक्षुषआदित्वेनग्रहणा
दित्यपिद्रष्टव्यं ॥ ॐ **प्राणवताशब्दात्** ॐ ॥ ब्रह्म प्राणवता इंद्रियवता जीवेनकर्त्रास्वकरणैरिंद्रियैर्दर्शनादिकारयति कुतः
एषहीनिशब्दाङ्कैः अनस्तानिजीवकरणानीन्युच्यंतइत्यर्थः । एतत्ब्रह्मकरणत्वं ॥ **तदुपपत्तिरिति** ॥ मुख्यप्राणस्यजीवक
रणत्वाभावेनाकरणत्वहेतुनोक्तत्वेनमुख्यस्योपपत्तिरित्यर्थः ॥ **जीवापेक्षयाब्रह्मकरणत्वमिति** ॥ तत्रअकरणत्वाच्चेति सू
त्रेइंद्रियाणांमुख्यत्वेयत्तुहेतुत्वेनोक्तंकरणत्वंतज्जीवेनैवकरणैःकारयतिपरमात्मेत्युक्तरीत्याजीवापेक्षयाब्रह्मकरणत्वंविवक्षितं-

मुख्यप्राणस्यचजीवापेक्षयाब्रह्मकरणत्वाभावान्मुख्यत्वोपपत्तिरितिभावः । वृश्चतेःछेतुः ॥ ॐ तस्यचानित्यत्वात् ॐ ॥
तस्यजीवस्य चशब्दगृहीतेंद्रियतत्संबंधयोरपिनित्यत्वाच्चिरकालीनत्वाज्जीवकरणत्वश्रुतिरुपचरितार्थेत्यर्थः । अनुभवः
इंद्रियाणांस्वाधीनत्वावगाहीप्राणवत्पदेनकथंप्राणादयःसन्निधापिताइत्यतआह ॥ नह्मीति ॥ ननुजीवकरणसंबंधनित्यत्वस्यै
वस्तूनोपयोगित्वात्तत्परामर्श एवकार्योनजीवप्राणपरामर्शइत्यतआह ॥ संबंधिनोरभावइति ॥१०॥ विशेषश्रुत्येति॥
प्राणःसर्वेतिविशिष्योक्तेरितिभावः ॥ इदंद्रवणोति ॥ इदंविषयजातमुद्दिश्यद्रवणादिंद्रियमतींद्रियपदप्रवृत्तिनिमित्तवत्वयुक्ती
त्यर्थः ॥ ननूभयोरपीशवशत्वसाम्येपिजीवापेक्षयाब्रह्मकरणत्वाच्चक्षुषइंद्रियत्वंमुख्यप्राणस्यतदभावादनिंद्रियत्वमस्त्वित्यत
आह ॥ प्रातिस्विकेति ॥ प्रतिव्यक्तिनियतावांतरविशेषाणांश्रोत्रादिष्वपिसत्वेनतेषांमध्येकेषांचिदिंद्रियत्वंकेषांचित्तद
भावःस्यादित्यर्थः ॥ चक्षुरादिष्वप्येवमिति ॥ चक्षुर्नेंद्रियमितिचेन्न तथात्वेश्रोत्रस्यापींद्रियत्वंनस्यादित्यादिद्र-
ष्टव्यमित्यर्थः। मनोबुध्योरुभयोरपिद्वादशत्वप्रतीतिनिरासायाह ॥ एकादशद्वादशेति ॥ छांदसत्वान्नकश्चित्क्षुद्रोपद्रवः
॥ॐ तइंद्रियाणितद्व्यपदेशादन्यत्रश्रेष्ठात् ॐ॥ श्रेष्ठान्मुख्यप्राणात् अन्यत्रअन्ये तेप्राणा इंद्रियाणिकुतस्तद्व्यपदेशात्
तस्योक्तार्थस्यद्वादशैवेतिश्रुत्युक्तत्वादित्यर्थः ॥ ॐ भेदश्रुतेः ॐ ॥ द्वादशप्राणानांमुख्यप्राणस्यचभेदश्रुतेर्विशेषश्रवणात्त
इंद्रियाणीत्यर्थः ॥ सर्वकर्तृकारयितृत्वेति ॥ कर्तृत्वेनकारयितृत्वेनचेत्यर्थः ॥ प्रागुक्तविरोधइति ॥ चक्षु-
रादिवदित्यनेनतस्येशाधीनत्वोक्तिविरोधइत्यर्थः ॥ ॐ वैलक्षण्याच्च ॐ ॥ प्राणानांमुख्यप्राणस्यचजीवप्रयत्नाधी
नत्वतदधीनत्वरूपवैलक्षण्याच्चतएवेंद्रियाणीत्यर्थः । नयापयतेनगच्छति पुरुषोयदैवंभवतितदैनंस्वपतीत्याचक्षते स्वं-
स्वतंत्रंपरमात्मानं अप्येतिसुप्तोभवतीतिवदंतिज्ञानिनः । प्राणाग्नयःप्राणापानादिमुख्यप्राणस्वरूपभूताअंगनेतृत्वादग्नि

शब्दवाच्याः जाग्रति अग्रस्तव्यापाराःस्वस्वव्यापारंकुर्वंतीत्यर्थः ॥ ११ ॥ ननुविपूर्वोदधातिःकरोत्यर्थइत्यन्यत्रोक्त-
त्वात् विरेचयतिविदधातीतिपुनरुक्तमित्यतआह ॥ **विरेचयतीत्यस्यैवव्याख्यानमिति** ॥ **हेतुरुच्यतइति** ॥
नतुनिरुच्यतइतिभावः ॥ **विरिंचत्वयुक्तीति** ॥ यस्माद्विरेचयेत्सर्वंविरिंचस्तेनभण्यतइत्युक्तयुक्तियुक्तत्वादेवेत्यर्थः
॥ **सृष्टिद्वारत्वेनेति** ॥ परमात्माविरिंचेनदेहादिकंसृजतीत्यर्थकत्वेनविरिंचकर्तृत्वश्रुतियुक्त्युपपत्तिरित्यर्थः ॥ ॐ सं-
ज्ञामूर्तिक्लृप्तिस्तुत्रिवृत्कुर्वतउपदेशात् ॐ ॥ संज्ञामूर्तयोर्नामदेहयोःक्लृप्तिःसृष्टिः त्रिवृत्कुर्वतस्तुत्रयाणांतेजो-
बन्नानांमिश्राणांकुर्वतोहरेरेवसकाशात् नाविरिंचतः कुतः उपदेशात्सर्वाणिरूपाणीतिश्रुतेरित्यर्थः । श्रुतौविचित्यक-
वाभीरइत्यादिपुल्लिंगानुरोधेनाह ॥ **यदिति** ॥ **लिंगेति** ॥ **सेयमिति** ॥ सातेजः स्रष्टृत्वेनप्रकृतेयंनारायणाख्या-
देवता इमाः प्रागुक्ताः तिस्रःतेजोबन्नाभिमानिन्योदेवताऽभिमन्यमानभूतसहिताऽनेनजीवेनात्मनानिरुद्धेनरूपेणप्रविश्यना
मरूपेसंज्ञाशरीरेविशेषेणाकरोत् तदर्थंतासांदेवतानांमध्येएकैकंएकैकाभिमन्यमानभूतंत्रिवृतमन्योन्यप्रविष्टमकरोदित्यर्थः
॥ **इयमपिश्रुतिरिति** ॥ विरिंचोवेत्यादिश्रुतिरित्यर्थः ॥ १२ ॥ तत्रपृथिव्यांलयएवोच्यतेनतत्कार्यत्वमतआह
॥ **कार्यस्येति** ॥ उपादेयस्यउपादानएवेत्यर्थः ॥ **आकाशंपरमात्मानमिति** ॥ तथाचशरीरंपृथिवीमप्येति तद्ग
तआत्माजीवआकाशंपरमात्मानमप्येति इतरैरहश्यःप्रविशतीत्यर्थउक्तोभवति कासांचिद्भूतत्रयकार्यत्वमभिधात्रीणां
॥ ॐ **मांसादिभौमंयथाशब्दमितरयोश्च** ॐ ॥ देहस्थमांसाद्येवभौमंपार्थिवं यन्मज्जादितच्च इतरयोरप्तेजसोःका
र्यंयथाशब्दंश्रुत्यनुसारेणांगीकार्यमित्यर्थः । यद्वामांसादिनकेवलभौमंकिंतुइतरयोश्चकार्यंयथाशब्दमंगीकार्यमित्यर्थः । ॥ ३४ ॥
इतरावपिपक्षावितियच्छरीरेद्रवंतदाप्यंनसर्वशरीरं यच्छरीरेउष्णंतदेवतैजसंनसर्वशरीरमितिइतरावपिपक्षौनिषेध्यावि-

त्यर्थः । नात्रमांसादीनामनेकभूतकार्यत्वमुच्यतइत्यतआह ॥ भूम्यादिभूतानामिति ॥ स्वतएवस्वरूपेणैवसंभूतत्वादिति मिश्रत्वेनसम्यग्भूतत्वादित्यर्थः । प्रकृतिःप्रकर्षेणक्रियतइतिप्रकृतिःकार्यं ॥ ॐ वैशेष्यात्तुतद्वादस्तद्वादः ॐ ॥ भूम्यादिभूतसंयोगवैशेष्यात्तद्वादः भौमत्वादिविशेषवादइत्यर्थः ॥ पुनर्विशेष्योक्त्योगइति ॥ एकस्मिन्देहेसर्वेषांविशेषसंयोगेसत्याप्यमीत्यादिविशेष्योक्त्ययोगइत्यर्थः । अन्येषांवरुणलोकगतानामुक्तदोषः पुनर्विशेषोक्त्ययोगरूपः । ननुपूर्वाध्यायांतएवाद्विरुक्तेरेवधारणार्थत्वस्यअवधारणार्थंसर्वस्येतिप्रमाणेनोक्तत्वात्पुनरत्रतदुक्तिर्व्यर्थेत्यत उक्तं प्रयोजनविशेषमिति पंजभूतात्मकंसर्वमित्येतदनुरोधेनाह ॥ पांचभौतिकमिति ॥ १३ ॥ इतिश्रीमत्तत्वप्रकाशिकावाक्यार्थमंजर्यांशर्कराश्रीनिवासविरचितायांद्वितीयाध्यायस्यचतुर्थःपादः ॥ ॥

॥ इति श्रीमत्तत्वप्रकाशिकावाक्यार्थमंजर्यां द्वितीयाध्यायःसमाप्तः ॥

|| इति श्रीमत्तत्वप्रकाशिकावाक्यार्थमंजर्यां ||

|| द्वितीयाध्यायः समाप्तः ||

॥ इति श्रीमत्तत्वप्रकाशिका वाक्यार्थमंजर्यां ॥

# ॥ तृतीयाध्यायः प्रारंभः ॥

॥ श्रीवेदव्यासायनमः ॥ वैराग्यभक्तिश्रवणमननध्यानयोगतः । सद्भिर्ज्ञेयंभजेमध्वबल्लभंकमलापतिं ॥ १ ॥ शास्त्रार्थ इति ॥ ब्रह्मणोमोक्षार्थंज्ञेयत्वस्यैवसर्वशास्त्रार्थत्वादितिभावः ॥ तदिति ॥ द्वितीयसूत्रोक्तंजगत्कारणत्वंनिर्गुणपूर्णत्व मित्यर्थः ॥ अथब्रह्मजिज्ञासेति ॥ अधिकारानंतर्यार्थकाथशब्देनाधिकारिविशेषणतयावैराग्यभक्त्यादेः ब्रह्मजिज्ञा सापदेनापरोक्षज्ञानजनकश्रवणादिरूपोपासनायाश्चप्रतिपादनादितिभावः । वर्तिष्यते प्रवर्तिष्यते । ननुमोक्षायवैराग्यस्यैव कुतः यदर्थंगत्यादिनिरूपणमित्यतआह ॥ भगवत्प्रसादइत्यादिना ॥ अनेनग्रंथप्रसाधनत्वाद्वैराग्यंप्रथमपादे निरूप्यते । तत्साध्यभक्तिर्द्वितीये तत्साध्योपासनातृतीये तत्साध्यज्ञानंचतुर्थइतिपादक्रमःसूचितइतिध्येयं । भावयतःपुनः पुनर्विचारयतः ॥ नसाध्यतेति ॥ अन्यथाभूतवियोगस्यैवमोक्षत्वेनतस्यमरणेसतिस्वतएवलब्धत्वेनसाधनवैयर्थ्यापि त्तेरितिभावः ॥ प्राचीनोक्तिरिति ॥ अथब्रह्मजिज्ञासापदाभ्यांसाधनस्यानुष्ठेयत्वोक्तिरित्यर्थः ॥ अन्वयव्यति- रेकेति ॥ सतिप्रसादादिसाधनेमोक्षः अन्यथानेत्यदर्शनमित्यर्थः । उक्तं अथब्रह्मजिज्ञासापदाभ्यामिदंमोक्षफलकं ॥ ॐ तदंतरप्रतिपत्तौरंहतिसंपरिष्वक्तःप्रश्ननिरूपणाभ्यां ॐ ॥ जीवःमृतिकालेसंपरिष्वक्तःभूतैःसंबद्धएवरंहतिग च्छति किमर्थं तदंतरप्रतिपत्तौतदंतरस्यदेहांतरस्यप्रतिपत्तौप्राप्त्यर्थं कुतः वेत्थयथेतिप्रश्नवाक्यात् इतित्विंतिपरिहारवाक्या च्चतथावगमादित्यर्थः । प्रवाहणस्यराज्ञःतातपित्रा उद्दालकेन प्रवाहणेनपृष्टःश्वेतकेतुःस्वस्यपरिहारासामर्थ्यंस्वपितरमागत्य तस्मैतन्यवेदयत् पिताचस्वेनापितद्ज्ञानात्पुत्रेणसहप्रवाहणंप्राप्यस्वेतकेतुंप्रतिकृतप्रश्नपरिहारंत्वमेवब्रूहीतितंप्रत्युवाच ततः प्रवाहणःस्वकृतप्रश्नोत्तरंस्वयमेवतावुभौप्रतिजगादेतिछंदोगेपंचमेप्रसिद्धं । संपरिष्वक्तएवगच्छतीतिगमनकालेसंबंधाभा वेप्रश्नपरिहारोक्तागमनकालीनतत्संबंधानुपपत्तेरितिभावः । अत्रैवस्पष्टंप्रमाणमाह ॥ भूतयुक्तइति ॥ १ ॥ ॐ त्र्या-

॥ १ ॥ त्मकत्वात्तुभूयस्त्वात् ॐ ॥ अपांत्र्यात्मकत्वात् भूजलाग्न्यात्मकत्वात् तथाभूयस्त्वात् सर्वत्रापामेवभूतेजोपेक्षया-
वाहुल्यादापइतिविशेषोक्तिसंभवेनसर्वभूतसंवत्थएवजीवोगच्छतीत्यर्थः । तत्रप्रश्नपरिहारयोः ॥ सर्वदेहेष्विति ॥ पा
र्थिवशरीरेपृथिव्याःभागचतुष्टयं अपांभागत्रयं तेजसएकोभागः । आप्यशरीरे अपांभागचतुष्टयं पृथिव्याःभागत्रयं ते
जसएकोभागः । तैजसशरीरेतेजसोभागचतुष्टयं अपांभागत्रयं पृथिव्याएकोभागइतित्रिविधशरीरेषु संभूय मिलित्वा
अपांभागदशकंपृथिव्याःभागाष्टकंतेजसोभागपञ्चकमित्यपामेवभूयस्त्वादित्यर्थः ॥ २ ॥ ननुपूर्वनयेऽपांसहगमनेतासां-
त्र्यात्मकत्वेनभूतानामपिसहगमनसिद्धिरित्युक्तत्वात्कथमनुक्तिरित्यतआह ॥ आर्थिककल्पनायाइति ॥ ॐ प्रा-
णगतेश्च ॐ ॥ प्राणानामिंद्रियाणांजीवेनसहगतिश्रुतेस्तदविनाभूतभूतानामपितेनसहगतिसिद्धिरित्यर्थः । भूत्यइत्यनं-
तरंराज्ञासहगच्छतीतिशेषः ॥ ३ ॥ अनिर्णयः निर्णायकाभावः ॥ ॐ अग्न्यादिगतिश्रुतेरितिचेन्नभाक्तत्वा-
त् ॐ ॥ अग्निंवागप्येतीत्यादिनाप्राणानामग्न्यादीन्प्रतिगमनश्रवणान्नजीवेनसहतेषांगतिरितिचेन्न । अग्न्यादीन्प्रति
गतिश्रुतेर्भाक्तत्वात् भागेनाग्निगतिविषयत्वात्भागांतरेणजीवेनसहगतिरुपपन्नेत्यर्थः । दिशोदिग्देवताः ॥ अनेनेति ॥
भूतनिवृत्तिर्नामाग्न्यादिमूलरूपाणिप्रतिगच्छद्भिःप्राणभागैःसहभूतभागगमनमेवगमनंनतुसर्वेषांभूतानां तत्संयोगोनामपुन
स्तैःसहतेषांशरीरप्रवेशएवेतिव्याख्यातंभवतीत्यर्थः ॥ ४ ॥ उभयविधेति ॥ मृतसहासहगंतृकमथनदर्शनामित्यर्थः ।
॥ ॐ प्रथमेऽश्रवणादितिचेन्नताएवह्युपपत्तेः ॐ ॥ अत्रप्रथमइत्यस्यावृत्तिःश्रवणादश्रवणादित्युभयथापिपदच्छेदः
तथाचप्रथमेऽग्नौश्रवणान्श्रद्धांजुह्वतीति अन्याविशिष्टजीवस्यहोमश्रवणान्निमित्तात् प्रथमे उदात्ततापक्रमवाक्येऽश्रवणात् ॥ १ ॥
भूतसाहित्यस्याश्रवणात् जीवस्यभूतैःसहागमनमितिचेन्न हियस्मा( )एवमस्तुताआपएवश्रद्धाशब्देनोच्यंते कुतः

उपपत्तेः तथात्वेआपःपुरुषवचसोभवंतीत्युपसंहारोपपत्तेः अन्यथातद्विरुद्धत्वेनोपक्रमाप्रामाण्योपपत्तेरित्यर्थः ॥ तस्मिन्निति ॥ तस्मिन्नसौवावलोकोगौतमाग्निस्तस्यादित्यएवसमिद्रश्मयोधूमोहरर्चिश्चंद्रमांगारानक्षत्राणिविस्फुलिंगाःइत्यनेनोक्तेएतस्मिन्द्युस्थनारायणाख्येअग्नौदेवाःद्युलोकाधिपतयःश्रद्धांश्रद्धयेष्टवंतंउत्क्रांतंयजमानंजुह्वतीत्यर्थः ॥ प्रथमाग्नाविति ॥ द्युपर्जन्यपृथिवीपुरुषयोषिदाख्यपंचाग्निषुप्रथमाग्नावित्यर्थः । अपांश्रद्धारूपत्वाभावादाह ॥ श्रद्धाशब्दार्थरूपतयेति ॥ ननुश्रद्धाशब्दास्याप्सुयोगरूढयोरभावात्कथंतदर्थत्वमित्यतआह ॥ अयंखल्विति ॥ अजहदितिस्वार्थमजहादित्यर्थः । यथाश्रद्धामात्रस्यहोम्यत्वाभावात्श्रद्धाशब्दस्यश्रद्धायुक्तजीवलक्षकत्वंतथोपसंहारान्यथानुपपत्त्यांबूपलक्षकत्वंचांगीकार्यमितिभावः ॥ आगमनमात्रेति ॥ आपइतिसामान्येनोक्तत्वादितिभावः ॥ भूतानीति ॥ यद्युपसंहारस्यागमनमात्रविषयत्वंतर्हिमरणानंतरंभूतानांजीवेनसहगमनाभावसिध्यर्थमुत्क्रांतोभूतानित्यजतीतिवक्तव्यंस्यात् । तथातास्मिन्नेतस्मिन्नग्नौदेवाः श्रद्धांजुह्वतितस्याआहुतेः सोमोराजासंभवति । तस्मिन्नेतस्मिन्नग्नौदेवाः सोमंराजानंजुह्वतितस्याआहुतेर्वर्षःसंभवति । तस्मिन्नेतस्मिन्नग्नौदेवाः वर्षंजुह्वतितस्याआहुतेरन्नंसंभवति । तास्मिन्नेतास्मिन्नग्नौदेवाः अन्नंजुह्वति तस्याआहुतेरेतःसंभवति । तास्मिन्नेतास्मिन्नग्नौदेवाः रेतोजुह्वतितस्याआहुतेर्गर्भःसंभवतीतिवद्गमनकाले जीवस्याद्भिः साहित्यसिध्यर्थंतस्मिन्नेतस्मिन्नग्नौदेवाआपोजुह्वतितस्याआहुतेरापोभवंतीतिवक्तव्यत्वात् । अन्यथा आपःपुरुषवचसोभवंतीत्यनुवादायोगात् । नचैवमस्ति । तथाचापइत्यनुवादबलान्मरणानंतरंसहगतानामेवापांपुनरागमनमितिज्ञायतइतिभावः । एवंद्युलोकेदेवैः निक्षिप्तोयजमानः स्वपुण्यावसानेमर्त्युलोकोन्मुखस्तस्याआहुतेः सकाशात्सोमोराजासोमलोकांतर्गतःसंभवति । वर्षंवृष्टंचंतर्गतमन्नमन्नात्मकंरेतस्तदंतर्गतंगर्भोगर्भस्थइत्युदाहृतवाक्यशेषार्थः । तदर्थेव्या

इतिगौणार्थतयेत्यर्थः। कुतोन्येषांतदभावस्योक्तिरित्यतआह ॥ काम्यकर्मणेति ॥ हियस्मात्काम्यकर्मणः तत्फलस्यस्वर्गादे रेवसिद्धिः तस्मात्कर्मिणांमुख्यामृतत्वाभावइतियुक्तमित्यर्थः ॥ मुख्यामृतत्वमिति ॥ अमृतशब्दस्यमोक्षेयोगरूढत्वादिति भावः। यद्यमृतपदेनमुख्यामृतमेवोच्येततर्ह्यंगीकृतकर्मणोमोक्षसाधनत्वमित्यभिप्रेत्यपृच्छति ॥ किंनामेति ॥ अगन्मेति ॥ तथाचसोममपाम तेनज्योतिर्ज्ञानमगन्मप्राप्नुमः । ततोमार्गस्थानर्चिरादिदेवानविदाम: आप्नुमः । ततोऽमृतान्भुक्त्वाऽभूमे त्यर्थः । काम्यकर्मपक्षेचचांद्रमसंज्योतिरगन्म । ततोमार्गस्थान्धूमादिदेवानविदामेत्यर्थः ॥ आत्मज्ञानलब्धइति ॥ आत्म ज्ञानेनाविद्यावरणाद्यनिष्टनिवृत्तिर्भवति । स्वरूपानंदस्यापिकतिपयस्याभिव्यक्तिः । ज्ञानोत्तरकर्मादिनातत्कालविषयभोगेन यावत्स्वरूपानंदोव्यज्यते अयमेवातिशयवृध्यादिशब्दार्थः । सर्वदुःखनिवृत्तिस्तुज्ञानिनोनिश्चितैवाहि । उपासयाकर्मभि श्चभक्त्याचानंदचित्रतेत्युक्तेः उक्तंचप्रमेयदीपिकायां ननुमुक्तःकिमर्थंविषयानिच्छेत् नतावत्सुखार्थंज्ञानेनावरणरूपाविद्या निवृत्तावात्मस्वरूपसुखस्याभिव्यक्तत्वात् पृथक्सुखस्यानंगीकारात् नापिदुःखनिवृत्यर्थं अविद्यानिवृत्यैवतत्सिद्धिरिति । मैवं । नाविद्यैवात्मस्वरूपावरणंकिंत्वीश्वरेच्छापि तथाचवक्ष्यति तथाचाविद्यायांनिवृत्तायामशेषानिष्टनिवृत्तिर्भवति । स्वरूपसुखंचबहुतरंव्यज्यतेनतुसर्वं । ज्ञानोत्तरमनुष्ठितेनकर्मणाप्रसन्नःपरमेश्वरः मुक्तौविषयानुत्पाद्यतद्भोगेनज्ञानानभिव्यक्त मपिस्वरूपसुखंव्यक्तीकरोति । अत्रभाष्यकृतैवप्रमाणान्युक्तानि । अनेनैवाभिप्रायेणश्रुत्यादिषुमुक्तेर्ज्ञानमात्रसाध्यत्वंज्ञान कर्मसमुच्चयसाध्यत्वंचोच्यतइति । अतएवातिशयातिरिक्तमोक्षसाधनसूचनाय संसारनिवृत्तिरित्युक्तं बंधनिवृत्तिरूपमोक्षइ त्यर्थः । अस्मिन्पक्षेपूर्वंज्योतिरगन्म ततःसोममपाम ततोऽमृताऽभूमेत्यर्थः ॥ इत्यादिश्रुत्यैवेति ॥ आत्मविदामेवमु ख्यामृतत्वमित्यर्थांतरप्रतिपादनायोदाहृतमेवेत्यर्थः । आदिपदेनतत्तत्सृजतेत्येतस्यग्रहणं । अविदितस्यापिस्वर्गादिभोजक

त्वादाह ॥ नामृतत्वमिति ॥ ननूपासनाकर्मणोज्ञानहेतुत्वात्कथमात्मविदपेक्षयेत्यत्रात्मानमेवेतिश्रुतिःप्रमाणमित्यतआह
॥ जानातीति ॥ परत्मानःसकाशात्यत्प्राप्तुमिच्छतितत्सर्वंस्वयंसृजतीतिनिरासायाह ॥ समुक्तइति ॥ ७ ॥ उक्त
न्यायइति ॥ वैराग्यादेरवश्यानुष्ठेयत्वसाधकतत्तदधिकरणोक्तमित्यर्थः । फलंधनादि ननुभोगेनकर्मणांक्षयेपिबंधनिवृ
त्तिलक्षणमुक्तिःकथमित्यतआह ॥ कर्मनिबंधनइति ॥ क्षेप्तुं भोगेननाशयितुं ननुस्वर्गादावपिकर्मांतरापादनसंभवा
त्कथंभोगेनसर्वकर्मक्षयइत्यतआह ॥ तत्रेति ॥ तस्यभोगमात्रस्थानत्वादितिभावः ॥ ॐ कृतात्ययेऽनुशयवान्दृष्ट
स्मृतिभ्यां ॐ ॥ कृतस्यकर्मणोत्ययेस्वर्गादिभोगेनक्षये अनुशयवान्भुक्तकर्मशेषवानेवायाति कुतःदृष्टस्मृतिभ्यांततःशेषे
णेमंलोकं भुक्तशेषानुशयवानितिश्रुतिस्मृतिभ्यामित्यर्थः । देवदैत्यानामपिजीवकृतकर्मभागित्वाद्यथायोग्यमित्युक्तं । ज
न्मारभ्यचतुर्दशवर्षपर्यंतमित्यर्थप्रतीतिनिरासायाह ॥ चतुर्दशमिति ॥ मर्यादार्थत्वस्य जीवश्चतुर्दशादूर्ध्वंपुरुषोनियमे
ननु । स्त्रीत्वाप्यनंतदशकंदेहंमानुषमार्जयेदित्यादिविरुद्धत्वादितिभावः । दशभ्योऽवराइत्यल्पत्वप्रतीतिनिरासायाह ॥ द
शावरायोध्वेति ॥ ८ ॥ क्लेशिष्टेना क्लेशसाधनता सहभावात् विषयतयाविद्यमानत्वादुभयत्रतथाशब्दद्वयाध्याहारेणयथे
तमितिश्रुतिवाक्यद्वयंव्याचष्टे ॥ यथेति ॥ ॐ यथेतमनेवंच ॐ ॥ यथायेनमार्गेणस्वर्गादिकंप्रति इतं गतं तेनायाति अने
वंच नतेनैवेनचमार्गेणयातीत्यर्थः ॥ युक्तीति ॥ मार्गस्मरणयुक्तीत्यर्थः ॥ ९ ॥ गतागतस्येति ॥ गतंगमनंआग
तंआगमनंतयोरित्यर्थः । भावेक्तप्रत्ययः ॥ तन्निमित्तानिमित्तयोरिति ॥ एकस्मिन्देशेकालेचपटादिकार्येणतन्निमि
त्तानिमित्तयोःनंतुगामभयोःसहभावदर्शनादित्यर्थः।तथाचतद्देवात्रयज्ञादेर्गतागतानिमित्तत्वसंशयेनगतागतस्यतज्जत्वन्यसं
शयइतिभावः ॥ ॐ चरणादितिचेन्नतदुपलक्षणार्थेतिकार्ष्णाजिनिः ॐ ॥ रमणीयचरणाइतिश्रुतेः गतागतं च

रणादाचारादेवभवति नकर्मणेतिचेन्न यतश्चरणश्रुतिस्तदुपलक्षणार्था तस्यकर्मणोपलक्षणयावृत्योपादानार्थतइत्यर्थः ॥ तद्यइहेति ॥ तत् तत्र कर्मिषुयेरमणीयचरणाःसाध्वाचारमंतः तइहभूमौरमणीयांसाध्वींब्राह्मणादियोनिमापद्यंते प्राप्नुवंति । येकपूयचरणाः असाध्वाचारमंतः तेकपूयामसाध्वींशूद्रादियोनिमापद्यंतइत्यर्थः । कृतकर्मणोरित्यभिधानं । शून्यं प्रयोजनविकलं । कारी कर्मकर्ता आचारी आचारवान् तथा तदनुसारिफलभाक् ॥ अथेति ॥ यइमेग्रामाःकाम्यकर्मिणांसमुदायः इष्टं यजनं पूर्तं तटाकबंधनादि दत्तंधनादिदानं इतिशब्दःप्रभृत्यर्थः । उपासते आतिष्ठंते । तेधूमं धूमादिदेवतालोकं अभिसंभवंति प्राप्नुवंतीत्यर्थः ॥ तस्मिन्निति ॥ तेकर्मिणःतस्मिन्निंद्रलोकेयावत्संपातंतस्मादधःपतनंयावद्भवति तत्रावस्थाननिमित्तं पुण्यंयावत्समाप्यतइतियावत् तावत्कालपर्यंतंतत्रोषित्वावासंकृत्वा अथकर्मक्षयेयेतमेवमार्गंपुनरावर्ततइत्यर्थः ॥ नचेति ॥ नास्तीति नचेत्यर्थः । करणंकर्म ॥ भ्रांतिरेवेति ॥ तथाचनतद्विरोधइतिभावः । एतत् तत्रापिचरणफलस्यगतागतस्यचरणफलरूपार्थांतरकल्पनं चरणश्रुतेः तद्यइहेत्यस्यसावकाशश्रुतेः इष्टापूर्तेदत्तामित्यस्याः गतागतशून्यफलंमोक्षः । नन्वनयाश्रुत्याकर्मणोगतागतशून्यफलत्वाभावासिद्धावपिगतागतफलत्वंकुतइत्यतआह ॥ इष्टापूर्तमिति ॥ तत्रेमंलोकं हीनतरंवाविशंतीत्युक्तेरितिभावः । त्रैविद्याःकाम्यकर्मिणः मांयांतीत्यर्थः ॥ अजहदिति ॥ स्वार्थाचारात्यागलक्षणयेत्यर्थः । आदिवाक्यस्य इष्टापूर्तेदत्तामित्युपक्रमवाक्यस्य ॥ यइति ॥ येयज्ञादिकर्मणालोकान्प्राप्नुवंतितआदौधूममभिसंभवंतीत्यर्थः । विरुद्धमर्थांतरकल्पनामित्यस्ति ॥ ॐ आनर्थक्यमितिचेन्नतदपेक्षत्वात् ॐ ॥ उपलक्षकत्वेचरणशब्दस्यानर्थक्यवैयर्थ्यर्थक्यांमितिचेन्न रमणीयत्वादेस्तदपेक्षत्वात् चरणसामर्थ्येनतदर्थंतत्सार्थक्यादित्यर्थः । प्रकृतत्वेनेष्टापूर्तेदत्तामित्युपासतइत्यनेनेत्युपलक्षणस्येतिसंबंधः । उपलक्षणत्वपक्षेरमणीयचरणाइत्यादेर्लब्धयोजनांदर्शयति ॥ एवंचेति ॥

॥ ॐ सुकृतदुष्कृते एवेतितुबादरिः ॐ ॥ रमणीयकपूयचरणेसुकृतदुष्कृतेक्रमेणसाध्वसाधुकर्मणीएव नाचारानाचारावितिबादरिर्मन्यतइत्यर्थः । ननुनानार्थचरणशब्दस्यैकार्थपरत्वे उभयपरत्वंकुतइत्यतआह ॥ साधारणश्रुतेश्चेति ॥ रमणीयचरणाइत्यत्रचरणशब्दस्ययद्याचारमात्रार्थत्वंतदानान्यःपंथाअयनायविद्यतइतिश्रुतिविरोधः । यदिकर्ममात्रार्थत्वंतर्हि-यज्ञादिकृतामप्याचाराधीनरमणीयत्वाद्यसिद्धिरितिबाधकवशात्सांगकर्मार्थत्वस्यतंत्रन्यायेनांगांगिरूपोभयार्थकथनपरत्वस्यैवोपपत्तेरित्यर्थः ॥ १० ॥ अनिष्टादिकारिणामिति ॥ इष्टादिपुण्यकारिणांतद्विलक्षणपापकारिणांचेत्यर्थः ॥ विशिष्योक्तिरिति ॥ गतागतस्येष्टादिकर्मसमर्थनलब्धाइष्टादिकारिणांगतागतमितिविशिष्योक्तिरित्यर्थः । भयतदभावमात्रणकथमिदंवपश्यामित्यतआह ॥ बिभ्यदिति ॥ पतनभयवानेववृक्षात्पततीत्यर्थः । फलकामस्यगतागतकरणत्वेश्रुतिमाह ॥ कामान्यइति ॥ यआत्मानंकर्तृत्वेनमन्यमानःकामानविषयान् कामयतेइच्छतिस्म सएवकामभिःभोक्तव्यैः कामैर्निमित्तैस्तद्भोगार्थमितियावत् भुविजायते तत्रतत्रविषयेषुपर्याप्तकामस्यात्मैवतुल्यिमनःकृतात्मनःशिक्षितबुद्धेर्योगिनस्तु इहैवलोकेसर्वेकामाःप्रविलीयन्ते निर्दोषयंतइत्यर्थः ॥ ॐ अनिष्टादिकारिणामपिचश्रुतं ॐ ॥ नकेवलमिष्टादिकारिणामेवगतागतादिकं अपितुनक्तश्रुतमनिष्टादिकारिणामपिचश्रुतमित्यर्थः । नन्वेवंतर्हीष्टानिष्टाद्यकरणेगतागतादिदुःखाभावात् मोक्षसंभवेत्चाकिमर्थं वेदान्तादीत्यतआह ॥ तद्कारिणइति ॥ अनिष्टेत्यत्रनञोऽभावार्थत्वंविरुद्धत्वंचेतिभावः । अपिशब्देनेष्टादिकारिसमुच्चयविवक्षितत्वेत्यर्थइत्यतआह ॥ चशब्दइति ॥ अत्रोपष्टंभकमाह ॥ तदेवोत्तरसूत्रइति ॥ अन्यथाअप्राप्तस्यानुवादायोगात्संयमनेत्वनुभूयेत्यनुवादोनस्यादितिभावः ॥ ॐ संयमनेत्वनुभूयेतरेषामारोहावरोहौतद्गतिदर्शनात् ॐ ॥ सम्यक् यमनंशासनंसप्तमीद्वितीयार्थे अनुभूय तु अनुभूयैव इतरेषामनिष्टादिकारिणामारोहावरोहौ केषांचि-

दारोहउत्थानं केषांचिदवरोहः नीचस्थानेपातोभवति कुतः तद्गतिदर्शनात् तेषामनिष्टादिकारिणां गतेरेवंविधायाः सर्वे वाएतइतिश्रुतौदर्शनादित्यर्थः ॥ विकल्पइति ॥ भगवद्द्वेषिणामेवनित्यनरकेपातोन्येषांनेतियथानतथासम्यग्ग्ययनंपापो परमणंयत्रेति संयमनपदेनोक्तेऽनित्यनरकेकिंतुसर्वेषांतन्नियतमितिभावेनेत्यर्थः ॥ इतिच्चार्थइति ॥ नकेवलंपापकर्तृ त्वमेवाशुभकृच्छब्दार्थः किंतुपुण्याकर्तृत्वमप्यर्थइत्यर्थः । तेनानिष्टादिकारिशब्दस्योभयविधव्याख्यानेनश्रुतिसंवादइतिभा वः ॥ ॐ स्मरंतिच ॐ ॥ नकेवलमिष्टादिकारिणामेवंविधगतिःश्रूयते किंतुतांस्मरंतिचस्मृतिकर्तारइत्यर्थः ॥ दर्श- नादिति ॥ तथाचनद्वेवभयाद्यभावेपिगतागतमनिवार्यमितिभावः ॥ ११ ॥ वैराग्यंभगवद्द्वेषादौ । पूर्वोक्तिः अवरोहः नैवेतउत्तिष्ठंतीत्युक्तिःलोकदृष्टिःनिगडस्थानादेरनित्यफलप्रदत्वदर्शना ॥ यावदिति ॥ चतुर्दशेंद्रायावत्स्वपदेतिष्ठंति तावत्कालंनरकेतिष्ठंतीत्यर्थः । ननुनरकभोगस्यनित्यत्वेपिनानित्यत्वोक्तिर्विरुत्था नरकस्यभगवद्द्वेषाद्यतिपापीनांनित्यफल प्रदत्वेप्यल्पपापिनांपुनरावृत्त्यपेक्षयायावदिंद्राश्चतुर्दशेत्यादनित्यत्वकथनसंभवादित्याशंक्यानिषेधति ॥ नचैकस्यैवेति ॥ नारदोनारकिणःनारायणनामस्मृतिद्वारानरकंशून्यजनंचकारेत्यर्थः । नरकस्यकेषांचिन्नित्यफलप्रदत्वेशून्यत्वरूपानित्य त्वकथनविरोधइतिभावः ॥ यदुक्तमिति ॥ केषांचिदारोहःकेषांचिदवरोहइतिवैषम्योक्तिर्नरकेवैषम्याभावादयुक्तेत्य र्थः ॥ ॐ अपिसप्त ॐ ॥ सप्तप्रभेदमपिस्मरंतीत्यर्थः । ननुसप्तानामपिनित्यफलप्रदत्वेपुनरनित्यत्वोक्तिविरोधइत्यत आह ॥ तत्रुच्चेति ॥ महान्रौरवइतिविशेषणविशेष्यभ्रांतिंनिवारयति ॥ महान्महारौरवइति ॥ ननुरौरवादिपंचे भ्यएवारोहावरोहौनतुतामिस्रांधतामिस्राभ्यांतथाचैतानिक्रमशोगत्वेतिकथंसप्तानांपरामर्शइत्यतआह ॥ एतानिपंचेति ॥ तथाचेतच्छब्देनरौरवादिपंचैवपरामृश्यंते नतुसप्तापीतिभावः । ननुह्येकेनरकानेकविंशतिगणयंत्यष्टाविंशतिनरकाः एवं-

कौबहुनरकोक्तेस्तद्विरोधःसूत्रस्मृत्योरित्यतआह ॥ सप्तप्रधा-
नरकायमप्यत्रशतशःसहस्रशइत्यादिनाभागवतादौ
नानीति ॥ १२ ॥ [illegible]स्थानानीति ॥ निर्दुःखंस्वर्गादिकं सदुःखंभूम्यादिकमित्यर्थः । ननुसंभोगप्राप्तिरितिचे
त [illegible]निस्त्रैगुण्यसार्वज्ञादिसामर्थ्यविशेषवत्त्वेनजीवसहावस्थितावपिनजीवसमानभोगप्राप्तिरित्युक्तत्वात्कथमियंशंके
त्याशंक्यनि[illegible] ॥ नचवैशेष्येति ॥ सार्वज्ञाभावप्रसंगादिति ॥ तथाचसार्वज्ञादिसामर्थ्यवैशेष्ययुक्तिरेवा
सिद्धेतिभावः । [illegible]नासाधून् असाधूनेवारमयतिनसाधूनतःकथंसर्वरमयतिसर्वनरमयतीत्युक्तमित्यत
आह ॥ [illegible]ति ॥ ॐ तत्रापिचतद्व्यापारादविरोधः ॐ ॥ तत्रापिचनरकेपिचदुःखाभोगेनैवतद्व्यापारा
[illegible]दुःखभोगप्रसंगेनवासर्वरमयतीतिश्रुत्यावानविरोधइत्यर्थः ॥ १३ ॥ प्रकृतापि
स्मृयानडुति ॥ [illegible]तैतधूममभिसंभवंतीत्यनेनप्रकृतइत्यर्थः ॥ तत्प्रकृतीति ॥ तत्प्रकरणइ
त्यर्थः । [illegible]प्रपठितत्वादितिभावः । ननुकथमत्रश्रुतौजीवानांगतिस्वातंत्र्यमुच्यतइत्यतआह
॥ नह्यति ॥ [illegible]तिविधिसमुच्चयः पुरुषप्रयत्नाविषयविधिनिषेधयोरभावेनाभिसंभवंतीतिनगच्छंती
त्यर्थविधिनिषेधान्यथानुपपत्त्यानपांथ्यातंत्र्यप्रतीतिरितिभावः । प्रतिपादितंपरेणेत्यादिना । साधनवत् साधनेतदधी
नस्वातंत्र्यवत् सर्वेषांसाधनगं[illegible]समाप्यात्सर्वेषांसाधनप्राप्तेःक्षुद्रशब्दार्थोऽनित्यानीति ॥ ॐ विद्याकर्मणोरि
तितुप्रकृतत्वात् ॐ ॥ अथैनयोरित्येनच्छब्दस्यविद्याकर्मणोरित्येवार्थः कुतः प्रकृतत्वात् तद्यइत्थंविदुःअथमेग्रामाइ
त्यादिनाविद्याकर्मणोरपिप्रकृतत्वादित्यर्थः ॥ तद्यइति ॥ तत्तस्मात्काम्यकर्मणोगमनागमनहेतुत्वात्तत्रविरक्तयइ
त्थंपंचाग्निविद्योक्तीत्याभगवंतंविदुः येचेमेऽरण्येमनोहरप्रदेशेश्रद्धातपइत्युपासते श्रद्धातपःप्रवृत्तिनिवृत्तिकर्मानुतिष्ठंति

तेचविषमचिलोकंतदभिमानिनंवाप्रविशंतीत्यर्थः । किंकारणमितिप्रश्नोत्तरमाह ॥ स्मृतिसमाख्येति ॥ नतुफले विध्यभावेपिसाधनेस्वातंत्र्यंकिंनस्यादित्यतआह ॥ विध्यादीति ॥ तथाचयत्रजीवस्वातंत्र्यानंगीकारेबाधकंतत्रतदं गीकर्तव्यं नत्वन्यत्र ततश्चतत्रसाधनेस्वातंत्र्याभावेविध्यादिशास्त्रवैयर्थ्यंस्यादितितद्वैयर्थ्यापत्त्यायंतत्रेश्वरः स्वातंत्र्यंददा तीतिप्राक्कर्ताशास्त्रार्थवत्वादित्युक्तं । नचैवंफलेस्वातंत्र्यानंगीकारेबाधकमस्तियेनतदंगीकर्तव्यंस्यादितिभावः ॥ १४ ॥ प्रकृतमपिसंक्षेत्यनेनलोकदृष्टिरंधकारेपिविषयभोक्तुः सुखदर्शनं ॥ ॐ नतृतीयेतथोपलब्धेः ॐ ॥ तृतीये तृतीयावाग्गतांधेतमसिनसुखमस्तिकुतः तथोपलब्धेः । अथाविद्वानितिश्रुतौतथादर्शनादित्यर्थः ॥ ॐ स्मर्यतेपि चलोके ॐ ॥ अंधेतमसिनसुखमित्येतत् तिर्यक्षुनरकेचैवेतिस्मर्यतेस्मृत्योच्यते लोकेपिसिद्धमितिशेषः । लौकिकदृष्टां तोपेतयुक्तिसिद्धंचेत्यर्थः । नन्वंधेतमसिसुखराहित्यानुमानेलौकिकदृष्टांतानुपलंभात्कथमित्यतआह ॥ अयमभिसंधि रिति ॥ अयमभिप्रायइत्यर्थः । स्वरूपासिद्धिवारणायाह ॥ नैतादिति ॥ अतिप्रबलामिति ॥ तथाचतमसिसु खसाधकानुमानस्यानेनबाधइतिभावः । ननुस्मृतावीश्वरः स्वाप्रियेसुखंनसहतइयत्राप्रियेसुखंराजायथानसहतेतथैवपरमे श्वरइत्येतावदेववक्तव्यं । अतिप्रियेत्यादिकंतुकिमर्थमुदाहृतमित्यतआह ॥ अनेनैवेति ॥ नैतेसुखित्वेनेश्वरेष्टाइत्यनु मानेनप्रथमार्धेनव्यतिरेकः तृतीयपादेनान्वयोदर्शितइत्यर्थः । दुःखस्यसुखविरुद्धत्वेनदुःखपदस्यसुखाभावपरत्वात्व्यतिरे कित्वंद्रष्टव्यं अतएवास्वरसात्पक्षांतरमाह ॥ सदसज्जनेति ॥ अत्रस्मृतौपूर्वंसदसज्जनानांप्रकृतत्वात् तत्रपरमेश्वरः स ज्जनेषु दुःखंनसहतइत्यत्रातिप्रियेयथाराजेतिदृष्टांतोक्तिरसज्जनेषु सुखंनसहतइत्यत्रात्याप्रियइतिदृष्टांतोक्तिरितिभावः ॥ ॐ दर्शनाच्च ॐ॥ तमसिसुखंनेत्यर्थः।तद्विरिंचिदर्शनरूपप्रत्यक्षाच्चसिद्धमित्यर्थः ॥ ॐ तृतीयेशब्दावरोधः संशो

कजस्य ॐ ॥ तृतीयेतृतीयतमस्यापिविषयसंशोकजस्यातिदुःखजस्यमोहस्य शब्दावरोधः शब्दश्रवणानुसारेणप्राप्तिर्भवती त्यर्थः । ननुतिर्यग्यातनातमइतितमसोऽधोगतिषुतृतीयस्योक्तत्वात्तृतीयतमसइतिकथंभाष्येऽभिहितमित्यतआह ॥ तमो पीति ॥ कथमिति ॥ शोकसाध्यमोहस्यश्रवणमात्रेणप्राप्तिः कथमित्यर्थः। नन्वत्रसूत्रेतिर्यगाद्यधोगतौतमसएवतृतीय तज्ज्ञापकत्वतया[illegible]नुपपन्नः भाष्येसोततृतीयपदंकिमर्थं तृतीयतमःपरत्वेनव्याख्यातमित्यतआह ॥ अधोगतावि ति ॥ [illegible] तृतीयत्वनिमयमसूत्रएवोक्तत्वात् अत्रसूत्रेतज्ज्ञापनार्थंतृतीयग्रहणवैयर्थ्यापत्तेः तृतीयेतिर्यगा [illegible]तमोविशेषस्यग्रहणमित्यर्थः । सूत्रेपुनस्तृतीयग्रहणमेवकुतः यद्वैयर्थ्यायेत्थं व्याख्या[illegible]त्यतआह ॥ [illegible]ति ॥ सम्यग्व्याख्यानइति ॥ शब्दानुसारात्कथनानुसारात् सम्यक्तत्स्वरूप व्याख्यान[illegible]कथनमिदं ॥ ॐ स्मरणाच्च ॐ ॥ तृतीयतमसः स्वरूपश्रवणेऽनिर्मूलत्वेनस्यचशब्दा [illegible]दिनाम्स्मरणादित्यर्थः ॥ १५ ॥ धूमादिभावेति ॥ धूमादिदेवतैक्यतत्पदप्रा [illegible] । [illegible] अवरुद्धाः उक्तंयथैतमनेवंचेत्यनेन प्रकारांतरं साद्दश्यादि ॥ शब्दस्यानेकत्वा [illegible] आद्यपक्षद्वयमनीतिः सएवधूमाभूत्वेतितद्धूमंतगोभूत्वेतिवाप्रतीतेः गौण्याद्यमुख्य [illegible] ॥ सामानाधिकरण्येति ॥ कर्मीधूमोभूत्वेत्युपायाइत्यर्थः । उक्तरीत्याशब्दस्या [illegible]विरोधः श्रौतसामानाधिकरण्यविरोधः । अन्यार्थत्वंसादृश्यादिरूपं ॥ ॐ तत्स्वा भाव्यापत्तिरुपपत्तेः ॐ ॥ कर्मिणस्तत्स्वाभाव्यापत्तिः तस्यधूमादेःस्वभावइवस्वभावोयस्यसतत्स्वभावः तस्यभाव स्तत्स्वाभाव्यं धूमादितद्वनास्वभावसदृशस्वभावत्वस्याप्तिःप्राप्तिः नत्वैक्यादेः कुतः उपपत्तेः अर्थांतरानुपपत्त्यास्यैवार्थ

स्योपपत्तेरित्यर्थः ॥ सादृश्येचेति ॥ तत्त्वमसीत्यादावित्यर्थः । आदिशब्दार्थमाह ॥ स्थानैक्येति ॥ तथाप्र
योगेति ॥ परेऽव्ययेसर्वएकीभवंतीत्यादावित्यर्थः ॥ कुतोर्थइति ॥ श्रुतेरयमेवार्थःकुतःस्यादित्यर्थः । समवाये संमे
लने ॥ १६ ॥ पांथइति ॥ मार्गजनत्यर्थः ॥ मध्येमार्गमिति ॥ मार्गस्यमध्यइति ॥ पारेमध्ये षष्ठ्यावास
मस्यतेसोऽव्ययीभावः । पारेगंगायाः पारेगंगंमध्यंगंगायामध्येगंगमित्युदाहरणं । ननुभाष्येसदाप्येतस्यादित्युक्तत्वाक्
ल्पांतमितिकिमर्थमुक्तमित्यतआह ॥ कल्पावसानइति ॥ तथाचयावद्देवतापदंतावद्देवत्स्वाभाव्यापत्तिर्निमित्ततुल्य
मितिनसर्वदेत्युक्तमितिभावः ॥ ॐनातिचिरेणविशेषात्ॐ ॥ गर्भादिप्राप्तिरातिचिरेणातिबहुकालेनभवति किंत
चिरेणैव कुतः विशेषात् तद्यइहेतिविशेषश्रवणादित्यर्थः ॥ आगमनस्यैवेति ॥ नतुबहुस्थानगमनस्यापीत्येवकारा
र्थः । पर्यटन्यत्रतत्रचेतिबहुस्थानगमनपूर्वकमचिरेणैवगमनस्योक्तेरितिभावः ॥ आपेक्षिकेति ॥ तस्योत्तरकल्पापेक्षयेत्य
र्थः ॥ इष्टत्वविरोधइति ॥ तत्रतत्रेत्युक्तरीत्येत्यर्थः ॥ कारणेति ॥ अदृष्टविशेषेत्यर्थः । इष्टत्वस्यैवप्रयोजकत्वं
नकारणस्येत्यंगीकारेऽतिप्रसंगमाह ॥ अन्यथेति ॥ दुःखाभावस्यसर्वेषामिष्टत्वादितिभावः ॥ १७ ॥ व्रीह्यादि
भावः व्रीह्यादिशरीरकत्वेनभवनं ॥ सुखसाधनतयेति ॥ स्वर्गादिसुखसाधनंयज्ञादिकर्मेतिश्रुतिविहितयज्ञादिकर्मकु
र्वतामित्यर्थः । तच्छंका दुःखसाधनशंका । श्रुतिविहितत्वादविशेषादितिभावः ॥ पुरुषार्थत्वामिति ॥ तत्रापिदुः
खसत्वेपुरुषैरर्थ्यत्वंनस्यादितिभावः । व्याख्येया तत्प्रवेशादिमात्रार्थत्वेन ॥ तद्वदिति ॥ कर्मिणाधूमादिदेवतैक्येऽ
न्यस्यान्यभावयोग्यतालक्षणस्यबाधकस्यसत्वात्साश्रुतिप्रवेशादिमात्रार्थत्वेनव्याख्यातुंशक्यते । इहतुकर्मिणोनव्रीह्यादि
जीवैक्यंश्रुत्यर्थः । किंतुतेषामेवव्रीह्यादिशरीरकत्वेनभवनरूपोव्रीह्यादिभावः । नचतत्रबाधकमस्ति । अतोनेयंश्रुतिस्तद्वा

रूयेयेतिभावः । ईश्वरव्यभिचारान्नायंनियमइत्यतआह ॥ **नहीति** ॥ तथाचौत्सर्गिकोयंनियमइतिभावः । नन्वस्त्वेव मागमेनदुःखंतस्यापिवैराग्यहेतुत्वादित्यतआह ॥ **तच्चदुःखमिति** ॥ **प्रतिपादितत्वादिति** ॥ **चरणादित्यत्रेति** शेषः ॥ **इतिशब्दइति** ॥ इतिजायंतइतिश्रुतौइतिशब्दःप्रियंग्वाद्युपलक्षकइत्यर्थः ॥ ॐ **अन्याधिष्ठितेपूर्ववद भिलापात्** ॐ ॥ व्रीह्याद्यादिभावोनामान्येनजीवेनाधिष्ठितेऽभिमानित्वेनाश्रितेव्रीह्यादिदेहेप्रवेशएव नतुतदभिमानि त्वं कथंपूर्ववत् । धूमोभूत्वेत्यादिपूर्वोक्तवत् कुतः अभिलापात् । सोवाग्गतःस्थावरान्प्रविश्येतितथोक्तत्वादित्यर्थः । तत्रैव व्रीह्यादिभावएव ॥ **अनवसरप्राप्तत्वादिति** ॥ कारणाभावेनतस्मिन्कालेप्राप्तत्वादित्यर्थः । सामानाधिक रण्यंकार्मिणोव्रीह्यादयोजायंतइत्यादि ॥ ॐ **अशुद्धमितिचेन्नशब्दात्** ॐ ॥ पशुहिंसारूपत्वात्यज्ञादिकमशुद्धंपाप साधनमितिचेन्न शब्दविहितत्वादित्यर्थः ॥ **अन्यतरप्रकारेणेति** ॥ व्रीह्यादिभावसहभावयोरन्यतरप्रकारेणेत्य र्थः ॥ **वायव्यमिति** ॥ ऐश्वर्यकामोवायव्यंवायुर्देवताकंश्वेतवर्णपशुंवस्तापरपर्यायमजमालभेतहन्यादित्यर्थः ॥ **सो पाधिकत्वेनेति** ॥ किंनामनिषिध्यत्वमेवेत्यनेनपापसाधनत्वरूपसाध्यव्यापकत्वस्यनतद्याज्ञीयपशुहिंसायामस्तीत्यनेन हिंसात्वरूपसाधनव्यापकत्वस्यचोक्तत्वादितिभावः ॥ १८ ॥ **नातिविरक्तिरिति** ॥ आयासाभावादितिभावः ॥ **वचनादिति** ॥ तत्रैवकारणान्यप्रवेशनिषेधादितिभावः । सिद्धत्वान्नविलक्षणत्वाधिकरणे कथमित्यनुवादः ॥ **किमर्थेति** ॥ कोर्थोयस्याःसाकिमर्थाकीदृशार्थवतीत्यर्थः । ॐ **रेतःसिग्योगोथ** ॐ ॥ कार्मिणः आदौरेतःसि ग्योगःरेतःसिंचतीतिरेतःसिक्पितातस्ययोगःसंबंधोभवति । अथतस्मादनंतरंमातृयोगोभवतीत्यर्थः ॥ **प्रवेशमात्र स्येति** ॥ पितुरुपयोगमंगीकृत्यनतत्प्रवेशमात्रस्यवैय्यर्थ्यमुच्यतइत्यर्थः ॥ **शरीरपरिणामायेति** ॥ अनेनश्रुतिसूत्र

यो:पितृग्रहणमकृत्वारेत:सिग्रहणेप्रयोजनमुक्तमितिध्येयं ॥ **अयोगव्यावार्त्तकइति** ॥ तथाचचन्द्रजेदेवेत्यन्वयइतिभाव: ॥ १९ ॥ **योनिप्रवेशास्नावादिति** ॥ पितृप्रवेशोप्ययुक्तइतिवक्ष्यमाणापेक्षयातावाच्छब्द: । तास्मिन्निितिविपर्ययएवेत्यर्थ: । मांधातृमुखानांपितृदेहादेवोत्पत्तिदर्शनादितिभाव: ॥ **बाहिरिति** ॥ देहाद्बहिरित्यर्थ: द्रुपदादिनांतथादर्शनादित्यर्थ: । ननूत्पत्त्यसंभवादित्यत्रस्त्रीमात्रादुत्पत्तेर्निषिद्धत्वात्कथंममदायामित्युक्तमित्यत आह ॥ **जरत्काविति** ॥ तत्स्पर्शएवानुग्रहइतिभाव: ॥ **संस्पर्शइति** ॥ जरत्कारुनामिकायांयोषितिजरत्कारोपुंस:सकाशादास्तिकस्ययोनिप्रवेशंविनैवमातृशरीरप्रवेशेन जन्मादिदर्शनादितिभाव: ॥ **इंशक्लृप्तीति** ॥ इंशक्लृप्त्यैवपितरंप्रविशत्यथमातरमितिवचनविरोधादित्यर्थ: ॥ **वैपरीत्यस्येति** ॥ अस्याप्यर्थेदेहंगर्भस्थितामितिप्रमाणसिद्धत्वेनेशक्लृप्तिमूलत्वात्तस्यैवेतद्विरोधोपिवक्तुंशक्यतइत्यर्थ: । अन्यतइत्यस्यैवविवरणमन्नादेरेति मातृभुक्तान्नादिद्वारेत्यर्थ: । शरीरपरिणामायरेतसोपेक्षितत्वेनपितृप्रवेशआवश्यकइत्यत आह ॥ **मातृस्थेति** ॥ **शरीरप्राप्तिरपीति** ॥ रेत:कलिलबुद्बुदाद्यवस्थाविशिष्टदेहसंबंधइत्यर्थ: ॥ **पूर्वासिद्धेरिति** ॥ स्वप्रवेशात्पूर्वमेवोक्तक्रमेणपरिणतेत्यर्थ: । उक्तत्वाद्देहंगर्भस्थितंक्वापीत्यनेनैवविकल्पेबीजमाह ॥ **क्वापीति** ॥ ॐ **योने:शरीरं** ॐ ॥ कर्मीयोने: प्रवेशानंतरंशरीरंलभतइत्यर्थ: । तत:पितुस्तत्रैव मातृदेहे विशेषकारणं तपोवरादि ॥ **केचिदिति** ॥ मध्वाचार्यइत्यर्थ: । संपूर्णलक्षणचणंनवराजमानद्वारांतरंपरमसुंदरमंदिरंतत् । राजेवसत्पुरवरंभुवनाधिराजोनिष्कासयन्परमसौभगवान्विवेशइतिमध्वविजयोक्ते: ॥ **पितृसापेक्षइति** ॥ अप्सरादेर्दर्शनेनावस्कंदितपृषतरेतोमर्दनजन्यत्वादितिभाव: । **स्थानांतरेकुंडादौ** ॥ **निरपेक्षाइति**॥याजोपयाजप्रभावेनरेतोनिरपेक्षेणजन्यत्वादितिभाव: । तदेवस्थानांतरइत्येतदेव॥**अन्योन्यइति**॥मयुरप्रभृतीनामिदमित्याहु: ॥ २० ॥ **इतिश्रीमत्तत्वप्रकाशिकाव्याख्यायांवाक्यार्थमंजर्यांतृतीयाध्यायस्यप्रथम:पाद:**

॥ श्रीगुरुभ्योनमः ॥ अवसरप्राप्तेति ॥ उक्तरीत्योभयनिरूपणमध्यकालएवनिरूपणीयत्वेनप्रसक्तेत्यर्थः ॥ अभावादिति ॥ लक्षणप्रमाणादिनातत्स्वरूपनिरूपणाभावादित्यर्थः । भगवन्महिमोक्तौकथंभक्त्युत्पत्तिरित्यतआह ॥ माहात्म्येति ॥ स्नेहोवेति ॥ माहात्म्यज्ञानपूर्वकार्थत्वात्स्नेहस्येतिभावः । तर्हिकथंभक्तिरित्युच्यतइत्युक्तमित्यतआह ॥ एवंज्ञानसाधनेति ॥ साधनीभूतज्ञानविषयवचनस्यापीत्यर्थः । क्वचित् शत्रौ तथाचान्वयव्यतिरेकव्यभिचारान्नमाहात्म्यज्ञानस्यस्नेहाख्यभक्तिहेतुत्वमितिभावः । कारणांतरेण स्ववीर्यजातत्वादिना तथाचप्रमितान्नेककारणके व्यतिरेकव्यभिचारोनदोषइतिभावः । एतदेवाह ॥ नहीति ॥ मत्सरादिनिरुद्धेति ॥ तथाचसतिप्रतिबंधेऽन्यस्यव्यभिचारोनदोषइतिभावः । इदमेवाह ॥ नहीति ॥ क्वचिद्विविच्योच्यतइति ॥ संध्येसृष्टिराहहीत्यादौजन्मादिसूत्रोक्तसृष्ट्याद्यष्टककर्तृत्वादिमाहात्म्यविवेचनादितिभावः ॥ क्वचित्समर्थ्यतइति ॥ नस्थानतोपीत्यादिनानंदमयादिसूत्रोक्तस्वरूपाभेदादिमाहात्म्यसमर्थनादितिभावः ॥ स्वाप्नविपर्ययेति ॥ स्वप्नावस्थास्थितगजादीत्यर्थः । स्वप्नेतिपाठेप्ययमेवार्थः । एवमग्रेपि । विप्रतिपत्तिः वादिनां । कुतइत्यतसत्वेबाधकसद्भावादित्याशयेनाह ॥ सत्वेचवक्तव्यमित्यादिना ॥ पूर्वोत्तरकालाभिति ॥ स्वप्नदर्शनादिविशेषः ॥ प्रातीतिकत्वादिति ॥ प्रतीतिमात्रशरीरकत्वादित्यर्थः ॥ प्रतीतिकालएवेति ॥ तात्कालिकविद्युदादिवदितिभावः । निरोधोनाशः ॥ अयोगादिति ॥ व्यवहितत्वादितिभावः । पश्यतःसतः ॥ पश्चादिति ॥ प्रबोधानंतरंपरावृत्त्यगमनेनेत्यर्थः । इंद्रियेति ॥ बाह्येंद्रियव्यापाराभावादित्यर्थः । सत्यत्वेबाधकांतरमाह ॥ यदिचेति ॥ ततःद्रष्टुःसकाशात् । कुतइत्यतआह ॥ परमार्थतोस्त्वेति ॥ द्रष्टुरित्यर्थः ॥ मरुमरीचिकाजलेति ॥ मरुदेशस्थसूर्यकिरणारोपितजलइत्यर्थः । मृगतृष्णामरीचिकेतिनामांतरं

॥ ॐ संध्येसृष्टिराहहि ॐ ॥ संध्येस्वप्नेपदार्थानांसृष्टिर्भवति कुतः हियस्मादथरथानितिश्रुतिस्तथाहेत्यर्थः । अ
दृष्टेः अदृष्टत्वान्निमित्तात् । सृष्टिरितिभगवदभिजातातात्कालिकेतिशेषः । अदर्शनाल्लोके ॥ ॐ निर्मातारंचैकेपु
त्रादयश्च ॐ ॥ यएषुसुप्तेष्विन्त्यकेशाखिनःपरमात्मानंस्वाप्नपदार्थानांनिर्मातारंकर्तारमाहुः । एकेशाखिनःस्वाप्नपुत्रादयश्चत
स्मादेवजायंतइत्याहुरित्यर्थः ॥ अनएवेति ॥ जीवःसुप्तिकालेजागरणादिनात्वगतैश्वर्यादेवेत्यर्थः । एके मायिनः ।
तर्हिसएवकर्तास्त्वित्यतआह ॥ जीवस्येति ॥ अयोगादिति ॥ तदानींतथाननुभवादितिभावः । कल्पकत्वं आरो
पकत्वं शुक्रं शुद्धं । ननुयएषुसुप्तेष्वित्यादिनाजीवमनूद्यतदेवेत्यादिनातस्यब्रह्माभेदउच्यते अतोयच्छब्दवाच्योजीवएवेतितस्यै
वकर्तृत्वमित्याशंक्यनिराकरोति ॥ नचेति ॥ दूषितत्वात् पृथगुपदेशादित्यादौ । अंतरंगानुपपत्तिंचाह ॥ तस्मि-
न्निति ॥ तदेवेत्यनेनोक्तब्रह्मणोलोकाधारकत्वेन विशिष्टब्रह्मत्वाद्विशिष्टेनच ब्रह्मणाविरुद्धधर्माधिकरणस्यजीवस्यै
क्यानंगीकारादितिभावः । ननुविशिष्टांशत्यागेनचिन्मात्रलक्षणैक्योक्तिरियमस्त्वित्यतआह ॥ लक्षणाचेति ॥ गत्यं
तराभावेहिलक्षणासंगतिः अत्रतुभेदेनमुख्यार्थसंभवान्नगत्यंतराभावइतिभावः ॥ प्रकरणप्राप्तत्वादिति ॥ यथाभुंजा
नइतिभोजनप्रकरणाद्वागुत्सर्जनाभावस्य भोजनसमानकालीनत्वलाभस्तथेहापिसुप्तेतिसुप्तेष्वितिसुप्तप्रकरणान्निर्माणस्यस्वा-
प्नसमानकालीनत्वलाभेनस्वाप्नपदार्थनिर्मातृत्वस्यैवप्राप्तत्वादित्यर्थः ॥ ॐ मायामात्रंतुकार्त्स्न्येनानभिव्यक्तस्व
रूपत्वात् ॐ ॥ स्वाप्नपदार्थजातंमायामात्रंतु मायाभ्यांसंस्कारेच्छाभ्यां मात्रंतु निर्मितमेव नान्यनिर्मितं कुतः कार्त्स्न्ये
नसाकल्येनानभिव्यक्तस्वरूपत्वात् बाह्यार्थक्रियासामर्थ्यरहितत्वादितियावत्॥ अनादिमनोग्रहणमिति ॥तथाचैतेषा
मेतज्जन्मन्यननुभूतत्वेपि अनादौसंसारेजन्मांतरेतदनुभवसंभवेसंस्कारोत्पत्त्युपपत्तेरितिभावः । कारणमुपादानं नित्यत्वे

दोषांतरमाह ॥ **द्वितीयइति** ॥ स्वाप्नविषयस्यानादिनित्यत्वमाशंक्यप्रागूर्ध्वमनुपलब्धिरूपायापिशाचीत्वयामोचिता सेदानींतन्नित्यत्वमंगीकुर्वाणंत्वांप्रत्येवाभिधावतीत्यर्थः ॥ **अनेनेति** ॥ व्यावर्त्यकथनेनेत्यर्थः ॥ **सम्यगभिव्यज्ये रन्निति** ॥ जलाहरणादिबाह्यार्थक्रियासमास्युरित्यर्थः ॥ **एतेनेति** ॥ किंचस्वाप्नेत्यादिनोक्तादोषाःसंस्कारोपादानक त्वाभ्युपगमेनैवनिरस्ताइत्यर्थः । तेषांकंठशोषणमात्रहेतुत्वंनत्वस्सत्पराजयइत्याशयेनोक्तं ॥ **कंठकोलाहलइति** ॥ नचातींद्रियसंस्कारोपादानकत्वान्नेंद्रियग्राह्यत्वमितिवाच्यं । अतींद्रियद्व्यणुकोपादानकत्र्यणुकस्येंद्रियत्ववदुपपत्तेरितिभावः ॥ **जाग्रत्पदार्थत्वमिति** ॥ जाग्रत्पदार्थाभेदइत्यर्थः ॥ ॐ **सूचकश्चहिश्रुतेराचक्षतेचतद्विदः** ॐ ॥ स्वाप्नविषय शुभाशुभयोःसूचकः ज्ञापकश्च यस्मात्तस्मान्नासत् कुतः यदाकर्मेतिश्रुतेः तद्विदःस्वाप्नपदार्थज्ञास्तथाकथयंतिचेत्यर्थः । शाकुनंकन्यादिकं अशुभलक्षणाभावसूचकांश्रुतिंस्वयमुदाहरति ॥ **एवमिति** ॥ स्वप्ने एतादृशंपुरुषंपश्यतितदासपुरुष एनंहंतिहननसूचकोभवतीत्यर्थः ॥ **हनिसूचितमितीति** ॥ तथाचनकेवलंशुभादिसूचकत्वंश्रुतिसिद्धंकिंतुदर्शनाच्चप्रत्य क्षादपिसिद्धमित्यर्थइतिभावः ॥ **भ्रांतार्थस्येति** ॥ आदित्याद्यारोपितचंद्रादेरित्यर्थः । अस्यशिरोवायातिसंपरेतोस्या त्मनचिरमिवजीविष्यतीतिविद्यादितिवाक्यशेषेणमरणादिसूचकत्वोक्तेरितिभावः ॥ **अन्यथाज्ञातस्येति** ॥ चंद्रत्वा दिनाज्ञातस्यादित्यादेरित्यर्थः ।इदंचादित्योदृश्यतइतिअधिष्ठानप्राधान्योक्त्यनुसारेणोक्तंवस्तुतस्त्वधिष्ठानस्यान्यनत्वाज्ञा नमेवसूचकं । सर्पभ्रमादावपिहिज्ञानमस्त्येवतादृशं तदेवार्थक्रियाकारीतत्सदेवार्थकारकमितित्यनुव्याख्यानोक्तेरितिध्येयं उक्तिः अधिष्ठानस्य ननुविद्यमानस्याप्यधिष्ठानस्यानुक्तिःसंभवतीत्यतआह ॥ **नचेति** ॥ **पृथगिति** ॥ नहिशुक्तिकाश कलंरजतात्पृथक्प्रतीयतइत्यर्थः ॥ १ ॥ **विशेषानुक्तिरिति** ॥ स्वाप्ननाशईशाधीनइतिविशिष्यानुक्तिरित्यर्थः

॥ **समानविषयेति** ॥ सोयंयदवयवउत्पद्यतेतद्विषयेत्यर्थः ॥ ॐ **पराभिध्यानात्तुतिरोहितंततोह्यस्यबंधवि पर्ययौ** ॐ ॥ परस्यपरमात्मनोभिध्यानादिच्छायाःसकाशादेवसंध्यंतिरोहितंनस्याति कुतः हियस्मादस्यजीवस्यबंधविप र्ययौसंसारमोक्षौतनइश्वरादेवभवतस्तस्मादेवेत्यर्थः ॥ **सुप्रसिद्धइति** ॥ अनेनहिशब्दःप्रसिद्धसेनापिव्याख्यातः ॥ **दृष्टांतमात्रमिति** ॥ प्रतिदृष्टांतरस्यापिसंभवेनतन्मात्रस्यासाधकत्वादितिभावः ॥ २ ॥ **संगतेति** ॥ जाग्रदवस्था याःस्वप्नतिरोभावनिमित्तत्वेनन्निरूपणे एतत्स्मरणादितिभावः । कालःप्रातरादिः भ्रांतं भ्रांतिः ॥ ॐ **देहयोगाद्वा सोपि** ॐ ॥ जीवस्यदेहयोगाद्देहाभिमानेनवासस्थितिरूपजाग्रदपिपरमात्मेच्छातएवेत्यर्थः । देहयोग्यस्यसुप्त्यादिसाधार ण्यादाह ॥ **देहाभिमानेति** ॥ बाह्यदेहाभिमानेत्यर्थः ॥ **स्वप्नेति** ॥ वासनामयदेहाभिमानसत्वात् ॥ ३ ॥ ननु स्वप्नजाग्रत्सुप्तेः भगवदधीनत्वंकुतोनविचार्यतइत्यतआह ॥ **भगवदधीनत्वइति** ॥ **सतेति** ॥ हेसौम्य तदासुप्तोजीवः सताभगवतासंपन्नःप्राप्तस्तेनांतःप्रवेशितोभवतीत्यर्थः ॥ **यत्रेति** ॥ यत्रयदाएतत्सुप्तः एषसुप्तः समस्तउपरतेंद्रियवृत्तिः संप्रसन्नःसम्यक्प्रसीदति सुखमनुभवतीतिप्रसन्नोजीवः स्वप्नंनविजानाति तदा आसुनाडीषुसुप्तोभवतीत्यर्थः । इष्टाप त्तिमाशंक्यपरिहरति ॥ **नचमुक्तवदिति** ॥ व्यतिरेकदृष्टांतोयं ॥ **किमपराद्धंसुखेनेति** ॥ सज्जीवानांकिंचिदभि व्यक्तस्यस्वरूपसुखस्यान्येषांपरमात्मसंबंधलक्षणनिमित्तोत्पन्नसुखस्यचानुभवसंभवादितिभावः । यथोक्तंषट्प्रश्नभाष्य टीकायां । यस्मात्परमेश्वरतेजसाभिभूतोभवत्यतस्तस्मात्तत्सन्निधानसामर्थ्योद्भूतंयत्सुखंतदास्मिन्शरीरेभवतीति । यथासु प्तौसर्वेंद्रियाणामुपरतत्वोक्तिनिमित्तंसुखंकेनवाजीवोनुभवतीत्यभिप्रायेणपृष्टेपरमेश्वरसन्निधानेनोद्भूतं सुखमात्मस्वरूपज्ञा नेनानुभवतीतिपरिहारोभिप्रेतइति । अत्रोद्भूतइत्यनेनयोग्यानांस्वरूपसुखाभिव्यक्तिरन्येषांपरमात्मनिमित्तजन्यंसुखमुच्यत

इतिसंप्रदायविदइतिभावबोधेस्फुटं॥ नस्मर्यतइति ॥ ततोनतदनुभवाभ्युपगमइतिभावः। किमत्रदुःखाभावानुमानंदेवदत्ती यसुप्त्यवस्था देवदत्तसमवेतदुःखोपेतानभवति तत्कारणशून्यत्वादितिवा। सुप्त्यवस्थाविशिष्टोदेवदत्तः नदुःखसमवायी तत्कारणरहितत्वादितिवेतिविकल्पंमनसिनिधायाग्रेदोषमाह ॥ पक्षभूतेति ॥ दुःखाभावानुमानवादिनासुप्तिकालेसुप्त्यवस्थायामनुभवानंगीकारान्नोत्तरकालंतत्स्मरणं तदनुभवांगीकारेचदुःखाभावस्याप्यनुभवसंभवेनतत्स्मरणापलापायोगादितिभावः। द्वितीयंदूषयति ॥ आत्मेति ॥ नचदेवदत्तमात्रपक्षीकारइतिवाच्यं तथात्वेजाग्रदवस्थाविशिष्टस्यदेवदत्तस्यसुखसमवेतत्वेनतदभावसाधनेबाधकप्रसंगात् सौषुप्तिकदुःखाभावसिध्यर्थांतरत्वाच्चेतिभावः॥ ॐ तदभावोनाडीषुतच्छ्रुतेरात्मनिच ॐ॥ जीवस्यतदभावः तयोः जाग्रत्स्वप्नयोरभावः सुप्तिःनाडीष्वात्मनिनाडीस्थपरमात्मनि भवति कुतः तच्छ्रुतेः तस्यनाडीस्थत्वस्यचासुतदैनिसतासोम्यैतिचश्रुत्युक्तत्वादित्यर्थः। श्रुतिद्वयानुसारेणकदाचिन्नाडीषुकचिदात्मनीत्यवस्थां वाऽस्त्वितिमुक्तव्यवस्थेत्यत आह ॥ एवंचेति ॥ सर्वत्र आकाशानादित्वसादित्वादौ ॥ ४ ॥ ॐ अतःप्रबोधोस्मात् ॐ॥ सुप्तजीवस्यप्रबोधोऽस्मात्परमात्मनएवभवति कुतः अतः जीवस्यपरमात्मन्येवसुप्तत्वादित्यर्थः। ननुजीवस्यतस्मिन्नेवसुप्तत्वेपिसुप्तप्रबोधस्यैश्वर्याधीनत्वंकुतइत्यत आह॥ नहीति॥ ५॥ स्वंडेशत्वेति॥ किंचिद्देशकालीनेशत्वेत्यर्थः॥ अनिप्रसंगादिति॥ लोकविलक्षणानिष्टधर्मस्यांगीकारप्रसंगादित्यर्थः। लोकविलक्षणयुगपदणुत्वमहत्वादिवत्किंनस्यादित्यत आह ॥ नचात्रेति ॥ अणोरणीयान्महिनोमहीयानित्यादिश्रुतिः प्रमाणमितिभावः॥ ॐ सएवचकर्मानुस्मृतिशब्दविधिभ्यः ॐ ॥ सर्वावस्थाप्रवर्तकः सएवपरमात्मैव नान्यः कुतः कर्मानुस्मृतिशब्दविधिभ्यः एषह्येवैनंसाधुकर्मकारयतीतिसर्वकर्मणामीशाधीनत्वोक्तेः मदशकस्त्वित्यनुकूलस्मृतेः एषस्वप्नान्दर्शयतीतिशब्दात् आत्मानमेवेत्युपा

सनाविशिष्टेत्यर्थः । नन्वीशांतरसत्त्वेप्येषः स्वमान्दर्शयतीतिश्रुतेःसावकाशत्वात्कथंविवक्षितार्थसाधकत्वमित्यतआह ॥ अवधारणान्यथेति ॥ एषएवपरमानंदइतिश्रुतस्यावधारणस्यएषस्वमान्दर्शयत्येषप्रबोधयतीत्यत्राप्यन्वयेनाविवक्षितार्थस्यभगवतएवस्वप्नादिप्रेरकत्वस्यासिद्धेरित्यर्थः । ननुपरमात्मनएवोपास्यत्वविधानेप्यवस्थानांभगवदधीनत्वंकुतइत्यतआह ॥ अन्यस्यापीति ॥ अन्यस्याप्यवस्थाप्रेरकत्वेतस्याप्युत्तमत्वेनोपास्यत्वप्राप्त्या आत्मानमेवेत्यवधारणंनोपपद्यतइतिभावः । ननुमात्रशब्दःकिमर्थः समुच्चयार्थस्यावधारणविरुद्धत्वादित्यतआह ॥ चशब्दइति ॥ ईशांतरकल्पनारूपभ्रांतेरित्यर्थः । किमिदंस्मृतेरनुसारित्वमित्यतआह ॥स्फुटमिति॥ ६ ॥ अवांतरावस्था मूर्छा ॥ द्विविधेति ॥ द्विरूपेणतदन्यत्वभावित्वमुक्तमित्याग्रदवस्थादर्शनमित्यर्थः ॥ जाग्रस्वप्नयोरिति ॥ मोहस्यजाग्रत्स्वप्नयोः सकाशात्पृथगवस्थात्वादितिभावः नन्वस्यापिमोहोभगवदन्यत्रकिंनस्यादित्यतआह ॥ अन्यथेति ॥ जाग्रत्स्वप्नयोःपरमात्मनःसकाशात्पृथगन्यत्वभागव्यवस्थानान्मोहस्यापितथात्वांगीकारेतदुभयसांकर्यस्यादित्यर्थः । एतदर्थमुक्तंजाग्रत्स्वप्नयोः पृथगवस्थात्वादिति परमात्मनइतिशेषः । नचेष्टापत्तिः तयोःपरस्परंपृथगवस्थात्वेनैकस्यमोहस्यैवसांकर्यायोगादितिभावः । एतदर्थमप्युक्तंजाग्रत्स्वप्नयोःपृथगवस्थात्वादिति परस्परमितिशेषः ॥ नचैवमिति ॥ मोहस्यभगवत्प्रवेशावस्थात्वांगीकारेसुषुप्तेरपितथात्वेनतत्सांकर्यप्रसंगइत्यर्थः ॥ समानधर्मतयेति ॥ परमात्मप्रवेशार्थत्वेनमनआदिसर्वेंद्रियोपरमत्वेनचसमानधर्मत्वेनचेत्यर्थः ॥ गुणत्वादिति ॥ सुप्तेरप्यनेकत्वेनतत्सांकर्यप्रागुक्तदोषाभावादितिभावः ॥ ॐ मुग्धेर्धसंपत्तिःपरिशेषात् ॐ ॥ भावक्तः मुग्धेमोहे अर्धसंपत्तिः जीवस्यपरमात्मन्यर्धप्रवेशः कुतःपरिशेषात् हृदयस्थापेक्षयादूरत्वसामीप्यप्रवेशार्धप्रवेशानांमध्ये आद्यत्रिकस्यासंभवेनार्धप्रवेशस्यपरिशिष्टत्वादित्यर्थः व्याख्यातुं स्मृ-

त्यैवधर्मत्वात् तेषामेतत्परिशेषेणार्थप्रवेशज्ञानं ॥ **दुःखात्मकालेति** ॥ एतावंतंकालमहंदुःखमनुभवामीतित्युत्तरकाली
नपरामर्शादितिभावः । ननुहृदयकंठमध्यप्रवेशावस्थानरूपमोहस्यपृथगवस्थात्वेदक्षिणाक्षिकंठमध्यप्रवेशावस्थानस्यापिपृ-
॥ ११ ॥ थगवस्थात्वंप्रसज्जेत अविशेषादित्यतआह ॥ **नातिदूरसामीप्यामिति** ॥ दाक्षिणाक्षिकंठमध्यप्रदेशस्यहृदयस्थाना
द्दाक्षिणाक्षिवदतिदूरत्वंकंठवदतिसामीप्यंवानास्तीतिमार्गतयातत्प्रदेशगतजीवस्ययन्नातिदूरंसामीप्यंतज्जीवस्यमोहवच्चिरकालं
नास्तीतिहेतोस्तस्यपृथगवस्थानस्याप्रसंगइतिभावः । एतद्दुःखमात्रेत्यादि तदेवाह ॥ **नमोहइति** ॥ **अन्यार्थेति** ॥
आत्मकालदुःखातिरिक्तेत्यर्थः ॥ **दक्षिणाक्षीति** ॥ विश्वस्यदक्षिणनयनाग्रवृत्तित्वेनतैजसस्यकंठाधोभागस्थमनोवृत्ति
त्वेनतदुभयसामीप्यंदक्षिणाक्षिस्थस्याप्यस्तीतिकथमक्षिस्थोदूरस्थइत्यर्थः । अवस्थाशब्दस्यस्त्रीलिंगत्वात्कथंत्रयइतिपुल्लिंगप्र
योगइत्यतआह ॥ **त्रयस्तिस्रइति** ॥ कारणांतरादर्शनेनविवादाभावान्नतचिंत्यतइत्यतआह ॥ **मोहकारणानामि-**
**ति** ॥ ताडनादीनामित्यर्थः ॥ **कर्मानुस्मृतीति** ॥ एषह्येवसाधुकर्मकारयतीतिसर्वकर्मणांभगवदधीनत्वोक्त्यामो-
हस्यापिकर्मत्वेनभगवदधीनत्वंसिद्ध्यं अनुस्मृतिश्चवक्ष्यमाणा आदिशब्देनशब्दविधिग्रहणं ॥ **अतएवेति** ॥ स्मृतौभगव
तोमृच्छातत्प्रवाचप्रवर्तकतयाज्ञेयत्वोक्तेरेवेत्यर्थः । सार्थक्यमेवेत्यतआह ॥ **अनिश्चितेति** ॥ नन्ववस्थितिवैशेष्यादितिचे
त्ता भ्युपगमान्धृदिह्येनिमंत्रणहृदिह्येष आत्मेतिश्रुत्याचजीवस्यहृदयदेशएवसर्वदाऽवस्थानाभ्युपगमात्कथमक्ष्यादिस्थत्वमुच्य-
तइतिचेन्मैवं उत्तमानांमंशेनाक्ष्यादिस्थत्वविरोधाभावादन्येषामक्ष्यादिष्वभिमानातिशयेनाक्षिस्थइत्युक्त्युपपत्तेः ॥ **उक्तं**
**चैतरेयभाष्ये** ॥ नहिजीवस्याक्षिणीपृथक्शिरोबाह्वादिकंविद्यते त्वदादिस्थमेवाहितस्यरूपंजागरितेप्यक्ष्यादिषुविशेषस ॥ ११ ॥
न्निहितंभवतिदीपप्रकाशवदिति ॥ **उक्तंचब्रह्मभाष्ये** ॥ हृदयेसंस्थितोजीवोविशेषेणहरिस्तथा । चक्षुरादिषुरूपाणि

जाग्रत्कालेतयोःसदा ॥ बहूनिसंस्थितान्येवयदैकीभावमाप्नुयुः ॥ हृदयस्थेनरूपेणतदाजीवोनकिंचन ॥ जानातीतिविदुःप्राज्ञाइति उक्तंचावस्थितिसूत्रभाष्यएव । असम्यक्सम्यगितिचह्यवस्थाभेदतःसुराः । व्याप्त्यव्याप्तियुवाइति ॥ ७ ॥ सर्वत्रसर्वरूपेषु स्ववचनात्सम्मतात्पर्येति ॥ स्वगतेति ॥ स्वरूपस्थेत्यर्थः तथात्वेनुग्राह्यानुग्राहकभावप्राप्तेरित्यर्थः । घटादीनामनेकस्थानस्थितानांभिन्नस्थानत्वात् ॥ असंगतइति ॥ आकाशस्यसमग्ररूपेणानेकस्थानस्थत्वाभावादितिभावः । ततःकिमित्यतआह ॥ तथाचेति ॥ तत्प्रसंगश्चेतिचशब्दसंबंधः । तथाचभेदाद्गुणतारतम्यंततश्चानुग्राह्यानुग्राहकभावःस्यादित्यर्थः । भेदस्यतारतम्यव्याप्तिरौत्सर्गिकीतिनव्यभिचारःशंक्यः ॥ ॥ ॐ नस्थानतोपिपरस्योभयलिंगंसर्वत्रहि ॐ ॥ स्थानतोपिस्थानभेदादपिपरस्यहरेरुभयलिंगंभिन्नरूपंनास्ति कुतःहियस्मात्सर्वत्रसर्वस्थानस्थितरूपेषुनिर्भेदत्वादिनाश्रूयतइत्यर्थः । एतमित्येकवचनश्रवणादाह ॥ एकमिति ॥ ब्रह्मशब्दार्थःपूर्णगुणमिति ननुसूत्रेपरस्योभयत्वंनेतावन्मात्रेणपूर्तौरूपग्रहणंकिमर्थमित्यतआह ॥ एकैकदेशतइति ॥ पाद्यवयवैरित्यर्थः । परस्यपरमात्मनः असित्वेप्रमाणाभावात् श्रुतिःससांगइत्यादिका तथाचपरस्योभयत्वंनेत्येवोक्तौपाणिपाद्यवयवरूपैकदेशतोप्यनेकस्थानत्वेनभेदाभावोपिज्ञायते । उभयलिंगनेत्युक्तौतुभिन्नस्थानेविद्यमानानांरूपाणांभेदमात्रनिषेधोपिज्ञायतेविशिष्टनिषेधावस्थानादितिभावः । प्रतिदृशंप्रतिनेत्रंनैकधा अनेकरूपेणसमाधिगच्छंति सम्यग्जानंति । तमिममहजंशरीरभाजांहृदिनिविष्टितमात्मकल्पितानामितिपूर्वार्धतात्पर्यमाह ॥ तथेति ॥ प्रतिदृशमित्यस्यार्थांतरमाह ॥ मांप्रतीति ॥ मदभिमुखेनादित्योवर्ततइत्यादीत्यर्थः ॥ ॐ नभेदादितिचेन्नप्रत्येकमतद्वचनात् ॐ ॥ कार्यकारणेत्यादिश्रुतौजाग्रद्बद्धोविश्वः स्वप्नबद्धस्तैजसः अज्ञानबद्धःप्राज्ञइतिविरुद्धधर्मत्वेनभेदवचनाद्भेदःपरस्येतिचे

न्न । प्रत्येकंपरस्परंमूलरूपेणचातद्वचनात् एषतआत्मेत्यादिनाऽभेदवचनादित्यर्थः ॥ कार्यभ्रमरूपेति ॥ अविद्या
कार्यस्वातंत्र्यादिविपर्ययभ्रमरूपजाग्रद्धत्यइत्यर्थः ॥ तत्कारणेति ॥ सजाग्रत्कालीनभ्रमःकारणंयस्यभ्रमस्येतिविग्रहः ।
तथाचजाग्रत्कालीनभ्रमकार्यस्वप्नवत्यस्तैजसइत्यर्थः । कार्यभ्रमवत्वत्वेतत्कारणाविद्यावत्वत्वमर्थासिद्धमेवेतिनोक्तं ॥
॥ तत्कारणेति ॥ तयोर्जाग्रत्स्वप्नभ्रमयोःकारणंयदज्ञानंतन्मात्रसुप्तिवत्यःप्राज्ञइत्यर्थः । यःपृथिव्यांतिष्ठन्नित्यादिनोक्तए-
पइतिपरामृश्यतइत्याशयेनाह ॥ यःपृथिव्यंतर्यामीति ॥ यश्चेति ॥ योयंपूर्णषड्गुणोभगवानस्यांपृथिव्यांतिष्ठति
यश्चायमस्यामात्मनि[illegible]तिष्ठति सोप्येकएवमूलरूप्येवेत्यर्थः । हरयः हरिनामकानि ॥ नांतर्नबहिरिति ॥ यस्यांतर्बहिश्चना
स्तीत्यर्थः स्वस्य[illegible]र्बहिःस्थितत्वादितिभावः । पौनरुक्त्यवारणायाह ॥ ब्रह्मेत्यनुवादइति ॥ एवंचयद्ब्रह्मपरमा
त्मासर्वानुभूः[illegible]तिभावः ॥ आदरमिति ॥ अर्थांतरेसावकाशत्ववारणायाभेदइत्येवानुक्त्वापरस्परंमूलरूपेणचे
[illegible]श्रुतीनांनिरवकाशत्वरूपादरंसूचयतीत्यर्थः । यद्वाप्रत्येकमित्यस्यवचनादित्यनेनापिसंबंधः ।
तथाच[illegible]भेदवचनादित्युक्त्वाभेदश्रुतीनांबहुत्वरूपमादरंसूचयतीत्यर्थः ॥ बलवत्वमिति ॥ सूच
यतीत्युक्तम्[illegible]गणवद्धावित्यस्याः ॥ अंतिमश्रुताविति ॥ अयमात्मेत्यस्यामित्यर्थः ॥ ॐ अपि
[illegible] ॥ [illegible]एवमभेदेनांतररूपत्वंचामात्रोनंतमात्रइत्यादिनापठतीत्यर्थः ॥ आक्रियमा-
[illegible] ॥ [illegible]दित्यर्थः । ॐ कारस्यभगवन्नामत्वादितिभावः । पूर्वमभेदेनैवेतिभाष्यं इत्थंभावेतृती
येत्यभि[illegible]व्याख्यानं । इदानींसहयोगेतृतीयेत्यभिप्रेत्यतदेवभाष्यंप्रकारांतरेणव्याचष्टे ॥ अभेदे-
नसहैवेति ॥ भेदव्यपदेशस्येति ॥ कार्यकारणवद्धावित्यस्येत्यर्थः ॥ अन्यत्रेति ॥ मस्तकादूर्ध्वंद्वादशांगुलपरि-

मितस्थानस्थतुरीयोनब्रह्म उच्यतइत्यर्थः । नन्वभेदेपिभेदव्यपदेशःस्थानभेदादित्यत्रभिन्नोभिन्नेषुसंस्थितेरितिप्रमाणमुच्यते
ऐश्वर्ययोगाच्चभेदइत्यत्रतत्कुतोनोच्यतइत्यतआह ॥ अभेदेपीति ॥ अनन्योप्यन्यशब्देनतथैकोबहुरूपवान् । प्रोच्यते
भगवान्विष्णुरैश्वर्यात्पुरुषोत्तमइत्यानंदमयाधिकरणएवोक्तत्वादत्रनोच्यतइत्यर्थः । एवमैश्वर्ययोगाद्भेदव्यपदेशइतियथाश्रु
तंव्याख्यायैश्वर्ययोगात्स्थानभेदइत्यपिहेतुहेतुमद्भावमभिप्रेत्यव्याख्यातुमाह ॥अभिन्नस्येति ॥८॥ रूपेति ॥ शरीरेत्यर्थः
एवमग्रेपिरूपमस्यशिरःपाणिपादाद्यात्मकमिष्यतइत्यनुव्याख्यानोक्तेः । रूपपदेनशुक्लादिगुणप्रतीतिःस्यात् अतःशिरःपाणी
तिविवरणंकृतमितिमूधोक्तेश्च। अरूपमव्ययं तद्रूपमनामयइतिभिन्नंवाक्यं। एवंरुक्मवर्णंकर्तारमादित्यवर्णमित्यपि॥वैयर्थ्य
मिति ॥ अप्रामाण्यमित्यर्थः ॥ ॐ अरूपवदेवहितत्प्रधानत्वात् ॐ॥ तदितितंत्रेणव्यस्तंसमस्तंच तथातद्ब्रह्म अरूपवत्
प्राकृतादिदेहवन्नैव कुतःतत्प्रधानत्वात् तस्यब्रह्मणःतेभ्यःप्रकृत्यादिभ्यउत्तमत्वादित्यर्थः॥ कैमुत्यंचेति ॥ अस्मिन्पक्षेतच्छ
ब्देनपूर्वप्राप्तभौतिकरूपपरामर्शः । तथाचयदाभूतेभ्यःपरत्वेनैवभौतिकरूपराहित्यंतदाभूतकरणाव्यक्ततःपरेतद्भौतिकंरूपंना
स्तीतिकिंवक्तव्यंकैमुत्यमित्यर्थः॥ ॐ प्रकाशवच्चावैयर्थ्यं ॐ॥ ब्रह्मणोरूपित्वा द्रुक्मवर्णमित्यादिश्रुतीनामवैयर्थ्यं अप्रा
माण्यंनास्ति । तर्ह्यरूपित्वश्रुतिविरोधइत्यतउक्तं ॥ प्रकाशवदिति ॥ यथांधकारेचक्षुरादिप्रकाशसत्वेपितस्यसौरादि
प्रकाशविलक्षणत्वान्नास्तिप्रकाशइतिव्यवहारस्तथाभगवद्रूपस्यप्राकृतादिरूपविलक्षणत्वादरूपित्वोक्तिरित्यर्थः । शंकांतर
वारकत्वेनापिसूत्रंयोजयति ॥ नचैवमिति ॥ भगवद्रूपस्याप्राकृतत्वेत्यर्थः ॥ वैयर्थ्यमिति ॥
रूपशब्दस्याप्राकृतरूपेव्युत्पत्यभावेनतच्छ्रोतुरर्थाप्रतीतिरितिभावः ॥ प्रकाशशब्दप्रवृत्तेरिति ॥ तद्वदे
वलोकविलक्षणेपिभगवद्रूपेरूपशब्दप्रवृत्तिर्युक्ता सुवर्णघटेघटशब्दस्येवकिंचित्सादृश्यमात्रेणव्युत्पत्युपपत्तेरितिभावः । का

त्रकथंत्वेत्यतआह ॥ सर्वरूपाणामिति ॥ ॐ आहचतन्मात्रं ॐ ॥ भगवद्रूपंतन्मात्रंज्ञानानंदादिमात्रंचाह
ऐकात्मेत्यादिश्रुतिरितिभावः अत्रविग्रहः एकः आत्मा यस्यतत् एकात्मं तस्यभावऐकात्म्यं ऐकात्म्यंचासौप्रत्ययश्चा
सौसारश्च ऐकात्म्यप्रत्ययसारः । आत्मभावःस्वामित्वं तद्ग्रहणेन सौत्रतच्छब्देन ॥ ॐ दर्शयतिचाथोअपिस्मर्यते ॐ ॥
आनंदरूपमितिश्रुतिः आनंदस्यरूपंदर्शयति अथोऽपिज्ञानस्यापिरूपत्वंशुद्धस्फटिकेतिस्मृत्योच्यतइत्यर्थः ॥ ९ ॥
॥ प्रागेवेति ॥ नस्थानतोपीत्यनेनेत्यर्थः । समर्थितत्वादिति पृथगुपदेशादित्यनेनेतिशेषः ॥ सर्वंचेननसमुदाय
स्येति ॥ पटस्यसर्वतंतुभिरत्यंताभेदस्यैकैकतंतुनाभेदाभेदस्यचभवद्भिरभ्युपगमादितिभावः ॥ ॐ अतएवचोप
मासूर्यकादिवत् ॐ ॥ अतएवब्रह्मनदंशानांमत्स्यादीनामभेदस्योक्तत्वादेव अतएव अंशत्वहेतोरेवोपमाजीवस्यम
त्स्यादिवद्ब्रह्माभेदसाम्यमितिनमंतव्यं कुतः अतएव जीवस्यशप्रतिबिंबांशत्वादेव कथंसूर्यकादिवत् यथासूर्यप्रतिबिंबादि
कंसूर्येणाभिन्नंनभवति तत्प्रतिबिंबांशत्वात्तथाजीवोपीशेनभिन्नइत्यर्थः ॥ सूर्यकादिवचेति ॥ अनेनचशब्दोभिन्नक्रम
इतिसूचितंभवति । ननुभेदाभेदवादिनंप्रतिभेदसाधनेसिद्धसाधनमित्यतआह ॥ इदमुक्तंभवतीति ॥ तथाचभेद
शब्देऽभेदाभावपरइतिभावः ॥ इत्यादीनि ॥ कर्तृवाचकपदस्याक्रियानुमतेनेनान्वयमाह ॥ इत्यादीनि ॥ पूर्व
व्याख्यानेपूर्वपक्षइत्यध्याहारः । प्रतिबिंबहेतोःकुतोनुक्तिरित्याशंक्याह ॥ अथवेति ॥ भेदशब्दार्थविशेषइति
तद्धेतुना तेनप्रतिबिंबत्वहेतुना ॥ अनेनेति ॥ जीवस्यभेदसाधनायोक्तप्रतिबिंबत्वेनेत्यर्थः ॥ प्राचीनेति ॥ अभे
दसाधकत्वेननत्वादरित्यर्थः । ननुतेनभेदाभेदांगीकारात्कथमभेदमात्रनिरासइत्यतआह ॥ अभेदांशएवेति ॥ ज्ञानै
श्वर्यादीश्वरसाम्यंजीवानांनेश्वराभेदःप्रयोजकः किंतुमद्भेदाभावः सचात्रनास्तीतिनसाम्यमित्याशंकते ॥ भेदस्या

पीति ॥ ब्रह्मस्वरूपानुगतेरिति ॥ मृदादिनाभिन्नाभिन्नेषु घटादौ मृदादिस्वरूपानुगतिवद्ब्रह्मणाभिन्नाभिन्नेषु जीवेषु ज्ञानैश्वर्यादिब्रह्मस्वरूपानुगतेरावश्यकत्वादित्यर्थः । किंपरेणाभिन्नाभिन्नयोगक्लितेष्वपि मत्स्यादिष्वैश्वर्यादिब्रह्मस्वरूपानुगतेर्दर्शनात्तद्वज्जीवेष्वपिस्यादित्यत आह ॥ मत्स्यादिवच्चेति ॥ नन्वस्यांयोजनायामंशत्वेपिविशेषवत्त्वरूपयुक्तितएवमनिर्विरुद्धत्वरूपहेतुसिद्धेरुपरूपमित्यादिश्रुत्युदाहरणंकिमर्थमित्यत आह ॥ युक्तिदृष्टार्थएवेति ॥ उपाध्यायत्तेति ॥ उपाध्यधीनत्वादिप्रसिद्धप्रतिबिंबधर्मवाम्भवेत्यर्थः ॥ अनित्यत्वेति ॥ देहाद्युपाधेरनित्यत्वादितिभावः । यद्यपियावदात्मभावित्वादितिस्वरूपोपाधिर्नित्य उक्तः तथाप्यधीनत्वंभेदसापेक्षमितिभिन्नोपाध्यधीनत्वादावत्रविकल्पितमितिध्येयं ॥ नसूर्यकादीति ॥ उभयोरुपाध्यधीनत्वधर्मेणसाम्याभावादितिभावः । तर्हिमास्तुसूर्यकादिदृष्टांतः तथापिजीवस्य प्रतिबिंबत्वमस्त्वित्यत आह ॥ अतइति ॥ सर्वेषांप्रतिबिंबानामुपाध्यधीनत्वव्याप्तत्वेनोपाध्यधीनत्वरूपव्यापकनिवृत्तौ व्याप्यभूतप्रतिबिंबत्वस्यापिनिवृत्त्याभेदसाधकानामभावेनोक्तचेतनत्वाद्यनुमानेनाभेदसाधनंयुक्तमित्यर्थः । प्रतिज्ञाद्वयंक्रमेणोपपादयति ॥ पृथगिति ॥ इत्युक्तेरिति ॥ इतिसूत्रैःक्रमेणोक्तेरित्यर्थः । सर्वधर्मानभ्युपगमेकथंसूर्यकादेर्दृष्टांतत्वमित्यत आह ॥ धौहीति ॥ सर्वेति ॥ पर्वतमहानसादेरपियावत्साम्याभावादितिभावः ॥ प्रतिबिंबपदोक्तमिति ॥ तथाचहेतुकृतप्रतिबिंबशब्दार्थनिरूपणायैवभाष्ये तथोक्तिरितिभावः ॥ १० ॥ भगवत्सादृश्येति ॥ ज्ञानानंदादिनाभगवत्सादृश्यस्येत्यर्थः । उक्तंपुंस्त्वादिवदित्यनेन ॥ सुप्ताविवेति ॥ मुक्तियोग्यजीवस्यभक्तिविनैवस्वरूपस्यसुखस्यव्यक्तिवदित्यर्थः ॥ ॐ अंबुवदग्रहणात्तुनतथात्वं ॐ ॥ अंबुवदग्रहणात्स्नेहयुक्तज्ञानाख्यभक्त्यभावप्राग्विनेतियावत् तथात्वंज्ञानादिसादृश्यंतुनाभिव्यज्यतइत्यर्थः ॥ तथासतीति ॥ स्वयमेवजायमानाभि

व्यक्तेर्विलंबेनिमित्ताभावेनेतः पूर्वमेवतत्संभवादितिभावः ॥ **तत्स्वरूपमिति** ॥ जीवस्वरूपमित्यर्थः ॥ ११ ॥
॥ **अर्थतइति** ॥ ब्रह्मादिषुभक्तेर्वृद्धिह्रासवत्त्वरूपतारतम्येप्रतिपादितेभगवतस्तदनुसारिफलदानसामर्थ्यात्सिध्यति । भगवतोभक्त्यनुसारिफलंविनाभक्तेर्वृद्धिह्रासवत्त्वानुपपत्तेरितिभावः ॥ **मुक्तत्वेति** ॥ संसारध्वंसवत्त्वेत्यर्थः । साम्यहेतोःप्रयोजकत्वंपरिहरति ॥ **अन्यथेति** ॥ फलसाम्येपितारतम्यांगीकारइतिभावः । साम्यमेवासिद्धमित्यतआह ॥ **केषांचिदिति** ॥ मुक्तिःसंसारनिवृत्तिः ॥ **ॐ वृद्धिह्रासभाक्त्वमंतर्भावादुभयसामंजस्यादेवं ॐ** ॥ भक्तेर्वृद्धिह्रासभाक्त्वं आधिक्यन्यूनतावत्वमस्ति कुतः अंतर्भावात् महत्फलवतांब्रह्मादीनामल्पफलवतामस्मदादीनांभक्तत्वेनभावादेवंभक्तितारतम्यांगीकारएवपरमात्मनः उभयान्ब्रह्मादीनस्मदादींश्चप्रतिसामंजस्यात् समीचीनत्वसंवादित्यर्थः । वैरूप्यंवैषम्ये ॥ **ॐ दर्शनाच्च ॐ** ॥ अथातइत्यादावानंदरूपफलतारतम्यस्यश्रवणादित्यर्थः ॥ १२ ॥
॥ **गुणानामपीति** ॥ आकाशगंधादेरयुक्तत्वदर्शनादित्यर्थः ॥ **कर्तृत्वादिति** ॥ कर्तृत्वाभ्युपगमादित्यर्थः । यावत्संहारंसंहारपर्यंतं ॥ **जगत्स्थितेरिति** ॥ स्थितेरेवपालनफलत्वादितिभावः । ननुरक्षारूपपालनाभावेकथमसंहारमात्रेणस्थितिरित्यतआह ॥ **संहारकर्तुरिति** ॥ अयोगमेवोपपादयति ॥ **अन्यस्यत्विति** ॥ एतेनेत्युक्तंविशदयति ॥ **तत्रापीति** ॥ अवांतरोपद्रवदानेपीत्यर्थः ॥ **ॐ प्रकृतैतावत्त्वंहिप्रतिषेधतिततोब्रवीतिचभूयः ॐ** ॥ विष्णोःपालकत्वंपृथगस्त्येव कुतः हियस्मान्नैतावदितिश्रुतिः प्रकृतस्य सृष्टिलयकर्तृत्वस्य एतावन्मात्रत्वंप्रतिषेधति ततः सृष्टिलयकर्तृत्वाद्भूयः अधिकंपालकत्वमपिब्रवीतीत्यर्थः ॥ **प्रागुक्तमिति** ॥ अस्यदेवासुमतिःप्रधानेत्यादिपूर्ववाक्योक्तमित्यर्थः । तदर्थस्त्वतोदेवानामिति पूर्वप्रकृतदेवानामेवप्रधानातिशयेनप्रथमोनासुमतिः प्रधानाबुद्धिरस्येदस्यैव प्रकृत

विष्णोरेवसकाशादभवदिति । एनेत्यस्यार्थोऽनेनेति सदित्यस्यभवदितिकार्यमितिचार्थद्वयं । उक्षेत्यस्यभक्ताभिलाषि
तसेचकइति । बिभर्तिचेत्यस्यधत्तेपुष्णातिचेत्यर्थद्वयं । अनेनश्रुतिस्मृत्युदाहरणेन ॥ १३ ॥ अपरोक्षज्ञानंभक्तिप्रयो
जनमितिवदतांकिंब्रह्मणःव्यक्तत्वमंगीक्रियते उताव्यक्तत्वं आद्यआह ॥ स्तंभादिवदिति ॥ द्वीतीयमाशंक्यदूषयति
॥ नस्येति ॥ तदभ्युपगमइति ॥ अव्यक्तस्वभावस्यापिदर्शनाभ्युपगमइत्यर्थः । नप्रतीयते प्रत्यक्षेण ॥ ॐ तद
व्यक्तमाहहि ॐ ॥ तद्ब्रह्माव्यक्तं कुतः हियस्मादरूपमितिश्रुतिस्तथाहेत्यर्थः । भक्तेःकर्तव्यत्वसिध्यर्थमाह ॥ भक्ति
साध्यादिति ॥ ॐ अपिसंराधनेप्रत्यक्षानुमानाभ्यां ॐ ॥ संराधनेपिभक्तिहीनपूजादिकरणेपिब्रह्माव्यक्त
मेव कुतः ज्ञानिप्रत्यक्षेण ब्रह्म नव्यक्तमतिसूक्ष्मत्वादित्यनुमानेनच तथासिद्धत्वादित्यर्थः ॥ व्याहतिरिति ॥
प्रत्यक्षायोग्यत्वरूपमव्यक्तत्वंप्रत्यक्षसिद्धमित्यंगीकारेव्याहतिरित्यर्थः ॥ उत्तरत्र ॥ अतोनंतेनेत्यत्र ॥ गर्भस्रावेणेति ॥
अव्यक्तस्वभावस्यापिब्रह्मणोऽचिंत्यशक्त्याप्रत्यक्षत्वात्तद्गताव्यक्तत्वस्यापिप्रत्यक्षत्वलाभादितिभावः ॥ नंक्ष्यति ॥
नष्टीभविष्यति । अनुमानस्यज्ञानिनःप्रत्यक्षविशेषादितरेषामनुपपन्नेत्यतआह ॥ प्रत्यक्षसिद्धार्थइति ॥ सिद्धसाध
नत्वप्रसंगादितिभावः । उत्तरमाह ॥ ज्ञानिनामिति ॥ उत्पत्यादिरहितत्वादिति ॥ तथाचव्यक्तत्वोपयो
गिस्थूलत्वालाभइतिभावः । गृहीतरूपैः अवताररूपैः ॥ तन्मात्रेति ॥ भूतसूक्ष्मरूपरसगंधस्पर्शाख्यतन्मात्रालक्षणे
त्यर्थः । अवताररूपापरोक्षज्ञानस्यमोक्षाहेतुत्वान्मूलरूपापरोक्षज्ञानायभक्तिरपेक्षितेत्यतआह ॥ नहीति ॥ इतिनि
यमोनह्यस्तीत्यन्वयः ॥ शंकाव्यावृत्त्यर्थइति ॥ दृष्टांतरानुक्त्यासमुच्चयार्थत्वासंभवादितिभावः ॥ ॐ प्रकाश
वच्चावैशेष्यं ॐ ॥ ब्रह्मप्रकाशवच्च अग्निवद्व्यक्त्यव्यक्तिमन्नभवति कुतः अवैशेष्यंतद्वद्विशेषरहितत्वंयतइत्यर्थः परए

वसंभवतीत्यस्यार्थः । परमसूक्ष्मएवसंभवतीति अवताररूपाणामुत्पन्नत्वस्यशंकितत्वेनतदभावप्रतिपादनायाह ॥ जनन
मर्दयतीति ॥ ॐ प्रकाशश्चकर्मण्यभ्यासात् ॐ ॥ कर्मणिब्रह्मविषयेकृतादभ्यासात् पुनःपुनःकृतश्रवणादेः
सकाशात्प्रकाशश्चापरोक्षज्ञानंभवतीत्यर्थः ॥ ॐ अतोनंतेनतथाहिलिंगं ॐ ॥ अनंतेनापरिछिन्नशक्तिमताब्रह्मणा
॥ १८ ॥ तत्प्रसादेनेतियावत् अव्यक्तस्यापिप्रकाशोभवति कुतः अव्यक्तत्वेप्रत्यक्षत्वेचप्रमाणसत्वात् तथाहिलिंगं बंधनिवृत्तेःप्रसा
दसाध्यत्वरूपं ज्ञानस्यप्रसादसाध्यत्वेलिंगं ज्ञापकं हियस्मात्तदस्तीत्यर्थः ॥ प्रसादसाध्यत्वेपि ॥ प्रयोजनस्तत्व
भावपदोक्तोपासनाजनितमध्यमप्रसादसाध्यत्वलिंगमित्यर्थः । दर्शनस्योक्तप्रसादजन्यत्वेकथमेतल्लिंगमित्यतआह ॥ दृष्ट्वे
वेति ॥ दर्शनसाध्यत्वेति ॥ दर्शनैकसाध्यत्वेत्यर्थः ॥ प्रसादादर्शनमिति ॥ उपासनाजंन्यमध्यमप्रसाद
स्यसाक्षात्मोक्षहेतुत्वाभावात् । अतत्स्वभावस्याप्रत्यक्षत्वस्वभावस्य ॥ १४ ॥ अन्यथेति ॥ आनंदादीनांभेदेनगु
णगुणिनोरयुतसिद्धत्वाभावेनघटपटयोरिवसंयोगाभावाद्गुणगुणिभावोपपत्त्यर्थंसमवायस्यावश्यमंगीकार्यत्वेन तन्निराकरणा
नुपपत्तेरित्यर्थः ॥ स्वरूपेणचेति ॥ नेश्वरोगुणवान् गुणात्मकत्वात् यथानस्वःस्ववानितिवक्ष्यमाणयुक्तीत्यर्थः
॥ गुणानामिति ॥ आनंदाद्याः नब्रह्मगुणाः तत्स्वरूपत्वाद्ब्रह्मवदितिवक्ष्यमाणयुक्तीत्यर्थः । ननुगुणित्वरूपमहिमा
भावेपि आनंदादिगुणस्वरूपत्वरूपमहिमावत्वेनब्रह्मणोभक्तिविषयत्वंस्यादित्यतआह ॥ नचेति ॥ पारिवृढ्यं आढ्यत्वं
॥ ॐ उभयव्यपदेशात्वहिकुंडलवत् ॐ ॥ ब्रह्मणोगुणात्मकत्वंगुणित्वंचेत्युभयमप्यस्ति कुतः एवपरमानंदइ
त्यानंदात्मत्वं आनंदंब्रह्मणइत्यानंदित्वमित्युभयोरपिव्यपदेशात्कथमेतस्योभयत्वं अहिकुंडलवत् एकस्यैवसर्पस्यकुंडलि ॥ १८ ॥
त्वंकुंडलत्वंचयथेत्यर्थः ॥ विशेषादेवकुंडलित्वमिति ॥ ननुयत्रात्यंताभेदस्तत्रैवविशेषइतिसिद्धांतः अहिकुंडल

योश्चभेदाभेदौ यद्वक्ष्यति भेदाभेदविषयेणकिमाद्येनदृष्टांतेनेति।मुथायांचाहेरवयवानामन्योन्यसंयोगविशेषोह्यहिकुंडलंसताव
दिहनात्यंनाभिन्नइतिशंकाग्रंथेयद्यप्यहिकुंडलंभेदाभेदवदितिसिद्धांतग्रंथेचोक्तं।तत्कथमेतदितिचेत् सत्यं।नात्रविशेषशब्दो
भेदकार्यकारित्वमात्रसामर्थ्यपरः किंतुभेदपरएव । भेदांतरंविशेषश्चसूक्ष्मंचेत्यभिधीयतइतिचतुर्थतात्पर्योक्तेः । नचैवंकथं
मस्यंनाभेददृष्टांतइतिवाच्यं । अहःकुंडलस्यभेदाभेदवत्त्वेपिमंदानामभेदबुद्धिमवतारयितुमिदंयथापृथिव्यामोषधयःसंभवं
तीतिवदितिमुथोक्तरीत्याभेदमात्रेदृष्टांतत्वोपपत्तेरिति । विशेष्यापेक्षयाह ॥ यथानस्वइति ॥ विशेषणापेक्षयाह
॥ दंडइति ॥ ॐ प्रकाशाश्रयवद्वातेजस्त्वात् ॐ ॥ यथाप्रकाशाश्रयस्यादित्यस्यप्रकाशत्वंप्रकाशित्वंचतद्वद्गुणा
त्मकस्येशस्यगुणित्वंसंभवति अन्यद्विहायादित्यग्रहणेकोहेतुरित्यतआह । तेजस्त्वादिति ब्रह्मणस्तेजोरूपत्वेनांतरंगत्वादि
त्यर्थः ॥ ॐ पूर्ववद्वा ॐ ॥ यथाकालःपूर्वेणाभिन्नोपिपूर्वःकालइतितेनविशिष्यतेतथागुणात्मकंब्रह्मगुणीतिविशिष्यत
इत्यर्थः । शयनशब्दस्यनिद्रापरत्वस्यप्रकृतेऽनुपयोगादाह ॥ शयनमवस्थाविशेषइति ॥ अंगविशेषणमिति ॥
अंगधर्ममित्यर्थः । अंगविशेषणंयस्येतिवा ॥ अभिन्नएवेति ॥ ब्रह्मणामुक्तैश्चाभिन्नएवानंदोविशेषबलादेवब्रह्मणोमु
क्तानामितितत्संबंधित्वेनोच्यतइत्यर्थः ॥ ॐ प्रतिषेधाच्च ॐ ॥ नेहनानेतिगुणगुणिनोर्भेदस्यप्रतिषेधादभेदइत्यर्थः
॥ घटादिवदिति ॥ एकमित्यनेनाभिन्नत्वोक्तौघटादिवद्ब्रह्मस्वावयवैर्भिन्नाभिन्नमितिप्रतीयेतातस्तान्निवृत्यर्थमेकेत्युक्त
मित्यर्थः । उद्देश्यविधेयभावप्रतिपत्यर्थं पदयोरन्वयप्रदर्शनपूर्वकंकिंचनपदंव्याचष्टे ॥ किंचननानेति ॥ किंचनगुण
गुण्यादिकंनानाभिन्नंनास्तीत्यर्थः ॥ १९ ॥ प्रकृतं पूर्वाधिकरणे अन्यथालौकिकानंदविलक्षणत्वे व्युत्पत्यभावादिति
भावः ॥ ॐ परमतःसेतून्मानसंबंधभेदव्यपदेशेभ्यः ॐ ॥ ब्रह्मानंदादिकं अतः लौकिकानंदादेःपरंविल-

क्षणं कुतः सेतून्मानसंबंधभेदव्यपदेशेभ्यः । एषसेतुरितिसेतुत्वस्य यतोवाचइत्युन्मानत्वस्यपूर्णत्वस्य तस्यैवानंदस्योति बिंबप्रतिबिंबरूपसंबंधस्य अन्यइज्ञानमितिभेदस्यचाभिधानादित्यर्थः। उद्धृतमानंवेदादिप्रमाणंमर्यादाचयस्मादित्यभिप्रेत्याह || पूर्णत्वमिति || ब्रह्मानंदस्यान्यैरभोज्यत्वादाह । मात्रंतत्प्रतिबिंबांशत्वमिति अलौकिकत्वलाभायाह || अन्यद्विलक्षणमिति || साध्यावैशिष्ट्यनिरासायाह || अलौकिकत्वादिति || तथाचभाष्ये अलौकिकत्वादितिपंचमी तृतीयार्थे अतःपरमितिसंबंधः । ततश्चालौकिकत्वेनप्रकारेणातोलोकानंदादेःसकाशात्परंविलक्षणमितिव्याख्यानमित्यर्थः || अलौकिकत्वावगमादिति || अत्रातोव्यपदेशेभ्यइत्यर्थः । नचेत्यादिभाष्यस्यप्रतिज्ञाव्याख्यानपरत्वे आनंदित्वादितिहेत्वंशोक्तिर्व्यर्थेत्यस्वरसात्प्रकारांतरेणव्याकुर्वन्साध्यावैशिष्ट्यंप्रकारांतरेणपरिहरति || अथवेति || लौकिकत्वादिति || तथाचनात्राकारप्रश्लेषइतिभावः || ॐ दर्शनात् ॐ || अन्यानंदादीनामनोवाग्गोचरत्वात्तद्गोचरब्रह्मानंदस्यतद्वैलक्षण्यमित्यर्थः । वक्ष्यमाणश्रुत्यनुसारेणदर्शनपदमन्यथोपलक्षणमितिभावेनाह || मनोवागिति || ॐ बुध्यर्थःपादवत् ॐ || यथालोकपादविलक्षणेष्वपिजीवेषुपादोस्येतिपादपदप्रयोगोबुध्यर्थः भूतानामीशांशत्वज्ञापनार्थः तथाऽलौकिकेप्यानंदादिपदप्रयोगोबुध्यर्थः अनुकूलवेद्यत्वादिज्ञापनार्थोयुक्तइत्यर्थः || प्रसिद्धचरणविलक्षणइति || प्रसिद्धचरणस्यदेहावयवत्ववद्भूतानांपरमात्मावयवत्वाभावादितिभावः || मूर्तित्रयविलक्षणइति || त्रिपादस्यामृतंदिवीत्यादिनोक्तश्वेतद्वीपानंतासनवैकुंठादिगतनारायणादिमूर्तित्रयस्यभगवत्स्वरूपांशत्ववद्भूतानांतदभावादितिभावः । भूतपादइतिभूताख्यपादइत्यर्थः । तर्हितद्वदेवभिन्नांशत्वप्रतीतिःस्यादित्यतआह || ज्ञातांशइति || अनुकूलवेद्यत्वेति || इदंममानुकूलमेवनप्रतिकूलमितिवेद्यत्वेनेत्यर्थः । अन्यथा आनंदमयो

मेविना तर्हितद्वदेवलौकिकत्वबुद्धिः स्यादित्यतआह ॥ **ज्ञानतावन्मात्रस्येति** ॥ अनुकूलवेद्यत्वमात्रज्ञानवतइत्यर्थः ॥ **आनंदइति** ॥ भगवदानंदोलौकिकानंदवन्नभवतीत्युक्तेलोकानंदतोविलक्षणःप्रतिभाति । लोकप्रसिद्धानंदपदेनै वतदुपदेशः कुतइत्यतउक्तं ॥ **नचाभातीति** ॥ स्वदृष्टवाचकपदोपदेशंविनालौकिकंवस्तुनभातीत्यर्थः ॥ १६ ॥ ॥ **तद्भावइति** ॥ भगवदानंदस्यब्रह्माद्यानंदप्रतिबिंबत्वेनैववैलक्षण्यस्यवक्तव्यत्वादितिभावः ॥ **द्वैविध्येति** ॥ युक्तायुक्तत्वेत्यर्थः ॥ **वैचित्र्यंस्यादिति** ॥ अन्यथानिनिर्बंधनत्वापत्तेरितिभावः ॥ **अदृष्टानियमेनेति** ॥ अदृष्टादिवैचित्र्येणेत्यर्थः । अदृष्टानियमादित्यत्रविचित्रस्वभावानामपिजीवानामविचित्रभगवत्प्रतिबिंबत्वसमर्थनादितिभावः ॥ ॐ **स्थानविशेषात्प्रकाशादिवत्** ॐ ॥ यथासूर्यप्रतिबिंबस्थानविशेषात्सूर्यकांतादिस्थानगुणवैचित्र्यादग्निजनकत्वादिवैचित्र्यं तथाब्रह्मादिस्थानगुणवैचित्र्यादानंदवैचित्र्यमित्यर्थः ॥ **प्रतिफलितइति** ॥ तदधीनत्वेसतितत्सदृश इत्यर्थः ॥ ॐ **उपपत्तेश्च** ॐ ॥ बिंबभूतेशसामर्थ्याच्चानंदवैचित्र्योपपत्तेर्भवत्येवान्यानंदादीश्वरानंदप्रतिबिंबमित्यर्थः ॥ **उपयुज्यतइति** ॥ तथाचद्वितीयसूत्रंव्यर्थमितिभावः ॥ **उपयोगीति** ॥ तथाचाद्यंसूत्रंव्यर्थमितिभावः ॥ **तस्यसर्वत्रसाम्यादिति** ॥ तस्यसूर्यादिबिंबसामर्थ्यस्यसर्वत्रजलादौविद्यमानत्वेपितद्गतसूर्यकादेराग्निजनकत्वाभावादितिभावः ॥ १७ ॥ **अन्यथेति** ॥ चित्तप्रतिबिंबितस्यब्रह्मप्रतिबिंबत्वाभावइत्यर्थः । यत्किंचिध्याने अन्यध्याने ॥ ॐ **तथान्यत्प्रतिषेधात्** ॐ ॥ यथाब्रह्मणआनंदादिकंलोकानंदादेर्विलक्षणं तथाब्रह्माप्यन्यत् चित्तप्रतीताद्विलक्षणमेव कुतःयन्मनसेतिचित्तप्रतीतस्यब्रह्मत्वप्रतिषेधादित्यर्थः । यदित्युक्तस्यब्रह्मणःकर्तृत्वेयेनब्रह्मणामनोमतमित्यनेनव्याहतिरित्यतआह ॥ **पुरुषइति** ॥ तदुपासनंकिंभवतीत्यतआह ॥ **प्रतिबिंबोपासनमिति** ॥ **दृश्यतइ-**

तीति ॥ परंपदं ब्रह्मस्वरूपं ध्यानजन्यज्ञानेनैवापरोक्षेणदृश्यते नतुध्यानकालीनापरोक्ष्येणात् । अतश्चित्तप्रतिबिंबितं
नब्रह्मेत्यर्थः ॥ १८ ॥ प्राचीनोक्तेः जन्माद्यस्ययतइत्यस्याः॥ ॐ अनेनसर्वगतत्वमायामयशब्दादिभ्यः ॐ॥
॥ १७ ॥ अनेनैवब्रह्मणैवसर्वंसृष्टमित्यादि । कुतः सर्वगतत्वात् एषसर्वगतइतिसर्वगतत्वश्रवणात् मायामयशब्दात् मायामयलब्ध्या
स्यायकश्रुतेः । अन्यकर्तृत्वेप्रमाणाभावाच्चेत्यर्थः । एतत्स्वातंत्र्यादानंसर्वगतोक्त्याकथंतस्यसर्वकर्तृत्वंप्राप्तमितितत्राह
॥ सर्वगतत्वंचेति ॥ सर्ववस्तुविषयमिति ॥ सप्तमीविषयार्थः सर्वमित्येतत्सृष्ट्याद्यष्टकपरमितिभावः ॥ इति
संग्रहीतस्मिन्निशेषइति ॥ प्रमाणाभावाच्चेत्यनंतरमित्यर्थः ॥ १९ ॥ कुतइत्यतस्तदन्वयव्यतिरेकित्वादित्याशये
ननावदन्वयानुविधायित्वमाह ॥ यैरिति ॥ अपेक्षापदोक्तावश्यकत्वमेवविपक्षेबाधकत्वेनोपपादयति ॥ अन्यथेत्या
दिना ॥ व्यतिरेकानुविधायित्वमाह ॥ अकृतकर्मणइति ॥ फलितमाह ॥ एवमिति ॥ ॐ फलमतउप-
पत्तेः ॐ ॥ अतःपरमात्मनएवफलंभवति तस्यचेतनत्वेनफलदानोपपत्तिरित्यर्थः ॥ संभावनेवेति ॥ चेतनत्वस्यजी
वेपिसत्त्वान्निश्चायकत्वाद्धिनिभावः । अतोनिश्चयः ॥ ॐ श्रुतत्वाच्च ॐ ॥ रातिर्दातुरितिश्रुत्युक्तत्वाच्च ब्रह्मैवफल
दातेत्यर्थः । दानादिकर्मप्रवर्तनेनस्वर्गादिफलदाता किंतुस्वानिष्टादिपूर्वकर्मणैवेत्यभिप्रेत्यप्रवृत्तेतिष्टमानस्येतिश्रुतिशेषमनू
द्यव्याचष्टे ॥ तिष्ठमानस्येति ॥ स्थितिमात्रस्यसर्वसाधारण्यात्स्वस्मिन्मनसेत्युक्तं ॥ फलप्रदमिति ॥ रादानइ
तिधातोर्निर्गमभावः ॥ ॐ धर्मंजैमिनिरतएव ॐ ॥ जैमिनिः धर्मंपुण्यादिकर्म अतएवपरमात्मनएवजातमाह कुतः
अतएव एषह्येवानंदयतीत्यर्थः । तर्हिरातिर्दातुरितिश्रुतिविरोधइत्यतआह ॥ इदंतुन्याय्यमिति ॥ द्वेधा ब्रह्मश्रुति ॥ १७ ॥
रूपोभयपरतया ॥ ॐ पूर्वंतुबादरायणोहेतुव्यपदेशात् ॐ ॥ पूर्वं पूर्वोक्तंब्रह्म तु कर्तृत्वरूपविशेषेणकारणं कुतः

हेतुव्यपदेशात् पुण्येनेतिब्रह्मणः कर्तृत्वेन कारणत्वव्यपदेशादितिबादरायणोमन्यतइत्यर्थः । समप्रधानभावः प्रधानत्व साम्यं । नचान्वयव्यतिरेकानुविधायित्वन्यायविरोधइत्यतआह ॥ कारणत्वेपीति ॥ सामान्यतइति ॥ कर्तृक रणत्वविशेषविहायेत्यर्थः । कारणत्वमात्रंतुकर्मणः फलंप्रतिकरणत्वेप्युपपन्नमितिभावः । तत्सत्ता कर्मसत्ता ॥ २० ॥ इतिश्री मत्तत्वप्रकाशिकावाक्यार्थमंजर्यांशंकरार्श्रीनिवासविरचितायांतृतीयाध्यायस्यद्वितीयःपादः ॥ ॥

॥ श्रीगुरुभ्योनमः ॥ नन्वथब्रह्मजिज्ञासापदोक्तसाधनविचारात्मकेऽस्मिन्नध्याये पादद्वयेनाथशब्दोक्तवैराग्यभक्तिनिरू पणानंतरंब्रह्मजिज्ञासापदोक्तज्ञानसाधनीभूताब्रह्मजिज्ञासास्मिन्पादेनिरूपणीया । किमुपासनानिरूपणेनेत्यतआह ॥ उपासनानामेति ॥ ननूपासनाप्रतिपादकेस्मिन्पादेसर्वपरिज्ञानोक्तिःकथंसंगता तस्याप्युपासनात्वेनसंगतत्वेपिप्रथ मतःतदुक्तौकिंनिमित्तमित्यतआह ॥ उपासनाद्विविधेति ॥ श्रवणमननिदिध्यासनानामेवोपासनात्वस्यजिज्ञा साधिकरणेऽभिहितत्वात्कथंसच्छास्त्राभ्यासस्याप्युपासनात्वमित्यतआह ॥ यामाहुरिति ॥ श्रवणमननयोर्ध्यानांग त्वमेवोपपादयति ॥ समस्तेति ॥ अत्रश्रवणंतत्वज्ञानमुत्पादयदज्ञानंनिवर्तयति । मननंतुवेदार्थनिर्णयंकुर्वत्संशयविपर्ययौ निवर्तयतीतिविवेकः ॥ अतएवेति ॥ श्रवणमननयोरप्युपासनात्वादेवेत्यर्थः । ततश्चात्रभगवत्प्राप्तिसाधनीभूतायाःसर्ववेदश्र वणमननोपासनारूपायाःसमर्थनादस्तिशास्त्रादिसंगतिरित्युक्तंभवति अविषयत्वइतिछेदः ॥ सर्वोपादेयतेति ॥ एकशा खादिविषयश्रवणादिकुर्वतः शाखांतरज्ञानाभावेनसर्वशाखानिर्णायकैतच्छास्त्रेणप्रयोजनाभावादितिभावः ॥ सामान्यो क्तिरिति ॥ ब्रह्मजिज्ञासाकर्तव्येतिसामान्योक्तिरित्यर्थः ॥ पृथक्त्वेनेति ॥ कचिद्विज्ञानमानंदंब्रह्मेतिविज्ञानाद्यात्मकस्यक

चिद्घसत्यंज्ञानमनंतंब्रह्मेतिसत्याद्यात्मकस्यवस्तुनोभिदानदर्शनादित्यर्थः॥ ॐ सर्ववेदांतप्रत्ययंचोदनाद्यविशेषात् ॐ॥
ब्रह्म सर्ववेदांतप्रत्ययं सर्वेषांवेदानामंतेननिर्णयेनजातोयःप्रत्ययःज्ञानंतद्विषयः॥ कुतः चोदनाद्यविशेषात् चोदनानामुपासना
विधीनामादिपदोक्तयुक्तीनांचसर्वान्प्रतिविशेषरहितत्वादित्यर्थः ॥ पूर्वोत्तराविरुद्धमिति ॥ पूर्वंप्रथमाध्यायेमंत्रब्राह्मणा
दिरूपस्यसर्वस्यवेदस्यसमन्वयस्योक्तत्वात् उपसंहारोऽर्थाभेदादित्युत्तरत्रापिसर्ववेदोक्तप्रकारेणध्यानस्यवक्ष्यमाणत्वात् अ
त्रापिसर्ववेदपदेनमंत्रादिरूपस्यसर्वस्यापिवेदस्यग्राह्यत्वात्सर्ववेदांतेत्यकंपदमंगीकृत्योपनिषद्ग्रहणंपूर्वोत्तराविरुद्धमित्यर्थः ।
विवक्षितसाध्यस्यस्पष्टमप्रतीतेराह ॥ किमुक्तमिति ॥ ज्ञातव्यमित्यनंतरमुक्तंभवतीत्यनुवर्तते नन्वाधिकारिविशेष
निर्देशाभावेपिफलविशेषादिनाधिकारिविशेषनिश्चयोभविष्यतीत्याशंक्यानिषेधति ॥ नचवाच्यमिति ॥ ज्योतिष्टोमेन
स्वर्गकामोयजेतेत्यादिकाकर्मविद्या ॥ स्वर्गकामत्वादीति ॥ लोके छादयंत्यादीनांनिषिद्धत्वादितिभावः। कल्पका
भावमेवोपपादयति ॥ कल्पकत्वंचेत्यादिना ॥ तत्रोक्तयुक्तीनामिति ॥ आत्मत्वमेवकुतउपास्यमित्याशंका
यामात्मत्वेसर्वगुणानामंतर्भावादित्यभिप्रायेणात्रेतिवाक्यस्यप्रवृत्तत्वादितिभावः। अत्रात्मत्वे एतेसर्वगुणाः एकीभवंति
अंतर्भवंतीत्यर्थः ॥ इतरांशस्येति ॥ तद्धेदंतर्ह्यव्याकृतमासीदित्यादेरित्यर्थः ॥ सर्वाधिकारिसाधारणाए-
वेति ॥ सर्वेषामपिज्ञानार्थिनांमुमुक्षूणांस्वयोग्येतरगुणसंग्राहकात्मत्वोपासकत्वादितिभावः ॥ ॐ भेदान्नेतिचेदेक
स्यामपि ॐ ॥ प्रतिशाखंवस्तुभेदान्नैकंब्रह्मसर्ववेदांतप्रत्ययमितिचेन्न एकस्यामपिशाखायामर्थभेदसद्भावेनतदुक्तस्या
प्यत्रयत्नप्रसक्तेरित्यर्थः । कस्यांचित् अथर्वणशाखायां क्वचिद्यजुःशाखायां क्वचिदृक्शाखायां अन्यत्रसामशाखायां नचै
कशाखायां ॥ पृथक्त्वदर्शनादिति ॥ कंब्रह्मखंब्रह्मेत्यत्रभेददर्शनादित्यर्थः ॥ धर्मीति ॥ ब्रह्मरूपधर्मिण

मनुष्यसुखज्ञानादिरूपधर्मविधानादित्यर्थः ॥ तथेति ॥ धर्मात्मादिपदैर्धर्मिणमनुष्यविज्ञानादिधर्मविधानादितिभावः । अंशे धर्म्यंशे ॥ प्रसंगभेदेति ॥ प्रकरणभेदादधिकविधानायानुवादाच्चनपौनरुक्तिरितिपरिहारइत्यर्थः ॥ ॐ स्वाध्यायस्यतथात्वेनहिसमाचारेधिकाराच्च ॐ ॥ ब्रह्मसर्ववेदांतप्रत्ययमेव कुतः स्वाध्यायस्यवेदाध्ययनविधेः सर्वान्प्रत्यविशिष्टत्वेननिमित्तेनतथासर्ववेदोक्तकर्मणःसमाचारे सम्यगनुष्ठानेसर्वेषामधिकाराच्चेत्यर्थः ॥ स्वाध्यायइति ॥ वेदःपठनीयइत्यर्थः । नन्वस्तुसर्वशाखानामेकैकेनाध्येतव्यत्वं तथापिननदुक्तप्रकारेणब्रह्मज्ञातव्यमितिसिध्यति । अध्ययनविधेरक्षरग्रहणेनैवचरितार्थत्वादाह ॥ अध्ययनंचेति ॥ ज्ञानार्थमथध्यानार्थंगुणानांसमुदीरणेतिवक्ष्यामइत्यर्थः ॥ परास्तमिति ॥ स्मृतींकृत्स्नशब्दश्रवणादितिभावः ॥ सुतरामिति ॥ बहुत्वेनपरस्परविरुद्धत्वेनचाशक्यानुष्ठानेषुकर्मसुयदाधिकारस्तदागतिसामान्यादित्युक्तप्रकारेणतादृशेब्रह्मज्ञानेसुतरामाधिकारइत्यर्थः । कर्मभेदमितिवक्ष्यमाणानुरोधेनाह ॥ कर्मभेदश्चेति ॥ ज्ञातव्यमिति ॥ एवंसर्वशाखेत्यपि अन्यः अन्यशाखास्थः ॥ एकशाखागतेति ॥ व्रीहिभिर्वायजेतयवैर्वायजेतेत्याद्युक्तेरित्यर्थः ॥ ॐ सलिलवच्चतन्नियमः ॐ ॥ सर्ववेदश्रवणादिना ब्रह्मज्ञातव्यमितिनियमः सलिलवच्च सलिलानांसमुद्रप्राप्तिनियमवदेवेत्यर्थः । भंग्या रीत्या ॥ ॐ दर्शयतिच ॐ ॥ उक्तमर्थंसर्ववेदैरितिश्रुतिर्दर्शयति चशब्दात्स्मृतिश्चेत्यर्थः ॥ १ ॥ सार्वत्रिकेति ॥ सर्वशाखोक्तेत्यर्थः ॥ उपसंहारेति ॥ तत्रतत्रोक्तान्गुणान्युगपत्संगृह्ययोजनेत्यर्थः । ध्यानविधेः निदिध्यासितव्यइत्यस्य ॥ तथाविधेति ॥ सर्ववेदोक्तगुणविषयकस्येत्यर्थः । सर्ववेदोक्तगुणोपसंहारस्याशक्यत्वादितिभावः ॥ ॐ उपसंहारोर्थाभेदाद्विधिशेषवत्समानेच ॐ ॥ अर्थाभेदात् सर्ववेदार्थानांगुणादीनामभेदेनाविभागेनसर्वानविहायेति

यावत् उपसंहारःकार्यः कुतः विधिशेषवत् विधिभिःशिष्यंतउपदिश्यंतइतिविधिशेषाणिविध्युक्तकर्माणिसर्ववेदोक्ता-
नियथाविहितत्वान्नियंतेतद्वदुपसंहारोपिकार्यः । सचोपसंहारःसमानेच योग्यगुणविषयएवकार्यइत्यर्थः । तथाऽवि-
भागेन अन्यथाविहितक्रियालोपइत्येतत्कुतइत्यत आह ॥ तथाचश्रुतिरिति ॥ विद्वांस्तेनैवविधिकृत्स्यान्नान्य
थेत्यन्वयः । ननुसर्ववेदोक्तगुणानित्यत्रगुणशब्दोधर्ममात्रपरः अन्यथाक्रियाद्यसंग्रहापत्तेः । दोषाभावोपिधर्म
एव अतःकथंपृथग्ग्रहणमित्यत आह ॥ अत्रगुणाइतीति ॥ वेदैरित्यस्येति ॥ वेदैरितिबहुवचनस्यात्रि-
त्वेपिसंभवादितिभावः । समानशब्दार्थमुक्त्वातत्तात्पर्यमाह ॥ पूर्णत्वाविरोधिनइति ॥ नत्वयोग्याइति ॥
रोदनादीनांदुःखकार्यत्वेनपूर्णत्वविरोधित्वादयोग्यत्वमितिभावः ॥ अचेतनेति ॥ अचेतनादीनित्रीण्यनु
पास्यानिकुतः निष्फलत्वाद्विपरीतफलत्वाच्चेत्यर्थः ॥ ॐ अन्यथात्वंचशब्दादितिचेन्नाविशेषात् ॐ ॥
शब्दात् आत्मेत्येवेत्यवधारणश्रुतेः अन्यथात्वंप्रागुक्तसर्वोपसंहारस्याकर्तव्यत्वमितिचेन्न अविशेषात् एतेगुणा-
नोपास्याइतिविशेषप्रमाणाभावादित्यर्थः ॥ अनुपसंहारस्यापीति ॥ अवधारणस्यान्ययोगव्यवच्छेदकत्वेनसर्वोपसं-
हारनिषेधकत्वेननिषेधस्यैवसर्वानुपसंहारविधित्वादितिभावः ॥ सावकाशेति ॥ अयोगव्यवच्छेदकत्वेनसावकाशेत्यर्थः
॥ ॐ नवाप्रकरणभेदात्परोवरीयस्त्वादिवत् ॐ ॥ सर्वोपसंहारोनकार्यः कुतः प्रकरणभेदात् परोवरी-
योवैश्वानरादिप्रकरणानांभिन्नत्वाद्भिन्नप्रकरणोक्तगुणानांभिन्नत्वेनोपास्यत्वेनैकेनसर्वेषामनुपास्यत्वात् तर्ह्येकस्मिन्नेवप्रकर-
णेसर्वोक्तिःस्यादित्यत आह ॥ परोवरीयस्त्वादिवदिति ॥ यथासएषोनंतइत्यादिप्रकरणेषुसर्वोत्तमत्वादिकमेवोक्तं
नगुणानंतरंतथाप्रकरणांतरेपीत्यर्थः ॥ कारणाभावादिति ॥ अधिकारिभेदस्यैवप्रकरणभेदप्रयोजकत्वेनसर्वप्रकर-

णानामेकोपास्यगुणप्रतिपादकत्वे अधिकार्यैक्येनप्रकरणभेदोनस्यादित्यर्थः ॥ इत्यादिप्रकरणेष्वपीति ॥ यस्त्वेत- मेवंप्रादेशमात्रमभिविमानमात्मानंवैश्वानरमुपास्तेइतिवैश्वानरप्रकरणमादिशब्देनगृह्यते ॥ ॐ संज्ञातश्चेत्तदुक्तमस्ति- तुनदपि ॐ ॥ सर्वविद्यानांसंज्ञानः भगवन्नामत्वानाम्नांच तद्गुणवाचित्वात्तस्यचसर्वोपसंहारेणध्यानार्थत्वात् सर्वोपसंहारःकार्यइतिचेन् तदुक्तं नन्सर्वोपसंहारस्यकर्तव्यत्वमुक्तमस्माभिःप्राक् नकेवलंनामत्वंयुक्तमितिसिद्धमेतत् किं- तुतदपि नामत्वाएतान्नब्रह्मगःसर्वविद्याइतिश्रुतिरूपप्रमाणमस्तितु अस्त्येवेत्यर्थः ॥ गुणाभिधानस्येति ॥ ज्ञानार्थमथ ध्यानार्थंगुणानांसमुदीरणंत्युक्तेरितिभावः । भगवइतिसनत्कुमारंप्रतिनारदस्यसंबोधनं ॥ इतिहासइति ॥ इतिहा- सश्चपुराणंचेतिद्वंद्वैकसद्भावः वेदानांपंचमं पंचत्वसंख्यापूरकं । इतिहासपुराणाख्यंवेदंग्रंथमध्येमीत्यर्थः । ननुसोहंमंत्रविदे वास्मीतिछंदोगपाठात्कथंनामविदेवेत्युक्तमित्यत आह ॥ यद्वेत्थकिंचिदिति ॥ अध्यगीष्ट अधीतवानसि इदंसनत्कुमा- रोक्तंवाक्यं ॥ मंत्रविदित्यस्यापीति ॥ मंत्रविदितिपाठउपनिषदोपीत्यर्थः ॥ तथाचभाष्यमुपनिषदार्थानुवादपर मितिभावः ॥ २ ॥ उक्तबाधेति ॥ पूर्वाधिकरणोक्तस्योभयोरपिकर्तव्यत्वस्यबाधेत्यर्थः । प्रतिपादनं उक्तरीत्या विरोधः ॥ अन्योन्यनियमेनेति ॥ नियामकेत्यर्थः ॥ ॐ प्राप्तेश्चसमंजसं ॐ ॥ नकेवलमुक्तरीत्योपसंहा- रानुपसंहारयोःकर्तव्यत्वमपितुतद्द्वयंसमंजसंचयुक्तं कुतः प्राप्तेः योग्यतायाव्यवस्थितत्वादित्यर्थः ॥ यस्येति ॥ यस्यो- पासकस्योपासनासमयेस्वभुजवद्भगवतोगुणाःस्पष्टंयुगपत्प्रतिभासंतिसतावंतएवगुणान्ध्यायेदितिसंबंधः ॥ एतदेवेति ॥ योग्यताविशेषादित्यनेनोक्तमेवेत्यर्थः । कंश्चिदित्यस्यानिर्दिष्टयाकिंचिद्गुणपरत्वप्रतीतिनिरासायाह ॥ आनंदादीति ॥ यस्ययावद्गुणाःस्पष्टमित्युक्तयुगपत्प्रतीतियोग्यताविशेषोनात्रचतुर्मुखसंबंधित्वेनोच्यतइत्यत आह ॥ युगपदिति ॥ युग-

पद्ब्रह्मणःसर्वेभासंतेहिगुणाहरेः । तदन्येषांयथायोग्यमितिश्रुतेरितिभावः ॥ ३ ॥ प्रकृतेति ॥ प्राप्तेरितिपूर्वसूत्रप्रकृ-
तेत्यर्थः ॥ ॐ सर्वाभेदादन्यत्रेमे ॐ ॥ इमेब्रह्मादयोनुपसंहर्तृफलापेक्षयाऽन्यत्र विलक्षणेफले भवंति कुतःसर्वाभे-
दात् सर्वेषांगुणानामभेदात् अविभागेनोपसंहारात् तेषांसर्वगुणोपसंहर्तृत्वादितिभावः । असम्यक्त्वमुक्त्यभावेनसम्य-
गित्यस्यमुक्तिविशेषणत्वायोगादाह ॥ सम्यग्भवंतीति ॥ ४ ॥ ज्ञानसाधनेत्युपासनाविशेषणं ॥ उपासनाम्ना-
म्नोच्छेदेति ॥ सामान्यनिर्णयएवविशेषनिर्णयादितिभावः ॥ प्रकृतेति ॥ प्राप्तेश्चसमंजसमित्यत्रयुगपत्प्रतीतिविष-
यत्वेनप्रकृतेत्यर्थः । निर्देशः एतादृशाइतिनिरूपणं ॥ पूर्वोक्तिरिति ॥ भगवद्गुणानांमुमुक्षूपास्यत्वोक्तिरित्यर्थः ।
संख्यानिर्देशाभ्यामक्लृप्तत्वेउपास्यत्वायोगादितिभावः । चतुष्पंचषाइतिसंख्याक्लृप्तिः आनंदादयइतिनिर्देशक्लृप्तिरिति-
ज्ञातव्यं ॥ केषांचिदिति ॥ यद्यानंदादीनांचतुष्पंचषाणामुपास्यत्वंतर्हिसर्वेषांसर्वोपास्यत्वंस्यात् अविशेषादित्यर्थः
॥ नैतइति ॥ आनंदादयोन किंतु प्रकाशवीर्यादयएवेति वक्तुंशक्यत्वादित्यर्थः ॥ ॐ आनंदादयःप्रधानस्य ॐ ॥
प्रधानस्यमोक्षस्यार्थे आनंदज्ञाननिर्दोषात्मत्वाख्याश्चत्वारोगुणाउपास्याइत्यर्थः । ननुसच्चिदानंदोपासनाफलस्यनिर्दो-
षत्वज्ञानानंदादिरूपस्यसर्वापेक्षतत्वेनास्तुतदुपासनस्यावश्यकत्वं आत्मत्वोपासनफलस्यस्वामित्वस्यसर्वमुमुक्ष्वपेक्षितत्वाभा-
वेनकथंतदुपासनस्यावश्यकत्वमित्यतआह ॥ आत्मपदेति ॥ तच्चेति ॥ तदात्मत्वोपासनस्यभगवत्प्रीतिसाधनत्वं
चतुर्थेध्याये । आत्मेतितूपगच्छंतिग्राहयतिचेत्यत्रवक्ष्यतइत्यर्थः ॥ ५ ॥ प्रियशिरस्त्वादीति ॥ उपकारजंसुखंप्रियं
तदेवशिरोयस्यतस्यभावःप्रियशिरस्त्वं तदादीत्यर्थः ॥ उक्तबाधेति ॥ आनंदादयश्चत्वारएवेत्युक्तबाधेत्यर्थः । सा
मान्यस्यैवसर्वोपास्यत्वंनविशेषस्येत्यतआह ॥ अन्यथेति ॥ विशेषोपासनस्यैवसम्यगुपासनात्वादितिभावः ॥ ॐ प्रि-

यशिरस्त्वाद्यप्राप्तिरुपचयापचयौहिभेदे ॐ ॥ सर्वेषांमुमुक्षूणांप्रियशिरस्त्वाद्यप्राप्तिः प्रियशिरस्त्वादिगुणोपासनाप्राप्तिर्नास्ति कुतः हियस्माद्भेदेफलतारतम्यार्थमुपचयापचयौ उपासनायाःवृद्धिह्रासावपेक्षितौ तस्मादित्यर्थः ॥ आनंदादिश्रुतीनीति ॥ तेयेशतंमानुषाआनंदाःसएकोमनुष्यगंधर्वाणामानंदइत्याद्यानंदतारतम्यप्रतिपादकश्रुतीत्यर्थः ॥ यथायोग्यानीति ॥ स्वयोग्यानगुणसमुदायानुपास्यास्थितस्यैव मुक्तिगमकमपरोक्षज्ञानरूपंफलंभवेत् अन्यत्साधनंनैवास्ति कुतः भगवतोनित्यैकाग्र्यव्यंग्यताहेतुतः नित्यंचित्तस्यस्वविषयत्वाख्यज्ञानाख्योपासनैवापरोक्षविषयत्वाभिमितात् तद्विशेषैर्गुणविशेषैः प्रियशिरस्त्वादिभिरयोग्यैःस्मृतैर्ध्यातैरपिसाक्षाद्दृशिरपरोक्षज्ञानंनोभवेदित्यर्थः । यद्वामुक्तिगंफलं आनंदादिकंकुतइत्यतस्तस्यापरोक्षज्ञानसाध्यत्वात्तस्यचोपासनासाध्यत्वादित्याशयेननित्येत्याद्युक्तमितिध्येयं ॥६॥ ॥ उपसंहारोक्त्यनुपपत्तीनीति ॥ एकस्मिन्प्रकरणेपिगुणचतुष्टयोक्तिसंभवेनतदुपासनायतत्रोक्तगुणानांयुमपद्बुध्यारोहरूपोपसंहारानपेक्षणादितिभावः ॥ मध्यमेति ॥ चतुष्टयमध्यवर्तीत्यर्थः । प्राक् उपासनाभ्यासात् ॥ ॐ इतरेत्वर्थसामान्यात् ॐ ॥ तुरेव इतरेमध्यमगुणाःदेवादिभिरुपास्याएव कुतः अर्थसामान्यात् अर्थेस्वस्वप्राप्यफलेसामान्यात् साम्यमपेक्षेत्यर्थः ॥ यद्वेति ॥ देवतानांयोयोभावःस्वभावविशेषोभविष्यति ब्रह्मातंतंज्ञात्वातत्तत्प्राप्तौतत्तत्प्राप्त्यर्थमीशतुःसद्गुणानधिकादिभ्यआदिशत्युपदिशति अथतेधीकारिणस्तान्गुणान्विचिंत्यध्यात्वाज्ञानजन्यपरमात्मप्रसादेनतत्तद्भावंप्राप्नुवंतीत्यर्थः ॥ ७ ॥ उक्तमिति ॥ उपसंहारोर्थभेदात्नवाप्रकरणभेदादितिसूत्राभ्यांक्रमेणोक्तंतयोःकर्तव्यत्वमित्यर्थः ॥ विधिरस्तीनि ॥ प्रमाणत्वेनेतिशेषः। उक्तंविधिशेषत्वादित्यनेन विधिशेषवदित्यत्रविहितत्वेनोक्तोगुणोपसंहारःकिंसफलः उतनिष्फलः आद्येपिकिंमोक्षफलकं उतान्यफलकेति विकल्पंमनसिनिधायाद्यंदूषयति ॥ अनुपसंहारेपीति ॥

आनंदादयःप्रधानस्येत्यादावित्यर्थः। द्वितीयंनिराकरोति॥ **फलांतरस्येति**॥फलांतराविरक्तानामेवोपासनाधिकारित्वादि
तिभावः। तृतीयंदूषयति॥ **व्यर्थविधेरिति** ॥ अनादरणीयत्वादितिभावः ॥ **यदप्युक्तमिति** ॥ संज्ञातश्चेत्तदुक्त
मित्यत्रेत्यर्थः। अस्तुवागुणोपसंहारस्योपसंहारार्थत्वंतथापिसर्वोपसंहाराभावेपिमोक्षप्राप्तेरानंदादयः प्रधानस्येत्यादावुक्त-
त्वात्तदन्यफलस्याचानपेक्षितत्वाद्विफलासौनकर्तव्यइत्यभिप्रेत्याह ॥ **उक्तंचेति** ॥ **यदपीति** ॥ उक्तमित्यनुवर्तते
नवाप्रकरणभेदादित्यत्रेत्यर्थः ॥ ॐ **आध्यानायप्रयोजनाभावात्** ॐ ॥ सर्वगुणोक्तिराध्यानायासंमतात्सर्वगुणोप
संहारेणध्यानार्थमेव कुतः तद्विनाप्रयोजनाभावात् ॥ **मुक्तानंदेति** ॥ मुक्तावानंदातिशयेत्यर्थः। ननुगुणाभिधानस्योपसं
हारार्थत्वेसर्वेप्यत्रवोच्चेरन्नित्यतआह ॥ **अतएवेति** ॥ ज्ञानार्थमेवेत्यादौ ज्ञानंपरोक्षज्ञानं ज्ञानात्कर्मकृतेरपीत्युभयानुसा
रेणाह ॥ **ब्रह्मकर्मविद्याभिरिति** ॥ तत् श्रवणादि साक्षात्फलहेतुत्वादितिभावः फलस्यफलवतः ॥ **प्रयोजनत्वेने-**
**ति** ॥ गुणकथनप्रयोजनत्वसंभवइत्यर्थः। तथाचसाक्षात्फलहेतुत्वान्मुख्यप्रयोजनत्वमितिभावः। विहितस्यश्रवणादेःतत्
जनोल्लेकादि ॥ ॐ**आत्मशब्दाच्च**ॐ ॥ अनुपसंहारोप्यस्ति कुतः आत्मेत्येवोपासीतेत्यात्मत्वमात्रोपासनाविधायका
त्मशब्दोपेतश्रुतेरित्यर्थः ॥ **उक्तत्वादिति** ॥ आत्मेत्येवेत्यवधारणमनात्मत्वनिवृत्त्यर्थमितिभाष्येणेत्यर्थः ।
॥ **प्राप्तेश्चसमंजसमितिन्यायेनेति** ॥ आत्मत्वमनात्मत्वहानेनावश्यमुपास्यमेवेत्ययोगव्यवच्छेदकस्यावधारणस्य
यन्ययावद्गुणाःस्पष्टंमतिभामंत्युपासने। युगपत्स्वभूजायद्ध्यायेत्तावतएवसइत्युक्तरीत्या आत्मशब्देनयस्ययावंतोगुणाः
युगपत्प्रतीयंतेतेननावंतएवोपास्याइत्यन्ययोगव्यवच्छेदकत्वमापिनतयोर्विरोधइतिभावः ॥ ८ ॥ **उक्तेति** ॥ आनंदाद
यइत्युक्तेत्यर्थः ॥ **उभयथोक्तिरिति** ॥ आनंदादयःप्रधानस्येत्यात्मशब्दाच्चेत्युभयोक्तिरित्यर्थः ॥ ॐ **आत्मगृही**

निरितरवदुत्तरात् ॐ ॥ आत्मशब्देनेतरगुणानांगृहीतिर्ग्रहणमस्ति कथमितरवत् यथासत्यंज्ञानमितिवाक्यगतसत्या
दिपदानांसत्यत्वाद्यभिधायित्वं तथास्यापिसच्चिदानंदाद्यात्मकत्वं कुतः उत्तरात् तथाभिधायकादत्रैवेतइत्युत्तरवाक्यादि
त्यर्थः ॥ ९ ॥ प्रमाणत्वोक्तिः आत्मशब्दस्यातदुक्तानंगीकारेतस्यैवाप्रामाण्यप्राप्तेरितिभावः ॥ ॐ अन्वयादितिचे-
त्स्यादवधारणात् ॐ ॥ आत्मशब्देसर्वगुणानामन्वयात् तस्यसर्वगुणवाचित्वादितियावत् तस्यानुपसंहारित्वंयुक्तमिति
चेत् स्यादात्मशब्दस्यसर्वगुणवाचित्वं किंतु ब्रह्मादीन्प्रत्येव नान्यान्प्रति कुतः अवधारणात् अन्ययोगव्यवच्छेदपरात्मे
त्येवेत्यवधारणात् ॥ आप्तव्याप्तेति ॥ आप्तव्यानांगुणानामाप्तेःप्राप्तत्वादित्यर्थः ॥ अयमिति ॥ श्रुतआत्मेत्ये
वेत्यन्ययोगव्यवच्छेदकपदावधारणयुक्तात्मशब्दयुक्तइत्यर्थः ॥ श्रुतचतुर्गुणेति ॥ सत्योज्ञानःपरमानंदरूपआत्मेत्ये
वंनित्यदोपासननंस्यादितिचतुर्गुणोपासनंश्रुतवतइत्यर्थः । विभ्रमकरः संशयजनकः ॥ अवधारणविरोधादिति ॥
आत्मशब्दोक्तसर्वगुणानुपासने आत्मशब्दोक्तमुपास्यमेवेत्ययोगव्यवच्छेदपरावधारणविरोधादित्यर्थः । नन्वेवंतर्हिसर्वे
षांसर्वगुणोपास्तिःस्यादित्यतआह ॥इयांस्त्विति॥ अधिकरोमीति ॥ स्वविहितकारितयासंग्रहणातीत्यर्थः ॥१०॥
॥ उक्तेति ॥ परमतःसेतून्मानसंबंधभेदव्यपदेशेभ्यइत्यनेनोक्तेत्यर्थः ॥ लोकदृष्टिरिति ॥ लोकेलौकिकस्यैवपु-
त्रादेर्ध्यानदर्शनादितिभावः । नध्यानाभावप्रसंगोलौकिकानांध्यानसंभवादित्यतआह ॥ अलौकिकानामिति ॥
विपर्ययेपर्यवसानमाह ॥ कर्तव्यंचेति॥ निदिध्यासितव्यइतिश्रुतिविहितत्वादितिभावः । नन्वस्तुलौकिकानामेवध्या
नंतथापिनभगवद्गुणानामलौकिकत्वहानिः । योषितमग्निंध्यायीतेतिवदविद्यमानध्यानस्यापिसंभवादित्यतआह ॥ नचा
विद्यमानएवेति ॥ लौकिकाएवेति ॥ तथाचपरमतइत्युक्तमलौकिकत्वमयुक्तमितिभावः ॥ ॐ कार्याख्या-

**नादपूर्वं** ॐ ॥ भगवद्गुणजातमपूर्वमलौकिकंध्येयं कुतः कार्यस्यध्यानकार्यस्य मोक्षस्याख्यानात् अलौकिकत्वा
भिधानादित्यर्थः ॥ **इंद्रादाविवेति** ॥ यःसहस्राक्षःसइंद्रइतिवद्भगवद्गुणानांयत्सर्वविषयंतदीश्वरज्ञानमित्याद्याद्युप
देशेनतदविदुषामपिप्रतीतेरितिभावः ॥ ११ ॥ इत्युक्तोपासनेतितदुक्तफलोपासनेत्यर्थः ॥ **समाविषमंचेति** ॥
समविषमयोरन्यतरादित्यर्थः । तादृशमुभयान्यतरत् ॥ **स्थानैक्यस्येति** ॥ उभयोरपिसायुज्यभाक्त्वादितिभावः ।
॥ **गुणतारतम्यस्येति** ॥ आनंदादितारतम्यस्यश्रुतिसिद्धत्वादितिभावः ॥ **तादृशमिति** ॥ फलवत्समविषमोभ
यरूपमित्यर्थः ॥ **विरुद्धत्वेनेति** ॥ उभयोपासनस्यसर्वगुणक्रियावतारादौसाम्यवैषम्यायोगात् वैषम्येसाम्यायोगा
दितिभावः ॥ ॐ **समानएवंचाभेदात्** ॐ ॥ एवंच एवमपित्रिविक्रमादिक्रियाविशेषाणामपूर्वत्वेपिसमानेनित्यवि
क्रांत्यादिसामान्यक्रियायां अभेदादंतर्भावेनैवतत्ध्यानंब्रह्माण्याकार्यंनपृथगित्यर्थः ॥ **उक्तलिंगेनेति** ॥ स्थानैक्यगुण-
तारतम्यरूपेणेत्यर्थः । त्रैविक्रमाद्यास्तुनित्यविक्रांतिपूर्वकं कदाचिल्लोपयेद्देवेत्युक्तत्वादाह ॥ **सदेति** ॥ **पृथक्त्वेनेति** ॥
त्रिविक्रमत्वादिविशेषांगीकारेणेत्यर्थः ॥ ॐ **संबंधादेवमन्यत्रापि** ॐ ॥ अन्यत्रापि त्रिविक्रमत्वादिक्रियाविशेषापि
एवमुपसंहारः कार्योविरिंचेन तासामीशेनसंबंधात् तादात्म्यान्नित्यत्वादित्यर्थः । ननुयदित्रिविक्रमत्वादीनांपरमात्मैक्यं
कथंतर्हितत्संबंधस्तेषां संबंधस्यभेदसापेक्षत्वादित्यतआह ॥ **संबंधइति** ॥ १२ ॥ उक्तं अनुपसंहारप्रमाणत्वं ॥ उक्त
**मत्रेति** ॥ अन्वयादित्यत्रेत्यर्थः ॥ **प्रातिस्विकेति** ॥ प्रतिव्यक्तिगतेत्यर्थः । ननुशब्दस्यपुरुषव्युत्पत्त्यनुसारेणगुणा
भिधायकत्वमितिप्रातिस्विकनियमोपपत्तिरित्यतआह ॥ **संभवतीति** ॥ कालभेदेनव्युत्पत्तेर्वैशिष्ट्यावैशिष्ट्यसंभवेनबहु
गुणध्यानयोग्यानांकदाचिद्बहुगुणान्तद्योग्यानांतुकदाचिदल्पगुणान्बोधयतीत्यतोऽस्यैतावंतएवेत्यादिनियमोनसंभवतीत्य

र्थः ॥ ॐ नवाविशेषात् ॐ ॥ आत्मशब्देनसर्वगुणगृहीतिर्नवास्तु कुतः विशेषात् योग्यताविशेषादित्यर्थः ॥ अ
योग्येति ॥ अयोग्यप्रतीतिर्व्युत्पत्तिवशेनजातापिगुणप्रतीतिर्नप्रतीतिः ध्यानोपयोगित्वेनविवक्षितप्रतीतिर्नभवतीत्यर्थः
॥ ॐ दर्शयतिच ॐ ॥ इतरेषांसर्वगुणाप्रतिपादनंसर्वान् गुणानितिश्रुतिर्दर्शयतीत्यर्थः ॥ स्वयोग्यानिति ॥
नानिरूपचरितसर्वानितिभावः ॥ युगपदिति ॥ व्युत्पत्तिवशात्तेषामपिक्रमेणयोग्यगुणप्रतीतिसंभवादितिभावः ॥१३॥
उक्ताः भक्ताभिलषितसेचकाः मोक्षमात्रस्य आनंदाद्युपासनेनैवसिद्धेःनमुमुक्षुत्वंतदुभयोपासनंतदुभयप्रयोजकमित्यतआह
॥ मोक्षेचेति ॥ फलंचेति ॥ अतोनोपासनाभावेतदुभयलाभइतिभावः । यादृशः यद्गुणविशिष्टः भावितः ध्यातः
असम्यगुपास्तिःप्रसज्यतइतिशेषः ॥ ॐ संभृतिद्युव्याप्त्यपिचातः ॐ ॥ संभृतिः सम्यग्भरणं द्युव्याप्तिः प्रका
शेनव्याप्तत्वं तेनसर्वोपास्ये कुतः अतश्चयोग्यताविशेषादेवेत्यर्थः ॥ भगवद्रूपेति ॥ ध्यानकालेप्रतीयमानंभगवद्रूपंनप्र
काशेनविनाप्रतीयेत् किंतुयत्किंचित्प्रकाशयुतमेव अतस्तदुपासनेनैवतदपेक्षितप्रकाशलाभइत्यर्थः ॥१४॥ प्रकृतइति ॥
उपसंहारोर्थाभेदादित्यत्रेत्यर्थः । ननूपसंहाराभावेकथंतत्रतत्रोक्तगुणोपासनं बुद्धौयुगपदनारोहादित्यतआह ॥ येहीति ॥
॥ ॐपुरुषविद्यायामपिचेतरेषामनाम्नानात्ॐ ॥ अपिसर्वविद्योत्तमायां पुरुषविद्यायां पुरुषसूक्तोक्तविद्यायां इत
रेषांकेचिद्गुणानां अनाम्नानात् अपठितत्वात्केषांचिदेवपठितत्वान्नैकत्रसर्वगुणोक्तिरित्यर्थः । ननुपुरुषसूक्तमेवगुणप्रति
पादकविद्यानतुतत्रतादृशविद्यांतरोक्तिः । अदर्शनात् तत्कथंपुरुषसूक्तोक्तविद्यायामित्युक्तमित्यतोव्याचष्टे ॥ पुरुषसूक्त
मित्युक्तेति ॥ पुरुषसूक्तमित्येवंप्रमाणांतरोक्तविद्यायामित्यर्थः । चतुर्मुखस्येत्यनंतरंसर्वविद्याभ्यइतिशेषः ॥ संख्या
साम्येति ॥ स्वोपास्यगुणसमसंख्याकगुणांतरप्रतिपादनस्यापिसंभवेनस्वोपास्यानामेवतत्रोक्तनियमाभावादित्यर्थः॥१५॥

॥ नियमेति ॥ चतुष्टयनियमेत्यर्थः ॥ अम्रइति ॥ स्वतोनगच्छतीत्यगं विधंनयतीत्यग्निनाममूहरेयातुधानस्यरा क्षसस्यत्वचंशरीरंभिंधिविदारयेत्यर्थः ॥ तंप्रत्यंचामिति ॥ प्रत्यंचंप्रथक्स्थितंतंराक्षसमर्चिषाविष्फुलिंगेमर्मन्मर्म- स्थले विध्य वेधयित्वेत्यर्थः ॥ परेति ॥ परापरेणतपसातुष्टस्त्वंयातुधानान्श्रृणीहिजहीत्यर्थः । ननुफलापेक्षाया मप्यविहितत्वात् । अकर्तव्यत्वमित्यतआह ॥ प्राणइति ॥ इतरप्राणाधारत्वेनशालाप्रधानवंशस्थानीयोप्राणःमु- रूयप्राणस्त्वात्वां हास्यति त्यजिष्यति । त्वंमरिष्यसीतियावत् इत्येनंब्रूयादित्यर्थः ॥ आततायिनामिति ॥ अ- ग्निदोगरदश्चैवशस्त्रपाणिर्धनापहः क्षेत्रदारापहर्ताचषडेतेह्याततायिनइत्युक्तेःशस्त्रपाणिनमित्यर्थः । हंतुमुद्यतमिति शेषः ॥ ॐवेदाद्यर्थभेदात्ॐ ॥ वेदभेदनादिगुणजातं नसर्वोपास्यं कुतः अर्थभेदात् अर्थस्यतत्फलस्यभेदात् विलक्षणत्वादित्यर्थः । फलात् अहिंसारूपात् आकांक्षाक्रमेणस्मृतिंव्याचष्टे ॥ भिंधिविद्धीत्यादिना ॥ एकताश ब्दार्थःसाम्यमिति । साधारण्यमित्यर्थः तत्तात्पर्यमाह ॥ एतादिति ॥ १६ ॥ अतिशयेनेति ॥ तथात्वेत. स्यमोक्षार्थमेवानुष्ठितव्यत्वेनसोपाधिकत्वमात्परित्यर्थः ॥ क्रियांनरेति ॥ यज्ञादिक्रियाश्रवणमित्यर्थः ॥ कर्तव्या नवेति ॥ विहितावाक्रियते उताविहितावाक्रियतइत्यर्थः ॥ फलप्राप्तिप्रसंगादिति ॥ कृष्यादेस्तद्विधिविषयपुरुषा नुष्ठितस्येवतद्विध्यविषयपुरुषानुष्ठितस्यापिधान्यादिफलकत्वदर्शनादितिभावः । इष्टापत्तिंपरिहरति ॥ तथाचेति ॥

॥ ॐ हानौतूपायनशब्दशेषत्वात्कुशाच्छंदस्तुत्युपगानवत्तदुक्तं ॐ ॥ हानौसंसारहानिरूपमुक्तौ उपास नमस्त्येव कुतः यतस्तदुक्तं ननु मुक्तोपासनं एतत्सामगायन्नास्तेतिश्रुत्युक्तं तदपिस्वेच्छयानविधितः उपासनाविधीनामुपाय नशब्दशेषत्वात् उपायनंमोक्षः तस्यशब्दःब्रह्मविदाप्नोतीतिवाक्यंतच्छेषत्वात् तदर्थोपयुक्तार्थपरत्वात्विध्यभावेस्वेच्छा 

मात्रेणकथंतत् कुशाच्छंदस्तुत्युपगानवत् कुशैः कुशग्रहणेनाछंदेनस्वेच्छया स्तुतिमंत्रः उपगानंसाम तदुभयाध्ययनवदि
त्यर्थः ॥ **तत्कृतहानि** ॥ दृष्टांतमात्रस्यासाधकत्वादितिभावः । शेषोक्तिंव्यनक्ति ॥ **ब्रह्मज्ञानेनेति** ॥ अप्रयोजकत्वं
परिहरति ॥ **मोक्षसिध्यर्थंचेति** ॥ विधेःफलावसानत्वादितिभावः । एवंमुक्तोपासनस्यविधिनिबंधनत्वाभावमं
गीकृत्यस्वेच्छयैवोपासनमित्येतन्नयुक्तमित्युक्तं । इदानींतस्यविधिनिबंधनत्वेपिनदोषइत्यतआह ॥ **किंचोपासनेति** ॥
उपायनशब्दशेषत्वादित्यनेनमुक्तोपासनस्यमोक्षफलकत्वाभावसिद्धावपिफलांतरार्थत्वाभावासिद्धेरितिभावः ॥ ॐ **सांप
रायेतर्तव्याभावात्तथाह्यन्ये** ॐ ॥ नानिष्टपरिहारार्थंमुक्तोपासनं कुतः सांपरायेमोक्षेतर्तव्यस्यनिरसनीयस्यानिष्ट
स्यैवाभावात् कुतः हियस्मादन्येशाखिनःस्तथापठंतीत्यर्थः । नहिनिष्फलमित्युक्तदोषंनिरस्यति ॥ **फलाभावेपीति** ॥
**हृन्नतस्यतेति** ॥ अनेनहृद्ययनात्धृदयमित्युक्तंभवतिषष्ट्यर्थसंबंधमेवाह ॥ **शेषभूतइति** ॥ तद्भृत्यादिसंबंधविशेषवा
न्भवतीत्यर्थः ॥ २७ ॥ **प्रासंगिकत्वादिति** ॥ मुक्तावुपासनस्यानियमेनकर्तव्यत्वसमर्थनेकर्मविषयेतत्स्मरणादितिभावः
॥ ॐ **छंदतउभयाविरोधात्** ॐ ॥ मोक्षेकर्मकरणंछंदतःस्वेच्छयैव कुतः उभयोर्विधिबंधप्रत्यवाययोर्विरोधाभावादिति
भावः ॥ ॐ **गतेरर्थवत्वमुभयथान्यथाहिविरोधः** ॐ ॥ नमोक्षेविधिबंधप्रत्यवायौ कुतः हियस्माद्गतेर्मोक्षस्यार्थवत्वं
पुरुषार्थत्वमुभयथाविधिबंधप्रत्यवायाभावत्वेनैवास्तितस्मात् अन्यथातत्रापिविधिबंधप्रत्यवायसत्वेमोक्षत्वविरोधइत्यर्थः ॥ **मो-
क्षत्वविरोधादिति** ॥ संसाररूपप्रतियोगितन्निवृत्तिरूपमोक्षयोर्वैलक्षण्यस्यावश्यकत्वादितिभावः ॥ **वैलक्षण्यांतरेपीति** ॥
स्वरूपानंदाविर्भावादिरूपेणेत्यर्थः ॥ **व्याहतत्वादिति** ॥ तादृशसंबंधेसतिव्यक्त्ययोगादितिभावः ॥ उपपादनाय साधनाय ॥ **ई-
श्वरकर्मणीति** ॥ मुक्तानयज्ञादिकर्मकरणनियमवंतःतत्करणाकरणयोर्विधिबंधप्रत्यवायशून्यत्वादित्यनुमानेयोयत्करणाकर

णयोर्विधिबंधप्रत्यवायरहितःसन्तत्करणनियतिमानितिसामान्यव्याप्तिर्वक्तव्या साचनयुक्ता । सृष्ट्यादिकरणाकरणयोर्विधिबंधप्रत्यवायरहितस्यापीश्वरस्यतत्करणनियमएवास्तीतिव्यभिचारादितिभावः ॥ ॐ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॐ ॥ मुक्ताःस्वेच्छयाकर्मकुर्वंतीत्ययमर्थः उपपन्नोयुक्तः कुतः तल्लक्षणार्थोपलब्धेः तत्कर्मलक्षणंनिमित्तंयस्य मोक्षस्यतद्रूपार्थस्यप्रयोजनस्योपलब्धेः प्राप्तत्वात्कथंलोकवत् यथालोकेयागविधिपूर्वकंकृतस्यविष्णुक्रमणस्यकर्मणः नतत्पूर्त्यनंतरमपिकरणंतथेत्यर्थः । प्रयोगप्रकारमाह ॥ इदमुक्तमिति ॥ मुक्तैर्नियमेनक्रियमाणायामुपासनायांव्यभिचारवारणायविशेषहेत्वभावेसतीत्युक्तं । तत्रनित्यज्ञानस्वरूपत्वसंस्कारपाटवादिविशेषहेतुरस्तीतिभावः ॥ १८ ॥ अनियमसाधनादिति ॥ केषांचिदस्तिकेषांचिन्नास्तीतिव्यवस्थाभावसाधनादित्यर्थः ॥ फलद्वैविध्येति ॥ स्वर्गादौतत्साधकसर्वप्राप्यत्वस्यज्ञानेचकैश्चिदेवप्राप्यत्वस्यचदर्शनादितिभावः ॥ ॐ अनियमःसर्वेषामविरोधाच्छब्दानुमानाभ्यां ॐ ॥ सर्वेषांज्ञानिनांमोक्षेऽनियमःउक्तव्यवस्थानास्ति कुतः आविरोधात् अनियमांगीकारेविरोधाभावात् प्रत्युतनकश्चिदितिश्रुत्याज्ञानित्वानुमानाभ्यामनियमस्यसिद्धत्वादित्यर्थः ॥ उपसंहारानुमानेति ॥ विप्रतिपन्नाःसार्वत्रिकगुणोपसंहारिणोमोक्षाधिकारित्वाद्ब्रह्मवदित्याभासानुमानेनतुल्यमित्यर्थः ॥ बाधकेति ॥ साधकबाधकभावाभाववदित्यर्थः ॥ साधकेति ॥ श्रुत्यादिरूपेत्यर्थः ॥ १९ ॥ अधिकारनियमेति ॥ केषांचिदेवसर्वगुणोपासनंनसर्वेषामितिव्यवस्थेत्यर्थः अदृष्टिः नियतेः ॥ नचात्रेति ॥ प्रमाणंचेत्यन्वयः । अथानंदस्यमीमांसेत्यानंदतारतम्यश्रुतिरेवतत्रप्रमाणमित्यतआह ॥ आनंदश्रुतिरिति ॥ ॐ यावदधिकारमवस्थितिराधिकारिकाणां ॐ ॥ आधिकारिकाःब्रह्मादिजीवविशेषाःतेषांयावदधिकारमधिकारानुसारेणैवमुक्तावप्यवस्थितितारतम्येनाव

स्थानं । नतुशासनाप्रयत्नतागतम्येनेत्यर्थः । ननुवसिष्ठसाम्यंसमभीप्समानंप्रच्यावयन्निच्छयाशापमापेत्यादिनामांडव्या
दीनां अधिकाराधिकप्रयत्नदर्शनात्कथमेतदित्यतआह ॥ कथंचिदिति ॥ यमंप्रतिशापप्रदानादिरूपोविघ्नोभवती
त्यर्थः । वचनात् न्यायविवरणे ॥ ॐ अक्षरधियांत्ववरोधःसामान्यतद्भावाभ्यामौपसदवत्तदुक्तं ॐ ॥ अ-
क्षरधियांब्रह्मज्ञानिनांचमुमुक्षूणांनां अप्रमत्वेप्यविरोधः परस्परंविरोधोनास्ति कुतः ब्रह्मज्ञानित्वादेव किंचसामा
न्यतद्भावाभावाभ्यांसामान्यात् मत्सरादिदोषाभावसाम्यात् तथातद्भावात् तदितितत्वं तेभ्यः उत्तमेभ्यः तस्यज्ञा
नोपदेशाख्योपकारस्यतेषांनानानांभावात्सत्वात् कथं औपसदवत्अग्निप्यवत् कुतः तदुक्तं तत् अप्रमत्वेपिविरोधाभाव-
इत्येतत् नानाविधाइतिश्रुत्युक्तमित्यर्थः ॥ ब्रह्मधीत्वादीनि ॥ ब्रह्मज्ञानस्यविषयवैराग्यजन्यत्वेनतेषांविषयलंपटत्वा
भावइत्यर्थः । अन्यथाप्रमत्वस्यनप्रयोजकत्वे ॥ अन्यत्वेनि ॥ बाधकस्यपरिहृतत्वादेवेत्यर्थः । कथंबाधकाभावमात्रे
णमुक्तपरत्वनिर्णयइत्यतआह ॥ तथाचेति ॥ अध्वर्यूणांश्रुतौनरादिब्रह्मपर्यंतमुक्तानामानंदामिथःशताधिकःपृथक्पृथगि
त्यन्वयः ॥ ८० ॥ प्राणावसानत्वइति ॥ प्राणावधिकत्वेत्यर्थः । निरवधिकत्वे प्राणावधिकत्वाभावे ॥ नामा
दीनि ॥ नामवाङ्मनःसंकल्पचित्तज्ञानविज्ञानबलान्नापस्तेजआकाशस्मराशाप्राणाःक्रमेणोत्तमत्वेनोक्ताइत्यर्थः ॥ उभय
थासत्वेसत्वेपि ॥ सोत्तरत्वेनि ॥ सोत्तमत्वेत्यर्थः ॥ ॐ इयदामननात् ॐ ॥ उपासनाधिकारिणां इयत् प्रा
णावधिकत्वमेव कुतः आमननात् प्राणोवावेतिश्रुतौतथोक्तत्वादित्यर्थः ॥ ॐ अंतराभूतग्रामवदितिचेत्तदुक्तं ॐ ॥
भूतानांनामादीनांग्रामवत्समुदायवत् प्राणोप्यंतरापरमात्मानंविना अन्योत्तमोपेतइतिचेन्न कुतः तदुक्तं तत्सितंत्रं
तत्रप्राणाधिकाभावेनतत्प्रमाणंप्राणोवावेत्युक्तंयतइत्यर्थः ॥ वाग्वेति ॥ वाक्स्वाहादेवीनाम्नउपासकाशान्द्भूयसीश्रे
७५

मत्वं ॥ निरूपचरितेति ॥ विज्ञानाद्युत्तमत्वादितिभावः ॥ ॐ सैव हि सत्यादयः ॐ ॥ सत्यादयो हि सापरदेव
तैवेत्यर्थः ॥ विजिज्ञासेति ॥ विशेषेणज्ञास्यामि ॥ तद्गुणत्वेनेति ॥ विज्ञानात्मकस्य स्वरूपस्यानि [illegible] गु
णत्वमविरुद्धमितिभावः ॥ तद्विनाभूतेति ॥ यद्वावै विजानात्यथ सत्यं वदतीनाविजानन्सत्यं वदतीत्यन्वयव्यतिरे
कोक्तिपूर्वकं विज्ञानोक्तिरित्यर्थः ॥ तथोत्तरत्रापीति ॥ विज्ञानं भगवो विजिज्ञास इत्यादि [illegible] सायां [illegible] नु
तेथ विजानाति नामन्वा विजानातीत्यादिना मत्याद्यभिधानादित्यर्थः ॥ अभेदादुक्तोरिति ॥ सत्यं भगवो विजिज्ञास-
इत्यादिनामत्यादिभगवद्गुणविजिज्ञासायां यदा हवै विजानातीत्यादिना विज्ञानादीनां सत्यादिगुणत्वेनोक्तेर्भवद्भूमानं भगवो
विजिज्ञास इति भूमाख्यभगवद्गुणजिज्ञासायां यत्रनान्यत्पश्यतीत्यादिना दृश्यत्वादेरेवोक्तत्वेन तद्गुणत्वेनाइं [illegible] रेवाभावात्
था [illegible] तद्गुणत्वेनोक्तेरभावादितिभावः ॥ सवाएषइति ॥ सएषोधिकारी एवंशृण्वन्नेवंमन्वानः एवंध्याय
न्नेवंपश्यन्मुक्तःसन्नात्मरतिःपरमात्मनारतिरत्यंतबुद्धिर्यस्य सतथोक्तः परमात्मनाक्रीडत इत्यात्मक्रीडःपरमात्मनास्वयंसंश्लेष
पःसन्मिथुनीभवतीत्यात्ममिथुनः परमात्मनैवाभिव्यक्तःस्वरूपानंदोयस्यासावात्मानंदः स्वातं [illegible] भवेत्तराद्
आत्मनैवनामत्यसौभवतीतिस्वराडित्यर्थः ॥ अंहकारात्मज्ञानादिति ॥ एतद्वाक्य [illegible] गु [illegible] दिति
भावः । [illegible] पूर्णमित्यादीत्यादिग्रंथेन विज्ञानपूर्णमि [illegible] ॥ २३ ॥ [illegible]
[illegible] ॥ [illegible] नात्मासमाणोपपर्यवक्तव्यत्वादितिभावः ॥ सन्निधा [illegible] ति ॥ [illegible]
स्यत्वादितिभावः । [illegible] तयोर्योग्यव्यावृत्तये विशेषणं मुक्तव्यावृत्तये विशेष्यं । [illegible] ॥ ॐ कामादि
तरत्रचारणनादिभ्यः ॐ ॥ श्रीः कामात् ईच्छानुसारिस्वेच्छयैव तत्रैवसमीपे मूलरूपेणस्थित्वा इतरत्र भूम्यादावप्रतरं

ति कुतः आयतनादिभ्यः सर्वमायतनमाश्रयोयस्याःसातथेतिसर्वगतत्वादिप्रतिपादकशब्देभ्यइत्यर्थः ॥ जननेपीति ॥
जन्मवतांचमनुष्याणांनैवंभावइतिभावः ॥ नापीति ॥ तेषांमूलरूपेणसतामेवार्जुनादिरूपेणजननादितिभावः ॥ कर्मेति ॥
तेषांचजननेकर्मैवनिमित्तमितिभावः । सर्वचेतनेछास्वरूपत्वस्यदुःखादिसर्वविषयेछावत्वस्यवासंभवादाह ॥ सर्वमिति ॥
अविकृतिः विकाररहिता ॥ तदभावेति ॥ प्रकृत्यभावेत्यर्थः । कृतकृत्यत्वेनमुक्तत्वेनयत्कृष्णपदाब्जंसात्वतैःपंचरात्रैः
॥ ॐ आदरादलोपः ॐ ॥ रमायाअलोपः उपासनालोपाभावः आदरात् भक्तेरेवेत्यर्थः । ननुलक्ष्मीवदितरेषाम
नाद्यनंतकालेएकप्रकारेणोपासनाभावात्कथमेवमुक्तामित्यतोऽन्याचष्टे ॥ एवंनिरुपाधिकेति ॥ ॐ उपस्थितेस्तद्वच
नात् ॐ ॥ श्रियोनित्यमुक्तत्वं उपस्थितेः उप परमात्मसमीपे स्थितेः सर्वदास्थितत्वादेव कुतः तद्वचनात् तस्यभग
वतोनित्यसंबंधस्य द्वावेतावित्यनेनप्रतिपादनादित्यर्थः ॥ २४ ॥ समस्तस्य सर्वस्य व्यक्तं किंचित् विधेःश्रोतव्यइ
त्यादेः दृष्टंभवति ॥ नचेति ॥ कृत्यंचेत्यन्वयः ॥ ॐ तन्निर्धारणार्थनियमस्तद्दृष्टेःपृथग्घ्यप्रतिबंधःफलं ॐ ॥ तन्निर्धारणं
तस्यपरापरत्वस्यानिर्धारणंनिश्चयः अर्थनियमः अर्थस्य वेदार्थस्य अयमेवेतिनियमःनिश्चयः एतदुभयं तद्दृष्टेःतस्यपरमात्म
नोदृष्टेः अपरोक्षज्ञानात्पृथक् अन्यदेव अप्रतिबंधः ज्ञानप्रतिबंधकनिवृत्तिः तदुभयफलमित्यर्थः ॥ पृथगेवेति ॥
अपृथक्केकिलश्रवणमननाभ्यांपूर्तिःस्यादितिभावः ॥ कथमिति ॥ निष्फलत्वादितिभावः ॥ २५ ॥ इति-
कर्तव्यतेति ॥ उपसाधनतेत्यर्थः ॥ इत्युक्तमिति ॥ तत्रगुरूपदेशानुसारेणोपासनाकर्तव्यतोक्तेरितिभावः ।
अभ्युपगममोक्षाभावस्य ॥ इत्युक्तेति ॥ तत्रकस्यापिज्ञानिनोमोक्षाभावोनेत्युक्तेरितिभावः ॥ ॐ प्रदानवदे
वतदुक्तं ॐ ॥ प्रीतिपूर्वकत्वादिप्रकृष्टंदानं उपदेशःप्रदानं तद्युक्तमेवश्रवणादिकं अपरोक्षज्ञानसाधनं कुतः तदुक्तं ॥ २६ ॥

तत्ज्ञानस्यदानाधीनत्वमाचार्यवानितिश्रुतावुक्तंयतइत्यर्थः । उक्तवचनं आत्मावारइत्यादि ॥ नहीति ॥ दार्ढ्य-
मुष्टिनिपीडनात्पृथक्साधनंननहीत्यर्थः । उक्तंन्यायविवरणे । तथाचतुर्थतात्पर्ये । अत्रज्ञानाद्यभावे ॥ २६ ॥ उक्ते
नि ॥ आवश्यकत्वेत्यर्थः ॥ नहीति ॥ सन्निकर्षापेक्षयेंद्रियस्यैवप्राबल्यदर्शनादितिभावः ॥ पुरुषत्वसाम्यादिति ॥
तथाचतत्क्रिययोरपिसाम्यमितिभावः ॥ ॐ लिंगभूयस्त्वात्तद्धिबलीयस्तदपि ॐ ॥ तत् गुरुप्रदानं श्रवणाद्यपेक्षयाबली
यः बलिष्ठं कुतः लिंगानांज्ञापकानांभूयस्त्वात् बाहुल्यदर्शनात् नचश्रवणादिवैयर्थ्यं हियस्मात् युक्तं तदपिश्रवणादिकमपि
कार्यमितइत्यर्थः ॥ ऋषभादिभ्यइति ॥ ऋषभः सत्यकामायवायुः चतुःशतसंख्याकगोगणंप्रदायतस्यप्रसवेनसहस्रसंख्यापूर्ति
पर्यन्तमरण्येस्थित्वानन्तरंत्वंगमामेहीति गुरुणागौतमेनोक्तेनसत्यकामेनतथाकृत्वागुरुंप्रतिअभिमुखेजातेसतितदीयगुरुसेवाप्रसन्नाः
वाय्वग्निब्रह्मवरुणाःक्रमेणऋषभाग्निहंसजलवायमद्गुरूपेणसत्यकामंप्रत्युपदेशंचक्रुस्तैरुपदिष्टः सत्यकामोगुरुमेत्य तस्मैसहस्रसं
ख्याकंगोगणंसमर्प्यतेरुक्तंनिवेद्य भगवानित्यनेनविद्योपदेशायगुरुप्रार्थनंकरोतीत्यर्थः ॥ तथोपकोसलेनेति ॥ गुरुणासत्य
कामेनापिपरिचर्यायनियुक्ते उपकोसलेबहुकालंतथाकुर्वतिसतिसत्यकामेकदाचित्प्रवासंगतेऽग्नयउपकोसलायविद्योपदेशंच
क्रुः । ततःसत्यकामेआगते उपकोसलस्तस्मैतदुक्तंनिवेद्योपदेशायप्रार्थयतइत्यर्थः । श्रुतिद्वयंक्रमेणव्याचष्टे ॥ यद्यपीत्यादि
ना ॥ भगवद्भ्यःअन्येभ्योभगवन्ममेभ्योऽन्नेत्यनुवादः ॥ यागीयपशुहिंसायामिति ॥ मंत्रादीनिकर्तव्यताशून्यत्वे
यागस्वरूपानिष्पत्तेस्तस्याअपियागहेतुत्वादितिभावः ॥ २७ ॥ यत्प्रसादः यस्यगुरोःप्रसादः अतोगुरुविचारस्यपादां
तभावइतिभावः । शुभंज्ञानादिः मंत्रः उपदेशः ॥ प्रागुक्तमिति ॥ इतरेत्वर्थसामान्यादित्यत्रोक्तभाविफलानुसारेण
मंत्रज्ञगुरूपदिष्टस्वयोग्यगुणोपासनमित्यर्थः ॥ ॐ पूर्वविकल्पःप्रकरणात्स्यात्क्रियामानसवत् ॐ ॥ पूर्वविक

त्यःपूर्वपरित्यज्यापरःस्वीकार्योनवेतिविकल्पःस्यात् कथं क्रियामानसवत् मानसीचासाक्रियाचक्रियामानसंध्यानंयथा
कृतत्र स्मार्गोपयोनयोर्विकल्पः ततः कुतः स्वीकार्यः प्रकरणात् प्रकर्षेणसामर्थ्येणानुग्रहकरणान्निमित्तादित्यर्थः । अका
त्र छेदेनाविनयमाह ॥ समर्थानुग्रहकर्मेति ॥ दोषवचनस्यगुरुमंत्रेत्यादेः इतिदर्शितइत्यन्वयः ॥ ॐ अतिदे
शाच्च ॐ ॥ पूर्वगुरूणैवगुर्वंतरस्वीकारस्यातिदेशात् उपदेशाच्चेत्यर्थः । श्रेयसइत्यस्यतानित्यनेनान्वयसंभवेपिनचेतन
त्वमात्रेणास्माद्विशः किंतु उपदेशोपयुक्तज्ञानादिगुणेनश्रेयांसइत्यर्थाधिक्यलाभायविभक्तिव्यत्यासेनव्याख्याति ॥ श्रेय
सःश्रेयांसइति ॥ २८ ॥ उक्तंपादमारभ्य कुतइत्यतःकोप्यंतरसद्भावादित्याह ॥ यथेति ॥ भाक्तंचेति ॥
तत्रनोक्तंमतिकर्मणःपरंपरयाहेतुत्वस्यसाक्षान्मुख्यामृतहेतुत्वस्यचोक्तत्वादितिभावः ॥ ॐ विधैवतुनिर्धारणात् ॐ ॥
विद्यान्नह्मविषयापरोक्षज्ञानमेवमोक्षहेतुर्नकर्म कुतः निर्धारणात् नान्यइत्यन्यनिषेधनतस्यैवमोक्षहेतुत्वस्यनिर्धारितत्वादि
त्यर्थः ॥ कर्मवचनादर्शीनि ॥ तत्रत्यैवकारस्यायोगव्यवच्छेदकत्वेनसावकाशत्वादितिभावः ॥ ॐ दर्शनाच्च ॐ ॥
भगवदपरोक्षज्ञानाच्चमोक्षोनपरोक्षज्ञानमात्रादित्यर्थः ॥ २९ ॥ नचैतावतेति ॥ तथाचनकर्मपक्षपातोयुक्तइतिभावः
॥ अपहस्तितास्मिनि ॥ स्मृतःस्वतःसर्वज्ञभगवत्प्रत्यक्षमूलत्वेनश्रुत्यनपेक्षणादितिभावः ॥ ॐ श्रुत्यादिबलीय-
स्त्वाच्चनबाधः ॐ ॥ ज्ञानस्यमोक्षहेतुत्वोक्तौनबाधः नोक्तस्मृतिबाधः कुतः श्रुत्याबलीयस्त्वात् तथाप्रतिपादकानांश्रु-
तिलिंगयुक्तिस्मृतीनांबलवत्त्वादित्यर्थः ॥ असंभिन्नेति ॥ अमिश्रेत्यर्थः कृतशब्दार्थंउत्पत्तीत्यादि अकृतइत्यस्य
नित्यपुरुषार्थेति ॥ युक्तिमत्वेनेति ॥ कर्मणोबंधकत्वरूपयुक्तिमत्वेनेत्यर्थः ॥ अतिशयार्थेति ॥ नतुमोक्षार्थः
येनज्ञानकर्मसमुच्चयसाध्यत्वंमोक्षस्येतिभावः ॥ ३० ॥ उक्तेति ॥ द्वितीयपादोक्तभक्तीत्यर्थः ॥ नचैवमिति ।

तस्माद्ध्यज्ञानस्यापरोक्षप्रमात्वं नैवसिध्येदितिभावः ॥ तदन्वयव्यतिरेकेति ॥ प्रमितेःप्रमाणफलत्वादितिभावः । द्वेष
तत्ध्यानमात्रेणमोक्षोपितनस्यज्ञानहेतुत्वामित्यत आह ॥ स्मर्यतेखल्विति ॥ चैद्यःशिशुपालः उक्तविधैवनिर्धारणा-
दित्यत्र तथाचचैद्यादीनांद्वेषपूर्वकध्यानेनज्ञानमुत्पन्नमित्यवश्यमंगीकार्यमितिभावः ॥ ॐ अनुबंधादिभ्यः ॐ ॥
ब्रह्मज्ञानमनुबंधादिभ्यः भक्त्यादिभ्योभवतीत्यर्थः । प्रसादस्येत्यस्यपूर्वेणचोत्तरेणचसंबंधः ॥ तद्विनेति ॥ भक्तिवि-
नाअद्वरनंतयोभ्यांचित्तद्व्यनुपपत्तेरित्यर्थः ॥ स्वभावभक्तेति ॥ पूतनाकंसनरकशिशुपालादिषुद्विधाजीवाःसंतोऽ
संतश्चेति द्वावमनात्पर्योक्तेरितिभावः । अभिधानंसप्तमतात्पर्योक्तं ॥ अभिव्यक्तिरिति ॥ विद्यमानस्यपुनर्भावना-
योगादितिभावः । तस्मादित्यादेरावृत्तिमत्वाह ॥ अभिव्यक्तेरिति ॥ ३१ ॥ अविशेषितेति ॥ दर्शनेता
रतम्यानुक्तेरितिभावः ॥ भक्त्येति ॥ :अहंयावान्यश्चास्मितावंतंमांभक्त्यासम्यग्जानाति तदनंतरंसमुत्थेनज्ञानेन
मांप्रपद्यतइत्यर्थः । उक्तं यावःभिकारमित्यत्र ॥ ॐ प्रज्ञांतरपृथक्त्ववद्दृष्टिश्चतदुक्तं ॐ ॥ प्रज्ञांतरस्यध्यान
स्यपृथक्त्ववत्नानात्वनद्दृष्टिज्ञानंचपृथक्नाना तदुक्तं (व्र.ज्ञ.)नतारतम्यमंतर्दृष्टयइतिश्रुतावुक्तमित्यर्थः । ननुभाष्ये
उपासनानामध्यानंविवक्षितंतस्यैवापरोक्षज्ञानसाधनत्वात् ध्यानंनज्ञानंकिंतुमानसीक्रिया तथाचप्रज्ञांतरशब्दस्यज्ञा
नविशेषपरत्वंकथमुपासनापदेनतद्व्याख्यानमित्यत आह ॥ अविच्छिन्नेति ॥ तथाचनध्यानंमानसीक्रिया तथा-
त्वेनींद्रियमनोनिष्ठक्रियाया अप्यतींद्रियत्वेनापरोक्षावभासविरोधात् क्रियायारूपरहितत्वेनध्यानेरूपावभासविरोधाच्चेति-
भावः । ननुनध्यानस्यपरोक्षज्ञानरूपत्वंवक्तुंयुक्तं तस्यमानसत्वेनापरोक्षत्वात् नैरंतर्यमनोवृत्तेर्ध्यानमित्युच्यतेबुधै-
रितिस्मृतेःश्रवणदर्शनादिजनितमानसवासनामयस्यवस्तुनोमनसावलोकनंध्यानमित्यंगीकारादितिसुधोक्तेश्च । तस्यालिंग-

शब्दाजन्यत्वाच्चेतिचेत् सत्यं ध्यानस्यवासनामयमूर्तिविषयकत्वेनापरोक्षरूपत्वेपिपरमात्मस्वरूपविषये अपरोक्षरूपत्वा-
योगेनज्ञातःपरमाणुरित्यादिवदुपनीतभानाभ्युपगमेनोपनायकागमजन्यज्ञानस्यपरोक्षत्वेनध्यानेपिपरोक्षत्वव्यवहारइत्यदो-
षः। नचतस्यभगवद्विषयकत्वमेवनेतिवाच्यं। तथात्वेनैष्फल्यप्रसंगात्॥ कर्षकाणामिति॥ विषमसाधनवतामपिकृषीव-
लानांसमानफलत्वदर्शनादितिभावः। विशेषबलात् विशेषवाक्यबलात्॥ हिरण्यगर्भेति॥ तस्यापिश्रुत्युक्तयावत्त्वंबोध्यं
॥ ३२॥ उक्तेति॥ स्थानतोपीत्युक्तसर्वरूपाविशेषेत्यर्थः॥ ॐ नसामान्यादप्युपलब्धेर्मृत्युवन्नहिलोकापत्तिः ॐ॥
उपलब्धेःसर्वरूपविषयज्ञानस्यसामान्यात् समानत्वात् यत्किंचिज्ज्ञानरूपेणमुक्तिरितिन किंतुरूपविशेषदर्शनेनैव कथंमृत्युवत्
यथामृतित्वसाम्येपिमृतिविशेषादेवमोक्षस्तथारूपांतरज्ञानस्यतत्फलयायोगात् तेनयत्फलंभवतिसैवमुक्तिरित्यतउक्तं॥ न-
हीति॥ तत्फलंमहरादिलोकानामापत्तिःप्राप्तिः नहिसामुक्तिरित्यर्थः॥ दर्शनविकल्पादिति॥ किंचिन्मूर्तिदर्शनंमुक्ति-
हेतुःकिंचिन्नेतियथाविकल्पः तथाबिंबदर्शनेपिकस्यचिन्मोक्षःकस्यचिन्नेतिविकल्पःस्यादित्यर्थः। अत्रोक्तोबिंबदर्शननि-
यमोनसर्वेषां किंतु येबिंबदर्शनयोग्याऋष्यादयस्तेषामेव सर्वेषांबिंबदर्शनायोग्यत्वात् यथोक्तमुपासात्रैविध्यादाश्रि-
तत्वादिति ऋषयोनःप्रकाशाइतिश्रुतेश्च अन्यथादृष्टैवब्रह्मवताराणामितिप्रागुक्तविरोधात् यत्तुयेषांबहिरुपासनेनमोक्षस्ते-
षामपिहृत्युपसमानंकिंचित्कार्यमेवेतिबृहदारण्यकभाष्यं तदप्यवतारादिदृष्टिविशेषार्थमंत्रांतरुपास्त्यावश्यकत्वपरं अतएव-
दृष्ट्वैवब्रह्मनगाणामित्यत्रांजसमन्युक्तं नयोक्तंकाठकभाष्ये प्रादुर्भावानृतेविष्णुमिंद्रियैर्नैवपश्यति प्रादुर्भावानपियदाज्ञान
दृष्ट्यैवपश्यति तदेवमुच्यतेयोगीति॥ ३३॥ स्वातंत्र्यनिरासादिति॥ भगवत्प्रसादाद्द्वारकत्वनिरासादित्यर्थः
॥ अव्यक्तत्वाभावेति॥ भक्तिसामर्थ्येनत्वदृष्टत्वादितिभावः॥ ॐ परेणचशब्दस्यताद्विध्यंभूयस्त्वात्वनुबं-

वः ॐ ॥ ज्ञानंपरेणचपरमात्मनैवभवति नभक्त्या तर्हिभक्तिरेवैतच्छ्रुतेःकागतिरित्यतउक्तं ॥ शब्दश्चतादिध्यामि
ति ॥ शब्दस्योक्तश्रुतेस्तादृश्यंतुभक्तिहेतुत्वप्रतिपादकत्वं भक्तेःकरणत्वादुपपन्नं । साधनांतरत्यागेनभक्तेरेवोक्तिःकु
तइत्यतउक्तं ॥ भूयस्त्वादनुबंधइति ॥ अनुबंधस्तुभक्तिस्तुकरणेषुभूयस्त्वात्प्रधानत्वादुक्तइत्यर्थः ॥ सैवेत्य
र्थापत्ति ॥ साधनांतराण्यनुक्त्वाकिंविशिष्यभक्तिरेवकरणत्वेनोच्यतइत्यतः सैवेत्युक्तमितिपूर्वसंगतिरित्यर्थः । त-
त्त्वैवमुख्यंनत्वन्यदित्यर्थः ॥ ३४ ॥ अंशिवत्प्रेक्षेति ॥ अंशिमार्गेणगंतृत्वादित्यर्थः । अन्यथा अभेदे
। ॐ एकआत्मनःशरीरेभावात् ॐ ॥ अंशोर्जुनः अंशिनेंद्रेणैकः अभिन्नएव कुतः आत्मनोंशिनःकर्मनिर्मितेशरीरे आ
त्मनोंशस्यभावात्त्वादित्यर्थः ॥ अकृतेति ॥ अंशस्याकृतकर्मभोगापत्तिरंशिनःकृतकर्मनाशादित्यर्थः । ननुनांशि
कर्मनिर्मितंशरीरेंशोस्ति किंतु स्वकर्मनिर्मितएवेत्यतआह ॥ नचांशस्येति ॥ एतच्छरीरसंबंधात्पूर्वमर्जुनस्येंद्रशरीरं
त्वनादिभावात्कर्मागमनराभावादितिभावः । तर्हिभाव्नुकर्मेत्याह ॥ नचेति ॥ अपवर्गेति ॥ शरीरसंसर्गस्यक-
र्मनिमित्तत्वेयावत्कर्मनाशनमवश्यंभावंबंधमरूपोमोक्षउपपद्यते कर्मानियतत्वेचतस्यानागंतुकत्वेनकदाप्यनपायादुक्तमोक्षा-
नुपपत्तिसंगइत्यर्थः ॥ ॐ व्यतिरेकस्तद्भावभावित्वान्नतूपलब्धिवत् ॐ ॥ उपलब्धिवत् ज्ञानभेदवत् अंशा
दंशिनोव्यतिरेकोभेदोनन्वेव कुतः तद्भावभावित्वात् तस्यांशिनोभावेनोपासनेनांशस्यभावित्वात्तत्फलभोक्तृत्वा
[illegible] आह ॥ अंशगतज्ञानादेरिति ॥ सर्वस्येत्यर्थः अभेदेंशस्यांशिगतसर्वानुसंधानंकथमि
त्यत आह ॥ अंशिगतस्येति ॥ ३६ ॥ उक्तेतियावदधिकारमित्यत्रेत्यर्थः ॥ ॐ अंगावबद्धास्तुनशाखासु
हिप्रतिवेदं ॐ ॥ अंगावबद्धा अंगैरप्रधानैर्ब्रह्मादिभिरवबद्धाःसंबद्धास्तद्विषयाइतियावत् । उपास्त्यादयःकार्याएव उ

पसंहारेचतुविशेषोस्ति सकः प्रतिवेदंयाःशाखाःतासूक्तमुत्तमगुणजातंनीचेनोपासनंकर्तव्यमित्यर्थः । वेदसित्थंतिवेदा-
दिशास्त्रे ॥ ॐमंत्रादिवद्वाविरोधःॐ ॥ नीचगुणानामुत्तमैरुपसंहारेऽविरोधः कथंमंत्रादिवत् । यथामंत्रादेःसू-
क्तादेरधमपरस्योत्तमविषयत्वेऽध्ययनंतथेत्यर्थः ॥ तेषुतद्गुणत्वादिति ॥ उत्तमानांनीचगुणत्वादित्यर्थः । उत्त-
मानांतत्प्रतिपाद्यत्वादित्यत्रऋग्भाष्यसम्मतिमाह ॥ उक्तंचेति ॥ स्वयंसाक्षाद्देवता तत्रनारायणे अत्रश्रियांविशेषेणै
श्रलिंगेनदेवताज्ञेयाइत्यर्थः । ननूपसंहृतिस्तुफलातिशयार्थंसर्वैःकार्याभवेत् अन्यथानात्विवितियोजनायामुपासकानांमध्ये-
ष्टफलार्थिनस्तएवपुरुषविशेषालभ्याःपुनःकिमुच्यतेपुरुषाणांविशेषादितितत्राह ॥ पुरुषविशेषइति ॥ नन्वेवंस-
र्वुत्तमाधिकारिभिःकर्तव्यान्यैर्नकर्तव्येतिविकल्पार्थप्राप्त्यान्येषांसर्वात्मनोपसंहारनिषेधःस्यात् तथाचफलातिशयार्थंसर्वैरु
पास्तिःकर्तव्येति प्रागुक्तविरोधःस्यादित्यतआह ॥ फलविशेषस्तेषामेवेति ॥ तथाचोपसंहृतिरित्युत्तरार्धेस
ःकार्येत्यस्यानुवृत्तिर्नास्तीतिभावः । ननूपसंहृतिःफलातिशयार्थंकर्तव्या अन्यथाफलाभावेनकर्तव्येतिपुरुषविशेषैरुत्तमा-
धिकारिभिःकर्तव्या अन्यैर्नकर्तव्याइतिचपक्षद्वयाभावात्कथंपुरुषाणांविशेषाद्वेत्युक्तविकल्पइत्यतआह ॥ उपासकप्र-
तिपत्ताविति ॥ पुरुषविशेषादित्यनेनोत्तमाधिकारिरूपोपासकप्रतिपत्तौ तैरुत्तमाधिकारिभिःफलातिशयापेक्षयाकर्त
व्या अन्यथानकर्तव्येत्युपसंहृतिरूपसाधनएवायंविकल्पोनतुपुरुषविशेषैकर्तव्योन्यैर्नकर्तव्यइत्युपासकेषुविकल्पउच्यतइ-
त्यर्थः ॥ ३६ ॥ अन्यथेति ॥ पूर्णत्वस्यानुपास्यत्वे आनंदादीनामपूर्णत्वेनोपासनाप्राप्तौलौकिकतयोपासनप्रसंगा
दित्यर्थः । तथाचकार्याख्यानादपूर्वमित्युक्तालौकिकत्वानुपपत्तिरितिभावः । ततःकिमित्यतआह ॥ सर्वोपास्योनेति ॥
संभूत्याद्यविशेषेपिकुतोनसर्वोपास्यत्वमतआह ॥ वैयर्थ्यादिति ॥ तदेवव्यनक्ति ॥ आनंदादिकंहीति ॥ ननुभूमत्व

स्यापीष्टत्वेनतदुपासनमपिसार्थकमेवेत्यतआह ॥ नहीति ॥ ॐ भूम्न. क्रतुवज्जायस्त्वंतथाचदर्शयति ॐ ॥ भूम्नः भूमगुणस्य सर्वगुणेषुजायस्त्वं प्राधान्यं कथंक्रतुवत् यथादीक्षाद्यंगकलापस्यविश्वजिदादिसर्वयागेष्वनुवृत्तावेवतद्योग्यानुष्ठानफलहेतुत्वेनप्राधान्यं तथा तद्वद्भूमगुणस्यसर्वगुणानुवृत्तत्वेनफलहेतुत्वं कुतइत्यतउक्तं ॥ तथाचदर्शयतीति ॥ चयस्माश्रुतिरेवदेवइतिश्रुतिःतथा उक्तार्थंदर्शयत्यतइत्यर्थः । यद्यपिक्रतुशब्दोदीक्षाद्यंगविशिष्टयागवाचकत्वेनमीमांसकप्रकरणसिद्धः तथाप्यत्रतदंगकलापमात्रपरोग्राह्यः सहभावेन तद्विशेषणत्वेन ॥ ३७ ॥ उक्तेति यावदधिकारमित्युक्तफलतारम्यमित्यर्थः ॥ भूमत्वइति ॥ नाहिविभूनांदेशतःपूर्णत्वेविशेषोस्तीतिभावः सत्यपिविशेषेऽनुपपत्तिमाह ॥ नहीति ॥ ॥ मिथ्येति ॥ भगवदानंदेकिंचित्पूर्णत्वाभावादितिभावः ॥ ॐ नानाशब्दादिभेदात् ॐ ॥ भूमत्वंनाना तारतम्येनप्रतीयते कुतः शब्दादिप्रमाणानांभेदात् तारतम्येनज्ञानजनकत्वस्वाभाव्यादित्यर्थः । ननुप्रत्यक्षस्यसर्वप्रमाणोपजीव्यत्वेनप्राधान्यात्तेप्रत्यक्षादीतिवक्तव्यं । यदितन्मुख्यंज्ञानशब्दयोरित्युक्तरीत्याकरणेषुशब्दस्यप्राधान्यात्तदादित्वेनग्रहणं नहिकिंशब्दानंतरंप्रत्यक्षग्रनुक्त्वानुमानग्रहणंकिंनिमित्तमित्यतआह ॥ तत्वनिर्णयइति ॥ ननुप्रमाणान्यप्याविद्यानांयेकथंदृष्टेयेरस्यासंशयपरिहरति ॥ नचेति ॥ अतीतेति ॥ वर्षापेक्षयावासराणांबहुत्वादितिभावः ॥ अन्यापीति ॥ घटकूपादीनांजलपूर्णत्वेविशेषदर्शनादितिभावः । ननूक्तमत्रमिथ्योपासनप्रसंगइतितत्राह ॥ अन्यनिषेधादिति ॥ एतावदेवनाधिकमित्यनिषेधादितिभावः ॥ ३८ ॥ अविंबोपासनस्येति ॥ विंबातिरिक्तरूपोपासनस्येत्यर्थः ॥ तापनीयेति ॥ तस्यान्यरूपोपास्तिप्रतिपादकत्वादितिभावः ॥ अन्यथेति ॥ अविंबोपासनस्यमोक्षहेतुत्वे नसामान्यादप्युपलब्धेर्मृत्युवित्यत्रोक्ताविंबातिरिक्तदर्शनस्यमोक्षसाधनत्वंनास्तीत्येतद्व्याहन्येत्ये

त्यर्थः ॥ मुमुक्षुत्वादिति ॥ तथाचमोक्षेतरफलेविरक्तस्यफलांतरापेक्षयातत्करणमितिभावः ॥ विघ्नायेति ॥
अबिंबोपासनंभवतीतिशेषः ॥ ॐ विकल्पोविशिष्टफलत्वात् ॐ ॥ अबिंबोपासनस्याविकल्पोविविध-
कल्पोऽनियमइतियावत् कुतःविशिष्टफलत्वात् विलक्षणफलकत्वादित्यर्थः ॥ उक्तदोषद्वयेति ॥ उक्तहे-
तुद्वयेनक्रमेणविघ्नकारित्वमुमुक्षुवनपेक्षितत्वयोर्निरासादितिभावः । नृसिंहादितोन्यादितिभ्रमंनिवारयति ॥ नृसिं-
हादिकमिति ॥ तथाचयोग्योपासनादन्यनृसिंहादिकमित्यन्वयइतिभावः ॥ ३९ ॥ अनुपपत्तीति ॥
रागविरागयोर्विरोधादितिभावः ॥ तेनचेति ॥ आचार्यायदत्तधनेनेत्यर्थः ॥ ॐ काम्यास्तुयथाकामंसमुच्चियेर
रन्नवापूर्वहेत्वभावात् ॐ ॥ काम्याधनादिसाधनेशगुणास्तुयथाकामंवित्तादीच्छानुसारेणसमुच्चियेरन्नुपसंहार्याः
मुमुक्षुभिर्नवा कुतः पूर्वहेत्वभावात् मोक्षेच्छातःपूर्वंविद्यमानोयोहेतुःवित्तादिकामाख्यःतेषांतदभावादित्यर्थः । ननुकाम्या
न्यहेत्वभावेपिनृसिंहाद्युपासनस्यफलांतरार्थंक्रियमाणत्वेनव्यभिचारइत्यतआह ॥ प्रबलेति ॥ दुरितादिप्रतिबंधक
विलक्षणप्रबलहेत्वभावादित्यर्थः । नन्वर्थादेर्ज्ञानहेतुत्वस्यैवकाम्योपासनेप्रबलहेतुत्वात्कथंप्रबलहेत्वभावइत्यतआह ॥ न-
हीति ॥ तथाचान्वयव्यतिरेकव्यभिचारान्नतस्यज्ञानहेतुत्वमितिभावः । स्मृतौयस्ययस्यतस्यतस्येतियत्तच्छब्दसंबंधप्रतीति
निवारयन् तांयथानन्वाचष्टे ॥ यस्ययस्येत्यादिना ॥ मुमुक्षूणांनवेत्युत्तरवाक्यानुरोधेनामुमुक्षुभिरित्यध्याहारः ॥४०॥
तद्विद्याचक्षोःसूर्योऽजायतेत्यादिका ॥ उक्तव्याघातादिति ॥ आनंदादयःप्रधानस्येतिसर्वैश्चतुर्गुणमात्रस्योपास्यत्वो
क्त्यातद्विरोधादित्यर्थः ॥ चोदनाद्यविशेषादिति ॥ तत्रस्वाध्यायोध्येतव्यइत्यत्राधिकारिविशेषकल्पकाभावेनैवविशे
षाधिकारिकत्वाभावस्योक्तत्वादितिभावः ॥ ॐ अंगेषुयथाश्रयभावः ॐ ॥ अंगेषु भगवदवयवेषु सूर्यादीनामाश्र

यभावः आश्रयत्वंयथोक्तं तथोपासनंकार्यमित्यर्थः । ननुचक्षोःसूर्योअजायतेतिश्रुतौ सूर्यादीनांभगवच्चक्षुरादिजन्यत्वमेवोच्यते नतुचक्षुराद्याश्रयत्वं अतः कथंचक्षोःसूर्योअजायतेत्यादिनापरमेश्वरांगाश्रयत्वमुक्तमित्यतआह ॥ यत्रेति ॥ ॐ शिष्टेश्च ॐ ॥ यस्मिन्नितिश्रुतावंगदेवतोपासनाकर्तव्यस्यसिष्टेः विधानाच्च तत्कार्यमित्यर्थः ॥ ॐ समाहाराच्च ॐ ॥ अंगैःपराद्येहीतिश्रुतौताहशगुणानांसमाहारात् उपसंहारफलवचनादेवाधिकारिकत्वनिश्चयइत्यर्थः ॥ मधुविद्यायामेवेति ॥ असौवा आदित्योदेवमध्वित्यादिमधुविद्यायां वसूनामेवैकोभूत्वेत्याद्युक्तफलपर्यालोचनया वस्वादिपदयोग्यानां तदर्थिनामेव अधिकारित्वकल्पनवादित्यर्थः ॥ ध्यायेदिति ॥ परस्यांगेष्वंगदेवताध्यायेत्ियस्मात्तेनमुक्तौदेवानांविशिष्टतदंगाश्रितत्वादयोऽसाधारणगुणाभवंतीत्यर्थः । नन्वत्रफलविशेषस्यैवाधिकारिविशेषकल्पकत्वेनाविवक्षितत्वात्फलश्रुतेरित्येवंसूत्रभाष्ययोर्वक्तव्यं । तत्कथंसमाहारग्रहणमित्यतआह ॥ अत्रेति ॥ अस्यैवचोपरत्तेरुक्तमितिसूत्रयथोक्तमित्यस्योक्तपदोपेतश्रुतिसूचकत्वंनेत्यर्थः ॥ ॐ गुणसाधारण्यश्रुतेश्च ॐ ॥ भगवद्गुणानांसाधारण्यस्योपास्यत्वेनसाम्यस्यसर्वगुणानामुपास्यत्वस्येतियावत् श्रुतेःसाधारण्यादित्यत्रश्रवणादित्यर्थः ॥ ४१ ॥ ननूपासनंनकर्तव्यमितिपूर्वपक्षिते कथंनवेत्यकर्तव्यताप्रतिपादकसूत्रेणसित्थांतइत्यतउक्तं ॥ गूढाभिसंधिनेति ॥ उत्तमाधिकारिव्यतिरिक्तैरित्यधिकारिविशेषानिर्देशाभावादभिसंधेर्गूढत्वमितिज्ञातव्यं ॥ ॐ नवातत्सहभावश्रुतेः ॐ ॥ अंगाश्रितदेवोपासनं नवाकार्यं कुतः अतत्सहभावश्रुतेः तेनसर्वशाखागतोपासनेन सहभावस्य सहत्वस्य श्रुतेरश्रवणादित्यर्थः । आशयमुत्थापयति ॥ अयमभिसंधिरिति ॥ ॐ दर्शनाच्च ॐ ॥ सत्योज्ञानइतिश्रुतौदेवैस्तथोपासनंकार्यंनान्यैरित्यस्यदर्शनाच्चैवमित्यर्थः ॥ ४२ ॥



इतिश्रीमत्तत्त्वप्रकाशिकावाक्यार्थमंजर्यांशर्कराश्रीनिवासविरचितायांतृतीयाध्यायस्यतृतीयःपादः ॥

॥ श्रीवेदव्यासायनमः ॥ **उक्तमिति** ॥ विद्यैवतुनिर्धारणादित्यत्रेत्यर्थः ॥ **सामर्थ्यमिति** ॥ स्वर्गापवर्गाद्यशेषपु
रुषार्थसाधनत्वादिरूपमित्यर्थः । तथाचकारणनिरूपणानंतरंकार्यनिरूपणादनंतरसंगतिरितिभावः ॥ निरवधार
णेति ॥ विद्यैवतुनिर्धारणादित्यत्रज्ञानस्यैवमुक्तिसाधनत्वोक्तावपिमुक्तिमात्रसाधनत्वस्यानुक्तत्वादितिभावः ॥ नस्या
दिति ॥ पुरुषैरर्थ्यस्यैवपुरुषार्थत्वादितिभावः ॥ ॐ **पुरुषार्थोतःशब्दादितिबादरायणः** ॐ ॥ पुरुषार्थः पुरुषै
रर्थ्यः अपेक्ष्यः सर्वोपि अतः ज्ञानादेवभवति कुतः शब्दात् यंयंलोकमितिश्रुतेरितिबादरायणाचार्योमन्यतइत्यर्थः
॥ **सौभरीति** ॥ तेनयुगपत्पंचाशद्देहग्रहणेनतावत्संख्याकस्त्रीभिःक्रीडनादितिभावः ॥ **कर्दमेति** ॥ ॐ **शेषत्वा**-
**त्पुरुषार्थवादोयथान्येष्वितिजैमिनिः** ॐ ॥ पुरुषार्थवादःज्ञानादेवाशेषपुरुषार्थोभवतीत्युक्तिः शेषत्वात् ज्ञानस्यक
र्मोपकारकत्वात् कथं यथान्येषुधनादिषुकर्मोपकारकत्वेनपुरुषार्थवादस्तथेति जैमिनिराचार्योमन्यतइत्यर्थः ॥ **प्राधा**-
**न्यदर्शनादिति** ॥ ज्ञानादेवस्वर्गइतिनिर्देशबलादितिभावः । ननुधनादेर्यज्ञादिकर्मजनकत्वेनभवतुतच्छेषत्वंनज्ञानस्या-
ज्ञानिनामपियज्ञादिदर्शनेनकर्मणस्तदजन्यत्वादित्यतआह ॥ **अत्रज्ञानस्येति** ॥ स्वरूपोपकारकस्यैवफलोपकारकस्या
पिप्रयाजादेःशेषत्वदर्शनादितिभावः ॥ ॐ **आचारदर्शनाच्च** ॐ ॥ यज्ञेनेतिश्रुतौदेवानामाचारस्यकर्मानुष्ठानदर्शनाच्च
ज्ञानस्यकर्मशेषत्वमित्यर्थः ॥ ॐ **तच्छ्रुतेः** ॐ ॥ तस्यकर्मप्रतिज्ञानशेषत्वस्यश्रुतेर्यदेवेतिश्रवणात्तस्यतच्छेषत्वमेवेत्यर्थः ॥ ॐ **स**
**मन्वारंभणात्** ॐ ॥ कर्मैवदेहमितिश्रुतौदेहादेः सर्वस्यकर्मणैवसं प्राधान्येन अन्वारंभणादुत्पादनोक्तेः कर्मणएवप्रा
धान्यमित्यर्थः ॥ **सिद्धमिति** ॥ तेनकर्मणोज्ञानशेषतयापुरुषार्थहेतुत्वांगीकारादितिभावः ॥ **फलाभावादिति** ॥
तथाचनतत्रातिशयाधायकत्वमितिभावः ॥ ॐ **तद्वतोविधानात्** ॐ ॥ ज्ञामीचेतिश्रुतौ तद्वतः ज्ञानवतः कर्मविधाना-

नलीलात्वमित्यर्थः ॥ ॐ नियमाच्च ॐ ॥ कुर्वन्नेवेतिश्रुतौज्ञानिनोपिकर्मणोनियमात् नियमकथनात् अकरणेप्रत्यवाय प्राप्तेरितियावत् नलीलामात्रत्वमित्यर्थः ॥ नलिप्यतइतिनास्तीति ॥ लिप्यतएवेत्यर्थः । इदंनचिकेतसंप्रतियमवाक्यं नचैवंतदधिगमउत्तरपूर्वाघयोरश्लेषविनाशौइतिज्ञानिनःकर्माश्लेषस्यवक्ष्यमाणत्वात्तद्विरोधइतिवाच्यं । भिन्नविषयत्वात् अत्रनरइतिमनुष्याद्युक्तः वक्ष्यतिचैतत्स्पष्टंचतुर्थाधिकरणे ॥ ॐ अधिकोपदेशात्तुबादरायणस्यैवंतद्दर्शनात् ॐ ॥ बादरायणस्यमतमेवंप्राधान्येनज्ञानस्यपुरुषार्थहेतुत्वं नचैवमाचारादिवैयर्थ्यं कुतः अधिकोपदेशात् ज्ञानार्जितफलेऽधिकस्यकर्माधीनातिशयस्ययथायथेतिश्रुत्युक्तत्वात् युधिष्ठिरादेर्दर्शनात् तादृशातिशयोपलंभाच्चेत्यर्थः ॥ किंनस्यादिति ॥ फलोपकारापेक्षयास्वरूपोपकारस्यजायस्त्वादितिभावः ॥ ॐ तुल्यंतुदर्शनं ॐ ॥ कर्मकृताचकृतौचज्ञानिनांदर्शनंत्वाचंतुल्यंसमंचेत्यर्थः ॥ ज्ञानेविशेषःस्यादिति ॥ नचास्तिज्ञानेविशेषइतिभावः । कुतोनास्तीत्यत आह ॥ एत्तच्चेति ॥ कामकारेणचैकइत्यत्रेत्यर्थः ॥ प्रामाण्येति ॥ मुनिमतस्यतद्विरोधादितिभावः ॥ अनेनेति ॥ भगवन्मतमुनिमतयोरविरोधप्रतिपादकस्मृतिविरोधेनेत्यर्थः । मोक्षहेतुत्ववैचित्र्याभावादाह ॥ विषयांतरइति ॥ ॥ अतःकथमिति ॥ आकाशेनागमप्रवेशवन्मुनिमतानांविलक्षणेन्यासमतप्रवेशायोगादितिभावः ॥ निखिलमिति ॥ तथाचनोक्तमतरविशेषेऽन्यमतप्रवेशउच्यते । किंतुबुद्धिस्थेसामान्यमतएवेतिभावः । नन्वाकाशस्यदर्शनाभावात्कथमनंताकाशवत्यत्रयन्नित्युक्तमित्यतआह ॥ आनंत्यात्काशवदिति ॥ व्यत्यासः व्यतिरेकः प्रसिद्धोन्वयः अभूतोयथागगनं गगनाकारमित्यादि ॥ तदन्यविषयमिति ॥ कर्मसाध्येसर्वत्रदृष्टफलेज्ञानस्यशेषत्वमितिमतं । अदृष्टमेवेत्युक्तमुनिमतेहि दृष्टेज्ञानस्योपयोगोनास्त्येव दृष्टफलमात्रेज्ञानस्यकर्मशेषतयाउपयोगोस्तीत्यभिमतं । स्वर्गादयःकर्मणैवेत्युक्तमुनिमतेतुस्व-

गादौनश्वरफलेज्ञानस्योपयोगोनास्त्येवेत्यभिमतं । अत्राद्यं मनुष्योत्तमविषयं उत्तरद्वयंतु मध्यमाधममनुष्यविषयं । यथोक्तंसुधायां । मानुषाअप्युत्तममध्यमाधमभेदभिन्नायथायोग्यंविचित्रमताविषयाभवंत्येवेति अतएवभिन्नविषयत्वाद्वगतिरुक्तेति अधिकोपदेशादित्यनेनेत्यर्थः ॥ प्रतिबंधकेति ॥ तैरपिकर्मकृत्वैवप्रतिबंधकस्यनिरसनीयत्वादिति भावः ॥ १ ॥ सर्वेषुविशेषत्रयंक्रमेणोपपादयति ॥ तत्रेत्यादिना ॥ पुरुषार्थत्वात्पुरुषैरर्थ्यत्वात् एवंचएवमपि ननुभाष्येलाघवायाधिकारइतिवक्तव्ये अधिकारितेतिकिमर्थमुक्तमित्यतआह ॥ वक्ष्यमाणेति ॥ ॐ असार्वत्रिकी ॐ ॥ ज्ञानाधिकारिता असार्वत्रिकीनसर्वजननिष्ठेत्यर्थः ॥ ॐ विभागःशतवत् ॐ ॥ ज्ञानाधिकारःकेषांचिदस्तिकेषांचिन्नास्तीतिविभागः व्यवस्थाशतवत् यथाद्याधिकशतदेवानांसोमपानाधिकारोनान्येषामितिव्यवस्थातथेत्यर्थः ॥ ॐ अध्ययनमात्रवतः ॐ ॥ मात्रशब्दःकात्स्न्र्ये कात्स्न्र्याध्ययनवतोधिकारितेत्यर्थः ॥ अर्थसिद्धमिति ॥ तत्रसतांमतइत्येवोक्तं नतुवेदोक्तब्रह्मज्ञानार्थमध्ययनंकर्तव्यमितिविधिरस्तीतिभावः ॥ २ ॥ संपूर्णस्य उत्तमस्य अवचस्यनीचस्येत्यर्थः ॥ ॐ नाविशेषात् ॐ ॥ अविशेषाद्विशेषतारतम्यंविनाज्ञानाधिकारितान कुतः अविशेषात् ज्ञानस्याप्यविशेषप्रसंगादित्यर्थः ॥ ३ ॥ तुल्यंत्विति ॥ तत्रकर्मकरणाकरणयोर्ज्ञानस्यतुल्यत्वोक्तिरित्यर्थः । आद्यब्राह्मणशब्दार्थोब्रह्मप्राप्तियोग्यइति पांडित्यमित्यस्यागमजन्यज्ञानमिति निर्विद्येत्यस्यलब्ध्वेति विद्लृलाभइतिधातोः बाल्यमित्यस्ययुक्तिजज्ञानमिति तिष्ठासेदित्यापादयेदिति मुनिरित्यस्य ध्यानीभवतीति अमौनशब्दार्थः अपरोक्षज्ञानमिति ब्राह्मणशब्दार्थोजीवन्मुक्तइति ईदृशः विशिष्टः तदेवव्यनक्ति ॥ नहीत्यादिना ॥ मोक्षश्चज्ञानिनांनिश्चितएवेतिभावः । ननुनमोक्षातिरिक्तातिशायितफलार्थंसत्प्रवृत्तिःकिंतुमोक्षार्थंसैव सत्प्रवृत्त्यभावेज्ञानेनमोक्षस्यैवाजननादित्यतआह ॥ न-

च्चसमुच्चयेति ॥ विध्यैवतुनिर्धारणादित्यत्रसमुच्चयवादस्यदूषितत्वादितिभावः ॥ **नापीति** ॥ तथात्वेऽनियमःसर्वेषा मित्युक्तज्ञानिनांमोक्षानियमविरोधइतिभावः ॥ **आद्याधिकरणोक्तमिति** ॥ ज्ञानस्यसर्वपुरुषार्थसाधनत्वरूपमाहा- त्म्यमित्यर्थः ॥ ॐ **स्तुतयेऽनुमतिर्वा** ॐ ॥ सब्राह्मणइतिश्रुत्युक्तंयथेष्टाचरणंस्तुतयेज्ञानिस्तुत्यर्थं अनुमतिरनुज्ञामात्रं वा नविधिरित्यर्थः उत्तरमाह ॥ **यथेति** ॥ ॐ **कामकारेणचैके** ॐ ॥ ज्ञानिनःकामकारेणयथेष्टाचारेणापिमोक्षमेके शाखिनःकामकाराइतिपठंतीत्यर्थः ॥ ॐ **उपमर्दंच** ॐ ॥ ज्ञानेनकिंचिद्युक्तस्यप्रारब्धकर्मणउपमर्दं फलह्रासंचैकेपठं- तीत्यर्थः ॥ **नवैजनाइति** ॥ हेअंग मुकुंदसेव्यपरोक्षज्ञानीजनोऽन्यवदज्ञानिवत् संसृतिंप्रारब्धकर्मफलरूपांजातुकदाचि त्कथंचनकेनापिप्रकारेणनाव्रजेदित्यर्थः । ननुश्रवणादेरेवापरोक्षज्ञानसाधनत्वेनकथमुज्ञायांभिपस्येदित्युक्तमत्राह ॥ **श्रव- णाद्युपलक्षणमिति** ॥ ननुव्याहृदिर्शिदेवादिसर्वापरोक्षज्ञानिनांप्रारब्धस्योपमर्दोस्त्येवतत्कथमंतरिममित्येवोक्तिरित्यत आह ॥ **अंतरिति** ॥ हृदयस्येतिशेषोक्तिः ॥ ॐ **ऊर्ध्वरेतःसुचशब्देहि** ॐ ॥ शब्देयइमामितिश्रुतौ ऊर्ध्वरेतस्सुवै राग्यादिगुणवत्स्वेवज्ञानोपदेशोहियस्माद्विहितस्तस्मात्कामचारेणनज्ञानप्राप्तिरित्यर्थः । ननुयइमामितिश्रुतावर्थात्कामचा- राणांश्रवणादिपरोक्षज्ञानाधिकाराभावोलभ्यते । तत्कथमपरोक्षज्ञाने तेषामधिकाराभावप्रतिपादनायेयंश्रुतिरुक्तेत्यत- आह ॥ **अपरोक्षज्ञानस्येति** ॥ श्रवणादिरूपपरोक्षज्ञानेतेषामधिकाराभावेसुतरांतज्जन्यापरोक्षज्ञानेधिकारो- नास्तीतिभावः ॥ ॐ **परामर्शंजैमिनिरचोदनाचापवदतिहि** ॐ ॥ केनस्यादितिश्रुतिः प्रातरुत्थायेत्यादिश्रुत्यु- क्तसदाचारस्यपरामर्शंकृत्वातत्रस्वेच्छयावर्तनंप्रतिपादयति नत्वसदाचारविषया कुतःहियस्मादचोदनानिषिद्धंकार्यमितिवि धिर्नास्ति प्रत्युतब्राह्मणोनहंतव्यश्रुतिरपवदतिनिषेधतीत्यर्थः । पूर्वपक्षयुक्तमर्थंनिराकरोति ॥ **नायमिति** ॥ स्तुतयइत्ये

नोक्तंनिराकरोति ॥ नाप्ययमिति ॥ ॐ अनुष्ठेयंबादरायणःसाम्यश्रुतेः ॐ ॥ बादरायणोनुष्ठेयमवश्यंकर्तव्यमे
वनियमेनकर्तव्यमित्यननुज्ञानंकामचारश्रुत्यर्थंमन्यते कुतःसाम्यश्रुतेः केनापिप्रकारेणवृत्तावपीदृशएवेतिसामान्योक्तेरित्यर्थः ।
अत्रकेनस्यादितिश्रुतावयोगइति विहितस्यैवनियमेनकर्तव्यत्वादितिभावः । ब्राह्मणोनहंतव्यइत्येतदज्ञानमात्रविषयंकिं-
नस्यादित्यतआह ॥ अयंचेति ॥ यथेष्टाचारविधिर्नभवतीतिपूर्वपक्षयुक्तनिषेधः नापिसर्वस्येति जैमिनि-
मतनिषेधइतिज्ञेयं ॥ प्राप्तिसद्भावादिति ॥ केनस्यादितिवाक्यस्यानुष्ठेयानांमध्येकेषांचित्करणंकेषांचिदकरणमित्यर्थत्वेन
विहितेषुकिंचिदकरणनिमित्तकसाम्यसंभवस्यप्राप्तिसद्भावात्तेनेदृशएवेतिसाम्योक्तिः प्राप्तासंभवनिवर्तकत्वेनसम्यक्संबध्य
तइत्यर्थः ॥ सर्वाचरणेति ॥ केनस्यादितिवाक्यस्यकामतःश्रुत्युक्तसर्वाचरणार्थत्वेतुसर्वकरणस्यचसाम्यसंभावकत्वेनतेनेदृ
शएवेतिवाक्येनयदिसर्वंकुर्यात्तर्हिसमइतिसाम्यसंभवमात्रज्ञापनंकृतंस्यादित्यर्थः । पक्षद्वयेपिसाम्योक्तेःसमप्रयोजनत्वात्को
विशेषउक्तपक्षपरिग्रहइत्यतआह ॥ संभवेति ॥ अर्थद्वयमिति ॥ सर्वसदाचारस्येच्छयाकर्तव्यत्वविधिरूपंसदसदाचारानु-
ज्ञामात्ररूपंचेत्यर्थद्वयमित्यर्थः ॥ ॐ विधिर्वाधारणवत् ॐ ॥ केनस्यादितिज्ञानिनःकामचारविधिर्वास्तुतर्ह्यज्ञस्याप्ये
वंस्यादित्यतउक्तं ॥ धारणवदिति ॥ यथावेदधारणंत्रैवर्णिकानामेवविहितंतथाकामचारोज्ञानिनामेवविहितइत्यर्थः ॥ यथे
ष्टाचारविधिरिति ॥ तेनसदाचारविधिमज्जैमिनिमतभेदइतिभावः । इत्यन्वयः इतिवक्ष्यमाणेनान्वयः भाष्येविधिर्वाना
न्येषामितिवेतिपक्षद्वयउक्तरितिप्रतीतिनिरासायाह ॥ उक्तस्यैवेति ॥ विधिर्वेत्यंतेनोक्तस्यैवयथादेवेत्यादिनाविवृत्त
त्वादित्यर्थः । स्मृतौब्राह्मणइत्येवोक्तत्वात्कथंभाष्येज्ञानिनामित्युक्तिरित्यतआह ॥ अत्रेति ॥ कुतइत्यतआह ॥ वि
षयभागस्येति ॥ यद्येतत्स्मृत्यनुसारेणैतत्सूत्रंचतुर्मुखविषयमितिनिर्णीयते । तर्हिपारिप्लवार्थाइतिशंकायाःएतद्विषय-

सासंभवेनविशेषितत्वादितितत्सित्थांतसूत्रांशेनब्रह्मैवस्वेच्छानियतइतिविषयविभागकथनंव्यर्थस्यादितिभावः । चोदनाय
तइतिशेषइति यथेष्टंकुर्वितिविष्णुविहितकर्मकरणस्याधर्मत्वशंकाविषयत्वादितिभावः ॥ ॐ स्तुतिमात्रमुपादाना
दितिचेन्नापूर्वत्वात् ॐ ॥ केनस्यादितिस्तुतिमात्रंनाविधिः कुतःज्ञानिभिरपिसंध्यामुपासीतेत्यादिसामान्यविधे-
रुपादानात्स्वीकारइतिचेन्न तथात्वेतेषांसर्वविध्यतिदूरत्वेन प्रकारेणस्तुत्यत्वप्रसंगात् नचैतद्युक्तं तेषामपूर्वत्वात् अः
विष्णुःपूर्वःप्रेरकोयेषांतेअपूर्वाःतेषांभावस्तत्त्वंतस्माद्भगवदधीनत्वादित्यर्थः ॥ ॐ भावशब्दाच्च ॐ ॥ विधिर्भाविप्र
जापतेरितिश्रुतौइच्छापरपर्यायभावशब्दप्रयोगाच्च केनस्यादितिस्वेच्छाचारविधिरित्यर्थः ॥ अर्थासित्थत्वादिति ॥
सामान्यविध्यविषयस्यापूर्वत्वादित्यनेनार्थासित्थत्वादित्यर्थः ॥ ॐ पारिप्लवार्थाइतिचेन्नविशेषितत्वात् ॐ ॥ उ
क्तरीत्यार्थत्रयवत्त्वेकेनस्यादित्यादिश्रुतयःपारिप्लवार्थाः अव्यवस्थितार्थाःस्युरितिचेन्न विशेषितत्वात् ज्ञानिनामनेकप्रकारा
दित्यर्थः ॥ वस्तुनीति ॥ केनस्यादितिवाक्यार्थेनानारूपत्वासंभवादित्यर्थः ॥ ॐ तथाचैकवाक्योपबंधात् ॐ ॥
तथाचज्ञानिनांत्रिविध्येसतिविधिवाक्यानांस्वेच्छाप्रवृत्तिवाक्यानांचैकवाक्यतयाविरुद्धार्थप्रतिपादकतयोपबंधात्केनस्यादित्य
स्याप्यविरुद्धार्थत्रयवत्त्वमित्यर्थः ॥ उक्तमिति ॥ अपूर्वत्वादित्यनेनभगवदधीनत्वेनसर्वविध्यतिदूरत्वाभावकथनमित्यर्थः
॥ प्रायस्तेषामिति ॥ तथाचनतेषांविध्यभावप्राप्तिरितिभावः ॥ अनुज्ञामात्रत्वाच्चेति ॥ तथाचविधिविषयत्वा-
भावेपिस्तुतिमात्रविषयत्वाभावेनपरब्रह्मसाम्याभावादपूर्वत्वादित्युक्तंयुक्तमितिभावः ॥ श्रुतिबलेनेति ॥ केनस्यादिति
श्रुतिबलेनयःसदसत्प्रवृत्योरविशेषःशंकितःसपरिहृतइत्यर्थः । परिहृतंकामकारेत्यादिसूत्रत्रयेण ॥ ॐ अतएवचाग्नी-
धनाद्यनपेक्षा ॐ ॥ ज्ञानस्यमोक्षजनने अग्नेरिंधनंदीपनंयस्मिन्नग्नींधनमग्निहोत्रंतदाद्याश्रमपेक्षानास्तीतिकुतः अतए

व कामचाराइतिश्रुतौ कामचारेपिमोक्षस्यनैयत्यस्योक्तत्वादेवेत्यर्थः ॥ **कामचारणामिति** ॥ सत्कुर्वतामसत्कुर्वतां
चेत्यर्थः ॥ **असत्प्रवृत्तेरिति** ॥ तथाचासच्चरणमेवकामचरणंनतुसदकरणमपीतिभावः ॥ ॐ **सर्वापेताचयज्ञा-**
॥ ३४ ॥ **दिश्रुतेरश्ववत्** ॐ ॥ सर्वापेक्षासर्वसत्कर्मापेक्षाचज्ञानोत्पत्त्यर्थमेवनमोक्षे कुतःयज्ञादिश्रुतेः यज्ञेनेत्यादिनायज्ञादेर्ज्ञा
नसाधनत्वश्रवणात् तर्ह्युभयसाधनत्वमस्त्वित्यतउक्तं अश्ववदिति यथागमनसाधनाश्वस्यगमनहेतुत्वमित्यर्थः । विविदिषं
ति जानंति ॥ ॐ **शमदमाद्युपेतःस्यात्तथापितुतद्विधेस्तदंगतयातेषामवश्यानुष्ठेयत्वात्** ॐ ॥ तथापिज्ञान
स्यैवमोक्षहेतुत्वेपिज्ञानीशमादिसद्वृत्त्युपेतःस्यात्कुतः तद्विधेः तस्य शमदमाद्युपेतत्वस्य आचार्यादितिश्रुतौविधेर्विहितत्वात्
किमर्थंविधिरित्यतउक्तं । तदित्यादि तदंगतयाज्ञानांगतया तेषांशमादीनामवश्यानुष्ठेयत्वादित्यर्थः ॥ ॐ **सर्वान्नानु**
**मितिश्चप्राणात्ययेतद्दर्शनात्** ॐ ॥ यदिहवेतिश्रुत्युक्तसर्वान्नानुमितिर्निषिद्धान्नभोजनानुज्ञा प्राणात्ययेप्राणापग
मकालविषयैव कुतः तद्दर्शनात् तस्योक्तार्थस्यनवा अजीविष्यमित्युत्तरवाक्येदर्शनादित्यर्थः । तदेवव्यनक्ति ॥ यदीति ॥
किंतल्लिंगदर्शनमित्यतःउषस्तिर्हिचाक्रायणइभ्यग्रामेप्रद्रावणकउवाससेहभ्यंकुल्माषान्खादंतंबिभिक्षेत्तंहोवाचनेतोन्येविद्यंते
यच्चयेमइमउपनिहिताःतदइतिएतेषांमेदेहीतिचोवाच तानस्मैप्रददौहंतानुपानमुच्छिष्टंवैमेपीतंस्यादितिहोवाच नस्विदेतेप्यु-
च्छिष्टाइतीतिपूर्वभागेनसंगत्यर्थंहेतेत्याद्यर्थंतावदनुवदन्नवाजीविष्यमितिश्रुतिंव्याचष्टे । चाक्रायणेनेत्यादिना चक्रायणस्या
पत्यंपुमान्चाक्रायणः उषस्तिर्नामतः इभ्योगजपालकः कुल्माषाःकुत्सितमाषाः॥ ॐ **अबाधाच्च** ॐ ॥ निषिद्धाकरणेबा
धकाभावाच्चनतत्कार्यमित्यर्थः । असिद्धत्वात्प्रमाणसद्भावस्य ॥ ॐ **अपिस्मर्यते** ॐ ॥ सद्धर्मात्यागोऽतीतानागत ॥ ३४ ॥
ज्ञानीतिस्मर्यतेपीतिभावः ॥ ॐ **शब्दश्चातोकामचारे** ॐ ॥ अकामचारे कामतश्चरणाकरणेशब्दः नकामचरतिचरे

दितिश्रुतिश्चास्तीत्यर्थः । चरतिर्गतिरिति भक्षणस्यपृथगुक्तेरितिभावः । पूर्णफलार्थंकर्तव्यमित्यतआह ॥ ह्रासकारणेति ॥ ॐ विहितत्वाच्चाश्रमकर्मापि ॐ ॥ नकेवलंनिषिद्धंनकार्यंकिंतु आश्रमाद्युचितकर्मचकार्यं कुतः कुर्वन्नेवेहकर्माणीतिश्रुतौविहितत्वादित्यर्थः ॥ समुच्चयवादेति ॥ मोक्षस्यज्ञानकर्मोभयसाध्यत्ववादेत्यर्थः ॥ ॐ सहकारित्वेन च ॐ ॥ मोक्षहेतुज्ञानस्यसहकारित्वेनविहितंकर्मतुकार्यमित्यर्थः । श्रुतिंव्याचष्टे ॥ यद्यपीति ॥ ४ ॥ ॐ सर्वथापितुतएवोभयलिंगात् ॐ ॥ सर्वथाप्यनेकप्रयत्नकरणेपितएवयोग्याएवज्ञानमाप्नुवंतिनत्वयोग्याः कुतः उभयलिंगात् योग्यायोग्ययोरिंद्रविरोचनयोर्ज्ञानप्राप्त्यप्राप्तिरूपोभयलिंगदर्शनादित्यर्थः । श्रुतेरेवोपदेशत्वेनकथंश्रुत्योपदेशसाम्येपीत्युक्तमित्यतआह ॥ श्रुतिरूपेणेति ॥ तुशब्दार्थमाह ॥ प्रत्युतेति ॥ उभयंक्रमेणोपपादयति ॥ आत्मेत्यादिना ॥ पीडाभावइति ॥ नेछाभावमात्रमितिभावः । अन्वेष्टितव्याजिज्ञासितव्यइत्यनयोःपौनरुक्त्यवारणायाह ॥ नहीति ॥ ॐ अनभिभवंचदर्शयति ॐ ॥ स्वभावस्यानभिभवं तिरस्काराभावं दैवीमेवेतिश्रुतिर्दर्शयतीत्यर्थः अतिदार्ढ्येनतदुभयस्वभावस्य ॥ कर्तुंशक्यत्वादिति ॥ अमिश्रत्वेनादृढत्वादितिभावः ॥ ॐ अंतराचापितुतद्दृष्टः ॐ ॥ मध्यममानुषाणांसम्यगसम्यक्ज्ञानयोरंतरामध्येमिश्रज्ञानएवावस्थितिः । नतुतत्स्वभावस्याभिभवः कुतः तद्दृष्टेः तदितितंत्रे तेषांतत्रामिश्रज्ञानेतस्यदार्ढ्यस्यतुविशेषेणदृष्टत्वादित्यर्थः ॥ तत्स्वभावत्वइति ॥ ज्ञानादिस्वभावत्वइत्यर्थः ॥ ॐ अपिस्मर्यते ॐ ॥ असुराइतिस्मृत्याताद्दृक्स्वभावत्वतदनुगुणफलमितिद्वयंस्मर्यतइत्यर्थः । स्वभावस्यपृथक्कारणत्वप्रतीतिनिरासायाह ॥ स्वभावेनेति ॥ तस्यज्ञानकर्मादिसामग्रीसंपादकत्वेनैवकार्यजनकत्वादितिभावः ॥ ज्ञानादेर्दैवत्वादिकंचेति ॥ दैवत्वंसात्विकत्वं मिश्रत्वंराजसत्वं आसुरत्वंतामसत्वं तच्चसर्वभुतेषुये

नैकंभावमव्ययमीक्षते । अविभक्तंविभक्तेषुतज्ज्ञानंविद्धिसात्विकं । पृथक्त्वेनतुयज्ज्ञानंनानाभावान्पृथग्विधान् । वे-
त्तिसर्वेषुभूतेषुतज्ज्ञानंविद्धिराजसं । यत्तुकृत्स्नवदेकस्मिन्कार्येसक्तमहैतुकं । अतत्वार्थवदल्पंचतत्तामसमुदाहृतमिति-
गीतावचनैर्ज्ञातव्यामित्यर्थः ॥ ॐ विशेषानुग्रहंच ॐ ॥ देवेष्वीशस्यविशेषानुग्रहंचशृण्वेवीरइतिश्रुतिर्दर्शयतीत्यर्थः ।
ननुदेवानांसम्यग्ज्ञानतत्फलयोरेवप्रतिपादनीयत्वात् तेषुहरेर्विशेषानुग्रहसमर्थनंकोपयुक्तमित्यतआह ॥ ज्ञानादी-
ति ॥ अध्यवसायोति ॥ आरब्धेत्यर्थः । अयंवीरशब्दार्थः उग्रमुग्रमितिवीप्सार्थः सर्वानुग्रानिति फलतो
क्तिर्दैत्यानिति अतीत्युपसर्गार्थोतिक्रम्येति अतिक्रामइत्वेत्यर्थः । संसारमितियोग्यतयासंबधः स्वपदमिति
शेषोक्तिः वेदादिष्वित्यस्ययोग्यतयालाभः ॥ मानुषप्रजाइति ॥ मुक्तियोग्यतमोयोग्यवर्गयोःफलस्योक्त्वा-
द्विशपइत्यनेनमनुष्याएवविवक्षिताइतिभावः ॥ ॐ अतस्त्वितरज्यायोलिंगाच्च ॐ ॥ अतोदेवसमुदायादितरद-
सुरजातंज्यायः अतिबहुलं कुतःलिंगात् तस्मादितिजनसमुदायप्रवेशनिषेधान्यथानुपपत्तिलिंगात् चशब्दात्कनीया
इत्येतिश्रुतेश्चेत्यर्थः । जनताजनसमुदायः असुराणांबहुलत्वएवजनसमुदायेतेषामपिसत्वेनतत्संगदोषाभावायतत्प्रवे-
शनिषेधउपपद्यते नान्यथेतिभावः ॥ ततस्तयोरिति ॥ अनेनतयोरितिनिर्धारणार्थकषष्ठीद्विवचनांतात्तात्सिद्धि
रित्युक्तंभवति ॥ ॐ तद्भूतस्यतुतद्भावोजैमिनेरपिनियमात्तद्रूपाभावेभ्यः ॐ ॥ तद्भूतस्यतुदेवादित्वंप्रा
प्तस्यैवदेवादिभावोजैमिनेरपिसित्यः कुतः नियमात्तद्रूपाभावेभ्यः नासुरादैवीमितिनियमश्रुतिः नासुराणांदै
वंरूपमित्यतद्रूपत्वश्रुतेरभावस्याभूतेः उपलक्षणमेतत् भावस्यभूतेर्भूतिरितिदेवारभूतिरसुराइतिश्रुतेरित्यर्थः ॥ पु
रुषार्थाधिकरणेति ॥ तत्रज्ञानस्यैवसर्वपुरुषार्थसाधनत्वमितिव्यासमतंदेवापेक्षया ज्ञानपूर्वकर्मणएवस्वर्गादिहेतुत्व

मितिजैमिनिमतंमनुष्यापेक्षयेतिविकल्पस्तथात्रनेत्यर्थः । भवनस्यसर्वसाधारणत्वादाह ॥ **भूतिमंतइति** ॥ **सुसे-
षुस्थितइति** ॥ देवानामपिसर्वेषांप्रधानेष्वपिमारुतः । स्थित्वाभूतेषुविष्णुंतद्भूर्भूरित्येवशंसतीतिवचनादितिभावः
॥ **एतावतेति** ॥ शापेनदेवानामसुरादिजन्मप्राप्तिरित्येतावतेत्यर्थः ॥ **हेतुनइति** ॥ जपाकुसुमसन्निधानाद्यथास्फ
टिकेरक्तत्वमौपाधिकमेवप्रतीयतेतथादैत्यत्वमपितेषुशापनिमित्तंप्रतीयतइत्यर्थः ॥ ५ ॥ **अतीताधिकरणेति** ॥ ज्ञान-
स्ययोग्यैरेवप्राप्यत्वमित्यत्रसाधकत्वेनोक्तश्रुतिस्मृत्यादीत्यर्थः । ननुनिःस्वभावस्यवस्तुनोभावांग्रस्त्वभावत्वेनायास्यति-
तदेवदेवत्वादितिभ्रमइत्यतआह ॥ **यत्धीति** ॥ **अनोज्ञानमपीति** ॥ अपरोक्षज्ञानस्यदेवतापदहेतुत्वात्तदप्राप्तौत-
त्प्राप्तेरेवायोगादितिभावः ॥ ॐ **नचाधिकारिकमपिपतनानुमानात्तदयोगात्** ॐ ॥ आधिकारिकंब्रह्मादिप-
दमपिज्ञानिभिर्नाकांक्ष्यंकिम्वीश्वरपदं कुतः तदयोगात् तदाकांक्षायाअयोगात् कुतः पतनानुमानात् अयोग्यवृक्षारोहप्र
यत्नयुक्तदृष्टांतेनतत्पदारोहप्रयत्नवतामपिपतनानुमानादित्यर्थः । ननुब्रह्मादिपदाकांक्षावतितद्विषयकप्रयत्नाभावादसि-
द्धिरित्यतआह ॥ **इच्छायाअपीति** ॥ अत्रप्रयत्नशब्देनप्रवृत्तिर्विवक्षिता प्रवृत्तिविशेषत्वांगीकारादित्यर्थः ।
यथोक्तंसुधायां । तत्रसंधानगोचरेच्छाप्रयत्नौप्रवृत्तिरित्युच्यतइति देवतापदमपिसायुज्यादिमोक्षविशेषसाधनमितिनक्षु-
द्रोपद्रवः । तथाचयोग्यारोहप्रवृत्तिमत्वादितिहेत्वर्थोध्येयः । स्वधर्मनिष्ठइत्यादिवाक्यगतिमाह ॥ **प्रयत्नस्येति** ॥
उत्थितेःपुरुषधर्मत्वादाह ॥ **यत्रपतितस्येति** ॥ **इच्छामात्ररूपस्येति** ॥ उक्तप्रवृत्तिद्वयेइच्छारूपप्रवृत्तिरित्यर्थः ।
मायाभिरित्यस्यार्थःकुविद्याभिरिति उच्छब्दार्थःउत्तमत्वमिति सिसृप्सतइत्यस्यार्थःप्राप्तुमिच्छतइति सृगतावितिधा
तोरितिभावः अवेत्यस्यार्थोधेतमसीति ॥ ॐ **उपपूर्वमपीत्येकेभावशमनवत्तदुक्तं** ॐ ॥ देवानामुपसमीपेवर्त

मानानांगंधर्वादीनांपदमुपशब्दोक्तंतत्पूर्वंतत्प्रभृत्यपिनाकांक्ष्यंकिमुदेवपदं कथंभावशममभवत् भावेचित्तेचेष्टायांचशमनात् भावशमनाऋषयःतत्पदवन्नाकांक्ष्यंकिमुदेवपदमित्येकेप्राहुः कुतः तद्दर्शनाकांक्ष्यमित्येतद्यथार्षीनित्येतच्छ्रुतावुक्तंयतइत्यर्थः। आर्षान्नृषिसंबंधभूतान्तत्पदाकांक्षानिषेधस्यैवप्रकृतत्वादितिभावः। ननुगंधर्वादिपदस्यानाकांक्ष्यत्वेतत्समऋषिपदंकथं दृष्टांतः तत्रनाकांक्ष्यत्वनिश्चयेमुनिपदेपितदनिश्चयादित्यतआह ॥ **मुनिपदस्येति** ॥ एकस्मिन्नेवेति ॥ गंधर्वादिपद इत्यर्थः ॥ अन्यतरस्येति ॥ गंधर्वादिपदस्याकांक्ष्यत्वानाकांक्ष्यत्वयोरन्यतरस्येत्यर्थः ॥ **वस्तुविकल्पेति** ॥ एकस्मिन्नेवगंधर्वपदेआकांक्ष्यानाकांक्ष्यत्वरूपविरुद्धधर्मासंभवादित्यर्थः॥ ॐ **बहिस्तूभयथापिस्मृतेराचाराच्च** ॐ॥ देवादिपदेभ्योबहिर्बहिर्भूतेज्ञानादौतुविशेषोस्ति सकः उभयथापिआकांक्षायामनाकांक्षायांचनपतनं कुतः देवऋषीति स्मृतेः आचारात् नानात्वमेवकामानामित्यविरुद्धकामेनाचारप्रतिपादकवाक्याच्चेत्यर्थः। ननुविज्ञानभक्त्यादिकम प्यतीतवत्साधनंकामबहिष्कृतंचेन्नसाधनंस्यादित्यादिनाज्ञानभक्त्यादेरवश्यमाकांक्ष्यत्वविधानात्कथमनाकांक्षायांनपतन- मित्यतआह ॥ **आकांक्षायामिति** ॥ **अनियमेति** ॥ अनाकांक्ष्यमेवेतिनियमाभावसूचनमित्यर्थः। विहायका मान्यःसर्वान्पुमांश्चरतीतिगीतावचनं। तादृशस्यसर्वथाकामरहितस्य ॥ ६ ॥ अस्वामिनःप्रेर्यजनस्यप्रयोजकत्वंप्रेरकत्वं ॥ ॐ **स्वामिनःफलश्रुतेरित्यात्रेयः** ॐ ॥ स्वामिनांदेवानामेवज्ञानफलं नप्रजानां कुतः स्वामीहिफलमश्नुतइति स्वामिनःप्रेरकस्यैवफलश्रवणादित्यात्रेयाचार्योमन्यतइत्यर्थः ॥ **वेतनादीति** ॥ अस्वामिनोभृत्यादेर्दृश्यतइत्यर्थः। दीयमानत्वात् देवैःप्रजानां देवाएवतदाचरंतिदेवाएवताद्विजानतइत्यनेनदेवानांह्येतद्भवतीत्यस्यपौनरुक्त्यपरिहाराय- व्याचष्टे ॥ **कुतोदेवतानामिति** ॥ ॐ **आर्त्विज्यमित्यौडुलोमिःतस्मैहिपरिक्रियते** ॐ ॥ आर्त्विज्यंऋ

त्विजोफलमिवप्रजानामपिफलंभवति कुतः हियस्माचस्मैप्रजार्थेदेवैर्ज्ञानादिपरिक्रियते संपाद्यते तस्मादित्यौडुलोमिराचार्योमन्यतइत्यर्थः । ननुकथंश्रुत्यादेःप्रजानामल्पफलसद्भावाभिप्रायकत्वंस्यात् नास्वामीकर्मकुर्वाणइतिनिषेधसद्भावादित्यतआह ॥ अल्पस्वइति ॥ अल्पधनवतीत्यर्थः । तथालोकइतियदर्थंयद्येनक्रियतेतत्फलंतस्येतिलोकेदर्शनादित्यर्थः । उक्तंचन्यायविवरणे । मनुष्याणांत्वरयैवसिद्धिर्देवानामत्वरयैवसिद्धिस्तेषांमहाफलभाक्त्वात् तेषांदेवानांप्रसादेनैवसतांनृणांमुक्तिरित्यर्थः ॥ ॐ **सहकार्यंतरविधिःपक्षेणतृतीयंतद्वतोविध्यादिवत्** ॐ ॥ प्रजानांदेवान्प्रतिसहकार्यंतरविधिराचार्यरूपसहकारिलक्षणसहकार्यंतरत्वेनविधानं पक्षेणपक्षत्वेन तृतीयं तृतीयःपक्षः कथंतद्वतोविध्यादिवत् तद्वतोप्रजावतोराज्ञःसहकारित्वेनप्रजाविधानफलवदित्यर्थः । नन्वत्रप्रजानामपिफलमस्तीत्युच्यते । तच्चौडुलौमिनाप्यंगीकृतमेवतत्कथमस्यतृतीयत्वमित्यतआह ॥ **एतद्वक्ष्यमाणमिति** ॥ देवानांज्ञानदानंकर्तव्यमित्यादिवक्ष्यमाणमित्यर्थः । औडुलौमिनाज्ञातंपक्षंवक्तुंतावच्छंकांप्रतिषेधति ॥ **प्रजार्थमिति** ॥ श्रुतमित्यनुवादः ॥ ७ ॥ सर्वाश्रमिणांसकाशात् ॥ **आचार्यकुलादिति** ॥ मुमुक्षुराचार्यकुलाद्वेदमधीत्ययथाविधानमित्येतत्पूर्वोत्तराभ्यांसंबध्यते कामसेवारूपंदाराणारूपंवा अतिशेषेणअशेषेणकृत्वाकुटुंबीग्रहस्थाश्रमवान् क्वचित्कुटुंबइतिपाठः तदावर्तमानइतिशेषः । धार्मिकान् व्यापारान्विदधत्कुर्वाणः आत्मनिपरमात्मनिसर्वेंद्रियाणिप्रतिष्ठाप्यानियम्यतीर्थेभ्योयज्ञेभ्योन्यत्रविनासर्वाणिभूतान्यहिंसन्वर्तमानस्त्वंपरमात्मानंदृष्ट्वाब्रह्मलोकमभिसंपद्यते प्राप्नोति प्राप्तश्चपुनर्नैवावर्ततइत्यर्थः ॥ उपसंहारस्त्वाचेति ॥ उपनिषत्परिसमापनाचेत्यर्थः ॥ ॐ **कृत्स्नभावात्तुगृहिणोपसंहारः** ॐ ॥ गृहिणोग्रहस्थस्यमोक्षमुक्त्वोपसंहारस्तुदेवविषयः कुतःदेवानांकृत्स्नभावात् कार्त्स्न्येनगार्हस्थवत्वादित्यर्थः ॥ **आधिक्यानियमादिति** ॥ तथाचयतेर

प्याधिक्यमितिभावः । यतःसकाशादगृहिभ्योमनुष्येभ्यः एकत्वंसामानाधिकरण्यं ॥ ॐ **मौनवदितरेषामप्युप-**
देशात् ॐ ॥ मुनेर्भावोमौनं यतित्वं तद्वदितरेषामाश्रमधर्माणांदेवाएवेतिश्रुतावुपदेशादित्यर्थः । सर्ववर्णाइत्यस्यदार्ष्टांति
कत्वभ्रमंवारयति ॥ **सर्वाश्रमाइति** ॥ सर्वहीतिहिशब्दार्थमाह ॥ **अयंतत्रेति** ॥ तत्रसर्वाश्रमत्वेसर्ववर्णवत्वेचेत्यर्थः
॥ ८ ॥ अधिकःअधिकफलवान् ॥ ॐ **अनाविष्कुर्वन्नन्वयात्** ॐ ॥ अनाविष्कुर्वन् आविष्कारंप्राकट्यमकुर्वन्नेवो
पदिशेत् कुतःअन्वयात् अन्यथानर्थप्राप्तिरूपयुक्त्येत्यर्थः । पूर्वभाष्यंव्याकुर्वन्नेवोत्तरभाष्यमवतारयति ॥ **यत्नइति** ॥
साचेतिवक्तव्येतच्चेतिकथमुक्तमित्यतआह ॥ **अयोग्येभ्यइति** ॥ अंधेतमसीतिविशेष्याध्याहारः स्थातुंयोग्याइतियो
ग्यतयालाभः निरामिणइत्यस्यतात्पर्यरामविरुद्धाइति रामस्यरमणरूपस्यहरेर्जीवतादात्म्यरूपेणज्ञानेननीचतांविदइत्यर्थः
॥ **आकांक्षावंतइति** ॥ गृधुआकांक्षायामितिधातोरितिभावः ॥ **स्तेनेभ्यइति** ॥ ब्रह्मस्तेनेभ्यइत्यर्थः । व्रयइत्य-
स्यार्थोवरत्वेसतिनियामकइति वरत्वावकारस्थाकारलोपोयातेःकमत्ययेयंनियामकंव्रंचतद्यंचेतिविग्रहः । लिंगव्यत्य-
यछांदसइतिभावः । ओहतइत्यस्यार्थोवहंतीति साम्नइत्यस्यततइति विष्णोरित्यर्थः । तितिक्षवःद्वंद्वसहिष्णवःकारु
णिकाःदयालवः ॥ ९ ॥ **अन्यथेति** ॥ प्रतिबंधकाभावसहकृतसाधनसंपत्तावप्यनुदयइत्यर्थः ॥ **स्वर्गादिव-**
**दिति** ॥ यागादिरूपसाधनसंपूर्तावपितस्यैतज्जन्मन्यलाभवदत्रापितथेत्यर्थः ॥ **तदभावादिति** ॥ साध-
नसंपत्तावपिइहजन्मनिज्ञानोदयाभावादित्यर्थः ॥ ॐ **ऐहिकमप्रस्तुतप्रतिबंधेतद्दर्शनात्** ॐ ॥ अप्रस्तुतप्र
तिबंधेप्रस्तुतेनप्रारब्धकर्मणाप्रतिबंधाभावेज्ञानमैहिकंइहजन्मन्येवभवति नचेज्जन्मांतरेभवति कुतःतद्दर्शनात् तस्योक्तार्थ
स्यश्रुत्वात्मानमितिश्रुतौदर्शनादित्यर्थः । उक्तदोषःकारणाभावरूपः ॥ १० ॥ तद्देहानंतरं तद्देहपातानंतरं ॥ ॐ एवंमु

क्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॐ ॥ एवंज्ञानइवमुक्तिफलेमोक्षरूपेफलेप्यनियमः ज्ञानोत्पत्ति जन्मांतरमेवभवतीतिनियमोनास्ति किंतुप्रारब्धप्रतिबंधकसद्भावेदेहांतरावसानेपिभवति कुतस्तदवस्थावधृतेः तस्मिन्ब्रह्मणिअवस्थावस्थितिर्निष्ठायस्यतस्यावधृतेर्ब्रह्मसंस्थइतिश्रुतौमुक्तिफलावधारणादित्यर्थः ॥ कुतोत्रेति ॥ व्यभिचाराज्ज्ञानमोक्षयोःकार्यकारणभावएवनास्तीतिनस्यादितिभावः ॥ तदनुपपत्तेरिति ॥ श्रुतौकार्यकारणभावानुपपत्तेरित्यर्थः । श्रुतेरर्थांतरंवक्तुंपूर्वोक्तमर्थमनुवदति । अनियमेकदापीत्यादिना ॥ युक्त्येति ॥ प्रतिबंधकसद्भावरूपयुक्त्येत्यर्थः । तत्रचैषाश्रुतिःप्रमाणमिति तत्रप्रतिबंधकसद्भावरूपयुक्तौप्रमाणंश्रुतार्थापत्तिरूपतयेत्यर्थः ॥ मोक्षनियमेचेति ॥ शब्दविषयेत्यर्थः । तदेवोपपादयति ॥ ज्ञानिनइति ॥ एकजन्मप्राप्त्यनंतरमपिजायमानमुक्तिसंग्रहार्थमाह ॥ बहूनीति॥ जन्मांतरइत्यर्थः ॥ ११ ॥ इतिश्रीमत्तत्वप्रकाशिकावाक्यार्थमंजर्यांशर्कराश्रीनिवासविरचितायांतृतीयाध्यायस्यतुरीयश्चरणःपर्यवसितः ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ इति श्रीमत्तत्वप्रकाशिकावाक्यार्थमंजर्यां त्रितीयाध्यायःसमाप्तः ॥

॥ इति श्रीमत्तत्वप्रकाशिका वाक्यार्थमंजर्यां ॥

## ॥ तृतीयाध्यायः समाप्तः ॥

॥ श्रीगुरुभ्योनमः ॥ विनाश्यकर्मनिचयमुत्क्रम्याचिंमुखात्पथः । प्राप्तेभ्योह्यात्मनिकटंनमःस्वानंदमूर्तये ॥ १ ॥ फल
निरूपणस्येदानींकासंगतिरित्यतआह ॥ विरक्त्यादीति ॥ असाधारण्येति ॥ तपःकर्मादिनापिसाध्यत्वेनज्ञा
नंविनानसंभवतीत्येवंरूपासाधारण्यंनास्ति ताहशासाधारणफलंमोक्षरूपंनिगद्यतइत्यर्थः ॥ उक्तमिति ॥ विद्यैवतु
निर्धारणादित्यत्रेत्यर्थः । कर्मनाशस्यकथंज्ञानासाधारणफलत्वं एवंतत्कथनमस्मिन्नध्यायेसंगतंस्यात् तथात्वेवासामर्थ्य-
कुतइत्यतआह ॥ ज्ञानफलमिति ॥ एतत्कर्मनाशाख्यंफलमितिभाष्यं उत्तरमाह ॥ उक्तमेवेति ॥ सर्ववेदांतप्रत्य
यमित्यत्रश्रवणाद्यावृत्तेःकर्तव्यत्वं आनंदादयःप्रधानस्येत्यत्रात्मत्वोपासनस्यकर्तव्यत्वं । तत्रैवसर्वस्वामित्वेनोपासनोक्त्या
विष्णुप्रतीकैक्योपासनस्यदेवैःकर्तव्यत्वमित्यत्रब्रह्मत्वोपासनस्यकर्तव्यत्वं अंगेषुयथाश्रयभावइत्यत्र आदित्यादीनांभगवच्च
क्षुराश्रितत्वेनोपासनस्यदेवैःकर्तव्यत्वं । अनुबंधादिभ्यइत्यत्रासनादेरावश्यकत्वं अन्यैर्गुणैर्देवगणाउपासतइतिश्रुतिप्रा
हकेदर्शनाच्चेत्यत्रोत्पन्नापरोक्षज्ञानिनांगम्योपासनोक्त्योपासनस्यमोक्षांतत्वंचोक्तमेवेत्यर्थः । ननुतर्हितैरेवाधिकरणैरेतेषां
सप्तानामधिकरणानांगतार्थत्वमितिशंकते ॥ पुनःकिमिति ॥ परिहरति ॥ तस्यैवेति ॥ उपलक्षणमेतत् परमाद
रेणेत्यपिद्रष्टव्यं । प्रयोजनंचपृच्छति ॥ किमितीति ॥ सर्वथाभाव्यमित्युक्तस्यपरिहारमाह ॥ तद्विनेति ॥ आदरनैरंतर्या
भ्यांश्रवणाद्यावृत्तिकरणादिनाविनापरोक्षज्ञानाभावेनचतुर्विधमोक्षमध्येकस्यापिभागस्याभावादितिभावः । अत्रसत्पाधि
करण्यां ॥ व्यवस्थाभावविरोधइति ॥ व्यवस्थाभावलक्षणोविरोधइत्यर्थः ॥ प्रायेणेति ॥ प्राधान्येनेत्यर्थः ।
साधनेनविचारप्रासंगिकइतिभावः ॥ अतएवेति ॥ प्रासंगिकत्वादेवेत्यर्थः । आवृत्तिःकिंफलायवातपूरणाय आ
द्येआह ॥ सकृदनुष्ठितेति ॥ द्वितीयेआह ॥ श्रवणादीति ॥ साधनेति ॥ अवहननादीत्यर्थः । अना-

वृत्त्यैवेतिपदच्छेदः ॥ **नचेति** ॥ अननुभवादितिभावः ॥ ॐ **आवृत्तिरसकृदुपदेशात्** ॐ ॥ अपरोक्षज्ञानार्थं श्रवणादीनामावृत्तिःकार्या कुतः सआत्मातत्वमसीत्युद्दालकेनश्वेतकेतुंप्रत्यसकृदनकवारंतत्वोपदेशादित्यर्थः । नव कृत्वः नववारं ॥ **अदृष्टेति** ॥ अप्रत्यक्षेत्यर्थः । व्रीहीनवघातविधिर्व्रीहीनवहंतीत्यादिरूपः ॥ ॐ **लिंगाच्च** ॐ ॥ सतपोतप्यतेत्यादिनाश्रुताद्भृगोःश्रवणादेरावर्तनलिंगाच्चश्रवणाद्यावृत्तिःकार्येत्यर्थः ॥ **एतस्माइति** ॥ वरुणस्तस्मैभृग वेएतद्वक्ष्यमाणंभगवद्रूपंप्रोवाच किंतत् अन्नंसर्वाधृत्वादन्नशब्दवाच्यं प्रकृष्टचेष्टावत्वात्प्राणंचष्टेसर्वंपश्यतीतिचक्षुः सर्वश्रवणाच्छ्रोत्रं मननात्सर्वावबोधनान्मनः सर्वस्यवचनाद्वाचंब्रह्मेतिप्रोवाचेत्यर्थः । प्रश्नोऽधीहिभगवइत्याद्युक्तिः तस्माइत्याकारिका सतपोतप्यतइत्यादंशलभ्यमाह॥ **श्रुतस्येति** ॥ **अलोचनेनेति** ॥ मननिदिध्यासनेनेत्यर्थः ॥ १ ॥ ॥ **स्वस्वामिभावसंबंधस्येति** ॥ आत्मशब्दोक्तस्येत्यर्थः ॥ **अयुक्तमिति** ॥ विष्णोःसर्वस्वामित्वस्योपास्यत्वएव एतदर्थसर्वोत्कर्षेदेवदेवस्यविष्णोर्महातात्पर्यमित्यादिनातत्रतात्पर्योक्तिःसार्थिकास्यादन्यथान्यर्थेतिभावः ॥ ॐ **आत्मे तितूपगच्छंतिग्राहयंतिच** ॐ ॥ आत्मशब्दस्यावृतिः आद्योरूढोविष्णुपरः अंत्यआदत्तेभृत्यानितियोगेनस्वामिवा- चीतुएव तथाचात्माविष्णुरात्माममस्वामीत्येवोपगच्छंत्युपासतेग्राहयंतिशिष्येभ्यउपदिशंतिचसज्जनाइत्यर्थः ॥ आ- त्माहीति ॥ यस्मादेषममात्मास्वामीभवत्यतोनाविद्यमानोपासनमेतदित्यर्थः ॥ **अहंग्रहमिति** ॥ अहमितिगृह्यमाणत्वे- नोपासनमित्यर्थः ॥ **अयुक्तंस्यादिति** ॥ प्रतीकभूतनामादौतस्यस्वामित्वासंभवेनसर्वस्वामित्वायोगादितिभावः ॥ **नामब्रह्मेत्युपास्तइति** ॥ योनामब्रह्मेत्युपास्तेतस्याधिकारिणोनाम्नोयावद्गतंगमनमस्तितत्रलोकेयथायोग्यतानतिक्र मेणकामतःसंचारोभवतीत्यर्थः॥ २॥ ॐ **नप्रतीकेनहिसः** ॐ॥प्रतीकेनामादिप्रतिमाविषयेब्रह्मत्वेनोपासनानकार्या कुतः

हियस्मात्कारणात्सविष्णुःप्रतीकंनभवतीत्यर्थः । प्रथमादित्यादिपदेननामोपास्येत्यादिद्वितीयाग्राह्या ॥ ससास्वेति ॥
प्रथमाविभक्तिःसप्तसुप्रथमाविभक्त्यादिसप्तविभक्त्यर्थेषुवाचकतयाप्रवर्ततइत्यर्थः ॥ षट्स्विति ॥ द्वितीयाविभक्तिः
द्वितीयादिषड्विभक्त्यर्थेषुवर्ततइत्यर्थः । ननुनवयंब्रह्मणिप्रतीकोपासनंब्रूमः येनब्रह्मकुपितमनर्थंप्रयच्छेत् किंतुप्रतीकेब्रह्म-
त्वोपासनंततःपुरुषार्थप्राप्तिदर्शनादित्याशंक्यानिषेधति ॥ नचवाच्यमिति ॥ कुतोनवाच्यमितिचेत् क्षत्तरिराजदृष्टेर
भावात् ननुदृष्ट्यभावेतथाव्यवहारःकथमित्यतआह ॥ क्षत्तैवराजेत्यस्येति ॥ क्षत्तरिराजदृष्टिःकुतोनेत्यतआह
॥ ज्ञानेनेति ॥ ३ ॥ ब्रह्मत्वइति ॥ पूर्णत्वइत्यर्थः । भूम्नःपूर्णत्वस्य ॥ विशेषहेतुरिति ॥ मोक्षस्यतदन्वयव्यतिरे-
काविधायित्वरूपइत्यर्थः ॥ ॐ ब्रह्मदृष्टिरुत्कर्षात् ॐ ॥ ब्रह्मत्वस्यपूर्णत्वस्यदृष्टिरुपासनाकार्यैव कुतः उत्कर्षात्
उत्कर्षस्यभगवदुत्कर्षस्य ब्रह्मपदप्रवृत्तिनिमित्तत्वादित्यर्थः । ब्रह्मत्वंब्रह्मपदप्रवृत्तिनिमित्तत्वं तत्कथमित्यतउक्तं । अत्रसर्वगु
णांतर्भावेनेति आविर्भावितसर्वगुणत्वमेवसर्वोत्कृष्टत्वमितिभावः । ननुभगवदुत्कृष्टत्वस्यब्रह्मशब्दप्रवृत्तिनिमित्तत्वेपरमे-
श्वरेब्रह्मदृष्टिःकार्येत्यत्रकथंहेतुरित्यतआह ॥ तथाचेति ॥ सर्वतःसर्वेभ्यः ॥ ४ ॥ तन्न्यायेनेति ॥ अंगाश्रितत्वस्यापिस्व
स्वामिभावविशेषरूपत्वादितिभावः । उक्तमंगावबद्धास्त्वित्यनेन ॥ ॐ आदित्यादिमतयश्चांगउपपत्तेः ॐ ॥
अंगेभगवदंगे आदित्यादिमतयः आदित्यादेरुपासनाश्चकार्याः कुतः उपपत्तेः मुक्तौतत्प्रवेशरूपफलस्यापेक्षितत्वेनतासा
मुपपन्नत्वादिभावः । स्मृतावित्थंभावाप्रतीतेराह ॥ स्वाश्रयत्वेनेति ॥ ५ ॥ नद्युपदेशेनेति ॥ आसनप्रतिपादकागमत्र
य्यर्थ्यप्रसंगादित्यर्थः ॥ उपविश्येति ॥ आसनेउपविश्यात्मविशुद्धयेयोगंयुंज्यादित्यन्वयः ॥ अनुपपत्तेरिति ॥
सर्वदा आसनस्थत्वासंभवेनमनसोभगवतिनिवेशनासंभवादितिभावः ॥ ॐ आसीनःसंभवात् ॐ ॥ आसीनः आसने

उपविष्टएवोपासनंकुर्यात् कुतः संभवात् तस्यैवोपासनासंभवादित्यर्थः ॥ चित्तविक्षेपासंभवादिति ॥ ध्यानावि रोधिबहुचित्तविक्षेपाभावादित्यर्थः । शंकते ॥ आसीनस्येति ॥ तर्ह्यासनमेवकुतइत्यतआह ॥ ॐ ध्यानाच्च ॐ ॥ आसीनेक्रियमाणस्यध्यानत्वादविरोधइत्यर्थः ॥ पुनरिति ॥ उपासनंहिद्विविधंभवतीत्यादिनोक्तमित्यर्थः । भाष्ये उपासनंस्मरणंध्यानात्मकंचेतिद्विविधमित्यर्थः ॥ प्रत्याहारेति ॥ इंद्रियाणांविषयेभ्यआहरणेत्यर्थः ॥ ॐ अचल- त्वंचापेक्ष्य ॐ ॥ नकेवलंप्रत्याहारादिनाकिंतुशरीरस्याचलत्वंचापेक्ष्यचित्तविक्षेपाभावोभवतीत्यर्थः ॥ ॐ स्मरं- तिच ॐ ॥ कृष्णादयउक्तमर्थमुपविश्यासनेत्यादिनास्मरंतिचेत्यर्थः । कायशिरोग्रीवमचलंसमंधारयन्नित्यनेनेदंशरी- रस्थैर्यलाभायास्मरणं पुनरुक्तमित्यतआह ॥ स्थिरःस्थिरमनाइति ॥ नन्वत्रस्मृतावासनस्यावश्यत्वानुक्तेकथमुदाह रणमित्यतआह ॥ अतएवेति ॥ दिशश्चानवलोकयन्भुवमिविश्यासनेयुंज्यादितिसंधानादित्यर्थः ॥ ॐ यत्रैकाग्रतात- त्राविशेषात् ॐ ॥ यत्रदेशकालादौध्यानस्यैकाग्रतान्यपरित्यागेनभगवन्मात्रविषयतास्यात् तद्देशादौध्यानंकार्यं कुतः अविशेषात् नियतदेशादिनाध्यानेविशेषाभावादित्यर्थः । उपलक्षणंभोगादेः अवस्थादिष्वित्यादिपदेनारोग्यादेर्ग्र हणमितिभावः । एवंचन् देशकालादीनांकिमित्यादिरीत्या ॥ प्रथमस्यदूषणमिति ॥ तत्रदेशादेःप्रसादहेतुत्वोक्त्या ध्यानोपयोगितानिषेधादितिभावः । तत्र ध्यानोपयोगित्वाभावे अवस्थितिरासनमितिदेशकालयोःपृथगुक्तिरितिभावः । नन्वेवंसत्यासनस्यापिदेशकालादिवदनियमेनागुक्तविरोधादित्यतआह ॥ तच्चेति ॥ आसनसामान्यस्यावश्यकत्वेपिन तद्विशेषनियमइतिभावः ॥ ६ ॥ ध्यानफलाभावप्रसंगेनेति ॥ अपरोक्षज्ञानानंतरंकृतध्यानस्यानंदाभिवृद्धिलक्षणफला भावप्रसंगेनेत्यर्थः । ननुश्रवणादित्रयस्यज्ञानसाधनत्वेपिध्यानमेवप्रबलंसाधनमेवमत्रापिसाधनस्यप्राबल्यंकिंनस्यादित्यत

ाह । ज्ञानएवेति ॥ ॐ आप्रायणात्तत्रापिहिदृष्टं ॐ ॥ आङ्मर्यादायांप्रकर्षेणायनंप्रायणं मोक्षः ध्यानं आप्रा-
यणंमोक्षपर्यंतंकार्यं कुतः हियस्मात्सयोहेतिदृष्टंश्रुतिरस्ति किंचतत्रापिमुक्तावपिध्यानमकुर्वतोकिंमुततत:प्राक् तदेवकुतः
हियस्मान्मुक्तावपीतिदृष्टमित्यर्थः ॥ ॐकारोहरिरिति ॥ ओमित्याक्रियमाणत्वादितिभावः । भाष्योदाहृतश्रुति
र्थे उपासनामात्रस्यश्रुतत्वात्किमर्थंतत्पूर्वभाष्ये उपासनादीत्यादिपदप्रयोगइत्यतआह ॥ ज्ञानात्पूर्वमिति ॥ ज्ञानानंतरं
श्रवणादीत्यत्रगीताभाष्योदाहृतप्रमाणमाह ॥ उक्तंहीति ॥ वर्तयंति वर्तंते कालंनयंतीत्यर्थः ॥ मोक्षविरोधा-
दिति ॥ ज्ञानोत्तरंनिरवधिकध्यानस्याविहितत्वेनकरणेमोक्षेपितथाकरणापत्त्याविधिबंधवर्जितत्वरूपमोक्षत्वविरोधादित्यर्थः
॥ कारणानुपपत्तेरिति ॥ मोक्षात्पूर्वमित्यर्थः । कारणं आनंदवृद्धेः ॥ ध्यानस्यैवेति ॥ शमशब्देनतत्रध्यानस्यैव-
विवक्षितत्वादितिभावः ॥ ७ ॥ उक्तव्याहतेरिति ॥ अनियमःसर्वेषामित्युक्तव्याहतेरित्यर्थः ॥ अनियतदेशेति ॥
कर्मणांव्यवस्थितदेशकालयोःफलोन्मुखत्वायपरिपाकशून्यत्वादित्यर्थः । तथाचयौगपद्यमितिभावः ॥ भोगस्यापीति ॥
योगसामर्थ्येननिवारणोपपत्तेरितिभावः । जातु कदाचित् विप्रतिपत्तेः दृष्टांते प्रायश्चित्तेनकर्मक्षयाभावेतद्विधायकश्रुतिवै
यर्थ्यमितिभावेनाह ॥ ब्रह्मह्रेति ॥ ब्राह्मणहंतेत्यर्थः ॥ दग्धगेहेष्टिविधिवदिति ॥ यथागेहेदग्धेसतिगृहस्थे
नइष्टिविशेषोगृहदाहनिमित्तस्त्रैवर्णिकेनक्रियतेनतुदाहपरिहारार्थं कृतायामपीष्टौदग्धगेहस्यपुनरावृत्त्यभावात्तथाप्रायश्चित्तस्यापि
ब्रह्महननादिनिमित्तत्वमेवनतुतज्जातपापपरिहारार्थमित्यर्थः ॥ अस्त्वेवेति ॥ स्मृतेश्चाकृतप्रायश्चित्तविषयत्वमिति
भावः ॥ निष्कारणेति ॥ संसारावस्थानेकर्मविनाकारणांतराभावादितिभावः । विरम्यक्रमिकतया येनैकस्मिन्काले
लब्धात्मनःकालांतरेकर्मविनाशत्वंस्यादितिभावः ॥ ॐतदधिगमउत्तरपूर्वाघयोरश्लेषविनाशौतद्व्यपदेशात् ॐ॥

तस्यब्रह्मणअधिगमेदर्शनेसत्युत्तरपूर्वाधयोरश्लेषविनाशौ उत्तरपापस्याश्लेषः पूर्वपापस्यचविनाशोभविष्यति कुतः तद्व्यपदेशात् तयोरश्लेषविनाशयोःक्रमेण तद्यथा पुष्करपलाशे तद्यथैषीकातूलमग्नाविति श्रुतिद्वयउक्तत्वादितिभावः । परत्वचनरकाद्यहेतुत्वं ॥ नदिति ॥ प्रायश्चित्तविधीत्यर्थः ॥ अग्निनाशेति ॥ आहिताग्निनाशेत्यर्थः । तथाचप्रत्यवायफलहेतुत्वेननवैय्यर्थ्यमितिभावः ॥ ॐ इतरस्याप्येवमसंश्लेषःपातेतु ॐ ॥ भगवद्द्वेषिणोमिथ्याज्ञानेन पातेतु अनुत्थाननमःपातेसमीपकालवर्तिनि इतरस्य तत्कृतपुण्यस्याप्येवंज्ञानिकृतपापस्येवाश्लेषविनाशौभवतइत्यर्थः ॥ पातार्थमिति ॥ अन्यथापुण्येनप्रतिबंधात्पातएवनस्यादितिभावः ॥ ॐ अनारब्धकार्येएवतुपूर्वेतदवधेः ॐ ॥ अनारब्धभोक्तुमनुपक्रांतेसुखदुःखरूपेकार्ये ययोः तादृशएवपूर्वे पूर्वोक्ते पुण्यपापे नश्यतः नतुप्रारब्धकार्ये कुतः मोक्षस्यतदवधेः प्रारब्धकर्मावधिश्रवणादित्यर्थः ॥ कर्मसद्भावइति ॥ कर्मणाविनाप्रतिबंधकांतराभावादितिभावः ॥ आद्यशब्देति ॥ तथात्वेउभयसंग्राहकमपदप्रयोगप्रसंगइतिभावः ॥ ॐ अग्निहोत्रादितुतत्कार्यायैवतद्दर्शनात् ॐ ॥ ज्ञानिनःपूर्वकृतमग्निहोत्राद्यकाम्यकर्म तत्कार्याय ज्ञानाख्यकार्यायैव पश्चात्कृतंतत्कार्याय मोक्षातिशयायैव कुतः तद्दर्शनात् तस्योक्तार्थस्यात्मानमेवेत्यादिश्रुतौदर्शनादित्यर्थः । उक्तरीत्यापूर्वकृतेत्यादिना एतदृत्युक्तं ॥ स्वल्पफलेति ॥ अपेक्षितपुत्रादिहेतुत्वेनज्ञानाद्यहेतुत्वादितिभावः ॥ ॐ अतोन्यदपीत्येकेषामुभयोः ॐ ॥ अतोकाम्यकर्मणोऽन्यदकाम्यमपिनाश्लेषविनाशावाप्नोति कुतः इत्येकेषामुभयोःपूर्वोत्तरपुण्ययोरिति एवंत्यागेनतस्यपुत्राइत्येकेषांशाखिनांपाठोस्तियतइत्यर्थः ॥ अत्रापीति ॥ सूत्रइवश्रुतावपीत्यर्थः अत्रक्रमेणहेतूनाह ॥ अकाम्यस्येत्यादिना ॥ विनियुक्तत्वाज्ज्ञानादौ ॥ ॐ यदेवविद्ययेतिहि ॐ ॥ हिशब्दवशाद्यदेवविद्ययाकरोतीतिश्रुतिरस्ति तस्माज्ज्ञानिकृतका

म्यकर्मणोमोक्षानुप्रवेशोयुक्तइत्यर्थः।ननस्यतीत्यादि पूर्वतनमिष्टंचेन् श्लिष्यतइत्यर्थः। कियतश्चित्कस्यचित् साक्षाद्दुःखाति शयहेतुत्वेन ॥ ॐ भोगेनत्वितरेक्षपयित्वाथसंपत्स्यते ॐ ॥ इतरेमारब्धपुण्यपापेभोगेनक्षपयित्वाथतदनंतरमेव संपत्स्यतेऽक्षतमोक्षमाप्नोति। कोयंविशेषइत्यतआह ॥ यदुक्तमिति ॥ अत्रभगवदनुग्रहेणज्ञानिकृतपापस्ययावत्स्वफलप्रदा- तृत्वाभावस्योक्तत्वादितिभावः। प्रजहातीत्यादिज्ञानिस्वरूपप्रतिपादकवाक्यतस्तस्यस्वसंबंधिककर्मत्यागश्रवणादितिभावः
॥ इतिश्रीमत्तत्वप्रकाशिकावाक्यार्थमंजर्यांशर्करायांचतुर्थाध्यायस्यप्रथमपादः ॥ श्रीकृष्णार्पणमस्तु ॥

॥ श्रीगुरुभ्योनमः ॥ तत्रोत्तमेषु ॥ उपासनावदिति ॥ चतुर्मुखाद्यधिकारिभेदेनसकलगुणोपासनंचतुर्गुणोपासनमित्याद्यवांतरवैचित्र्येविद्यमानेप्युपासनात्वेनैकीकृततत्तत्प्रतिपादकत्वेनपादैक्यंसंभवतीतिभावः ॥ उत्क्रांति ॥ अनियमइत्युक्तेत्यर्थः ॥ वागिति ॥ वाङ्नामाभगवान्विष्णुना।ग्निपूर्वरूपेपूर्ववर्णदेवतामनःमनोनामा उत्तरपूर्ववर्णदेवता तथावाङ्वागिंद्रियंपूर्वरूपंपूर्वभाविव्यापारत्वेनप्रधानंमनःमनोरूपेंद्रियंउत्तररूपंपश्चाद्भाविव्यापारत्वेनअप्रधानमित्यर्थः। एवमुत्तरत्रवाक्यसंपिंड्यथाव्याख्येया ॥ व्यामिश्रेति ॥ विरुद्धेत्यर्थः ॥ ॐ वाङ्मनसिदर्शनाच्छब्दाच्च ॐ ॥ वागभिमानीवाणीसौपर्णीच मनसि मनोभिमानिनिशेषेगरुडेच विलीयते कुतः दर्शनात् वाचोमनोवशत्वस्यप्रत्यक्षतएव दर्शनात्तस्यनयावदितिश्रुतिश्चेत्यर्थः ॥ मुनिमतविवादइति ॥ अथाध्यात्मंवाक्पूर्वरूपंमनउत्तररूपंप्राणःसंहितेतिशर्करीयाःमांडूकेयाआहास्यपुत्रआह ज्येष्ठोमनःपूर्वरूपंवागुत्तररूपंइतिशर्करीयोमांडूकेयतज्येष्ठपुत्राख्यमुनिमतविवादउच्यतइत्यर्थः ॥ अन्यतरेति ॥ मतद्वयेपिविष्णुरूपयोरेवपूर्वोत्तरवर्णदेवतात्वमितिभावः ॥ उभयोरपि ॥ वाङ्मनसनाम

कयोरुभयोरपिविष्णुरूपयोः प्रत्येकंपूर्वोत्तरवर्णप्रतिपाद्यत्वेनपूर्वोत्तरवर्णदेवतात्वमितिभावः ॥ युक्तेति ॥ मनसासं-
कल्पितस्यैववाचान्यवहरणरूपयुक्त्येत्यर्थः । युक्तिमात्रेणकथंश्रुतेरर्थांतरविषयत्वमित्यतआह ॥ प्रत्यक्षेति ॥ वाचो
मनोधीनत्वेपीति ॥ संकल्पव्यवहारेणप्रत्यययोरेवकारणत्वमितिभावः ॥ अनेकत्वेनेति ॥ ब्रह्मादेरपितन्नि-
यामकत्वादितिभावः । ननूमायास्तस्मिन्जन्मनिमोक्षाभावाद्रुद्रस्यमोक्षमार्गत्वाभावात्कथंतस्यास्तत्रमोक्षार्थंदेहलयइत्यत
आह ॥ अत्रोमापादेनेति ॥ ॐ अतएवचसर्वाण्यनु ॐ ॥ सर्वाणिचदेवतानि अनुस्वानियम्यनियामकभावानुसा-
रेणलीयंते कुतः अतएव अग्नौदेवाइतिश्रुतेरेवेत्यर्थः ॥ १ ॥ उक्तेति ॥ अनियमइत्युक्तेत्यर्थः ॥ ऊनत्वमुक्तमिति ॥
संकल्पादासोत्तमप्राणादूनत्वंसंकल्पाद्यवरमनसःकमुत्यासिद्धमित्यर्थः ॥ तत्रेति ॥ मनोवावाचोभूयइत्यत्रमनः
शब्दस्यपर्जन्यपरत्वादित्यर्थः । पर्जन्यःसर्वतोवरःमनोभिमानिनीसमोक्तइतिस्मरणादितिभावः ॥ स्मरशब्देनत
द्ग्रहणमिति ॥ स्मरोवावाकाशाद्भूयानित्यत्रतस्याश्चैवसदाशिवः स्थिरस्मृत्यभिमानीससमवेतरतेःस्मरइतिस्मरणा
त्स्मरशब्देनरुद्रग्रहणमित्यर्थः । तथाचतदुत्तरमासोत्तमप्राणोनन्वंरुद्रस्यासिध्यतीतिभावः ॥ ॐ तन्मनःप्राणउत्तरा-
त् ॐ ॥ तद्वाङ्नियामकत्वेनमनःमनोभिमानीसेषः सुपर्णश्च प्राणेचतुर्मुखे वाणीद्वारानिलीयते कुतः उत्तरात् वाक्य
नसीतिपूर्वोदाहृतवाक्यापेक्षयोत्तरान्मनःप्राणइतिवाक्यादित्यर्थः ॥ चतुर्मुखइति ॥ वायोरेतज्जन्मनिमुक्त्यभावेन
तत्रमनसोमुक्त्यर्थंदेहलयासंभवादितिभावः ॥ मनउदक्रामदिति ॥ सर्वदेवनिर्गमानंतरंमनोरुद्रउदक्रामत् ब्रह्मदेहा-
दूर्ध्वमगमत् तदासौदेहोनिर्मीलितनयनइवाश्नन्पिबन्नास्तेवनपपातेत्यर्थः । अथप्राणउदक्रामत्तस्मिन्प्राणउत्क्रांतेसत्यप
द्यतएव ततःपुनःसर्वदेवप्रवेशानंतरंमनोपिप्राविशत् तदाऽश्वयदेवनोत्थितः प्राणःप्राविशत् तस्मिन्प्राणप्राप्तेसत्युदतिष्ठत्

उत्थित इत्यर्थः ॥२॥ कस्यापीति ॥ सर्वेषांप्राणद्वारामोक्षनियमादितिभावः॥ पूर्वोक्तमेवेति ॥ प्राणस्यभगवदुत्प-
न्नत्वंविशेषप्रमाणादर्शनंचेत्यर्थः ॥ श्रुतिसद्भावादिति ॥ नप्राणःकिंचिदाश्रितइत्यादिश्रुतिसद्भावादित्यर्थः
॥ उक्तमिति ॥ अनन्येश्वरताप्राणेतदन्येश्वरवर्जनमितीश्वरेतरानधीनत्वंतच्च श्रुत्यर्थइतिचक्षुरादिवदित्यत्रोक्तमित्यर्थः
॥ महांतमिति ॥ अस्यप्राणस्यमहिमानंमहांतमाहुः कुतः यत्रसमात्स्वयमन्यैरनद्यमानः अभक्ष्यमाणएवान्नमत्ती-
त्यर्थः ॥ ॐ सोध्यक्षेतदुपगमादिभ्यः ॐ ॥ सप्राणोऽध्यक्षेपरमात्मनिविलीयते कुतः तदुपगमादिभ्यः तस्य
परमात्मनउपगमःप्राप्तिः आदिपदेनतदनुप्राणनतत्प्रवेशादितत्प्रतिपादकश्रुतिसद्भावादित्यर्थः ॥ इतिन्यायेनेति ॥
इत्युक्तन्यायेनेत्यर्थः । रुद्रादिसकलजीवप्राप्यत्ववत्तच्चेष्टकत्वादिनाश्रुत्युक्तस्वातंत्र्योपपत्तिरितिभावः । अन्यैःईशात्
॥ प्राणत्वइति ॥ वायुत्वावस्थायामित्यर्थः । तस्यचतुर्मुखत्वेनपुनर्जननात् विलीनोहिप्रकृतौसंसारमेतीतिश्रुतिरिति-
भावः॥३॥ प्रागुक्तेति ॥ अतएवचसर्वाण्यनुइत्युक्तस्याद्यमानामुत्तमेषुलयस्यबाधइत्यर्थः ॥ अन्याधीनत्वमिति ॥
इंद्राश्विन्यादीनांवायुवरुणरूपभूतांतराधीनत्वमित्यर्थः । विपर्ययइति भूतांतरलयइत्यर्थः । नियामकबाहुल्येनेति अश्वि-
नीप्रभृतिनियामकानांवायुवरुणादिभूतानांबाहुल्येनेत्यर्थः ॥ ॐ भूतेषुतच्छ्रुतेः ॐ ॥ प्रागुक्तेभ्योन्येदेवाभूतेषुपंचसु-
देहाभिमानिषुलीयंते नत्वेकस्मिन्नग्नौ कुतः तच्छ्रुतेःतस्यभूतेषुदेवलयस्यभूतेषुदेवाइति श्रवणादित्यर्थः॥अत्रविशेष्यो-
क्तेभ्यइति॥वाङ्मनसीत्याद्यधिकरणत्रयेशेषसुपर्णचतुर्मुखपरमात्मसुक्रमेणलीयमानत्वेनोक्तेभ्योवारुणीसौपर्णीशेषसुपर्ग
चतुर्मुखेभ्यइत्यर्थः । तेषांविशिष्यलयोक्तेरुक्तसंदेहाविषयत्वादितिभावः ॥४॥ तदेवोपपादयति ॥ अस्तीत्यादिना ॥
ननुप्रलयकालीनभूतलयस्योत्पत्तिक्रमविपरीतक्रमवत्वेपिमुक्तिकालीनदेवतालयप्रतिपादकश्रुतिगतस्यभूतेषुदेवाइतिवचन-

स्योपपत्तिः कथमित्यत आह ॥ **मुक्तिश्चेति** ॥ **मुख्यार्थइति** ॥ भूतेष्विति श्रुतेर्देवानां साक्षादेव भूतेषु लय इत्येवंरूपं मुख्यार्थ इत्यर्थः । अत्र उक्तमुख्यार्थे ॥ ॐ नैकस्मिन्दर्शयतो हि ॐ ॥ एकस्मिन्नग्नावेव सर्वदेवानां लयः कुतो हि यस्मात्पृथिव्या मृभव इति क्रमवः पृथिव्यामिति श्रुतौ प्रत्येकं भूतेषु दर्शयतो त इत्यर्थः । युक्तिं चाह ॥ **येषामिति** ॥ ननु यदि तदनुत्पन्नत्वेऽपि स्वसमानदेवतालयस्थानत्वेन तत्र देवानां लयस्तर्हि सौपर्ण्यादीनां स्वसमानवारुण्यादिलयस्थाने शेषादौ लयः स्यादित्यत उक्तं ॥ **विशेषवचनाभावेचेति** ॥ सौपर्ण्यादीनां तु विशिष्य गरुडादौ लयस्योक्तत्वादिति भावः ॥ **अन्यथाव्याख्यानमिति** ॥ भूतेषु देवा इति श्रुतेरग्नेर्वायावित्यादिना कृतमित्यर्थः ॥ **उक्तक्रमेणेति** ॥ इंद्र उमायामिति श्रुत्युक्तक्रमेणेत्यर्थः । युक्त्यंतरेणान्यथाव्याख्यानं निराकरोति ॥ **भूताभिमानिनामिति** ॥ तेजोवाय्वभिमानिनामग्निप्रवाहादीनां वाय्वभिमानिनि तेजःप्रवाहविनायकयोर्लयाभावादित्यर्थः । लयाभावाच्चेति संबंधः ॥ **उत्पत्तिश्रुतिविरोधइति** ॥ आकाशाद्वायुर्वायोरग्निरिति श्रुतिविरोध इत्यर्थः । विपर्ययेण तु क्रमोऽत उपपद्यते चेत्यत्र सर्वदेवानामुत्पत्तिक्रमवैपरीत्येन लयस्य निर्णीतत्वादिति भावः । ननु भूतं भूताभिमानी च तद्देहांतर्नियामकः हरिश्चाकाशशब्दोक्त इत्यनुव्याख्याने आकाशादिशब्दैर्देवानामपि गृहीतत्वात्कथं जडमात्रग्रहणमित्यत आह ॥ **देवानांत्विति** ॥ आदिसर्गांतरभावी अनुसर्गः आदिसर्गवैपरीत्येनैव देवानां लय इति भावः ॥ ९ ॥ **उक्तेति** ॥ इयदामननादित्यत्रोक्तस्याधिकारिणां प्राणावसानत्वस्य बाध इत्यर्थः ॥ **तेजइति** ॥ तेजोभिमानिनी रमा परस्यां देवतायां परमात्मनि संपद्यत इत्यर्थः ॥ **अन्यथेति** ॥ एतच्छ्रुतियुक्तिभ्यामेव वागादीनां मनआदौ लयस्य बाधितत्वादिति भावः ॥ **उक्तत्वादिति** ॥ कामादितरत्रेत्यर्थः ॥ **गुणांतरेति** ॥ स्वातंत्र्यादीत्यर्थः ॥ **सर्वगुणेति** ॥ संसाराभावे ईशनियम्यत्वाभावेन स्वातंत्र्यादेरपि

संभवादितिभावः॥ॐ समनाचासृत्युपक्रमादमृतत्वंचानुपोष्य ॐ॥समादेशकालाभ्यांव्याप्त्यासमोनापरमपु-
रुषोयस्याःसमनाहरौलीयतेकुतःयतोस्याअनुपोष्यचानुपास्यैवामृतत्वंमुक्तत्वं तदेवकुतः असृत्युपक्रमात् सृतिःसंसारःक-
दापिसंसारोपक्रमणाभावात्तदपिकुतइत्यतःसमनेतिहेतुगर्भविशेषणं उपक्रमणंसंबंधः प्रत्युक्तमितिउक्तयुक्तेःप्राबल्येनतथा-
र्थानत्वयुक्तेर्बाधितत्वादितिभावः।वचनादेकादशतात्पर्यं अत्ररमायाअत्यंतसामीप्यंनामजगद्व्यापारत्यागेनवटजलाभरणरूपे
णकेवलहरिसेवारतत्वंबोध्यं॥ॐ तदपीतेः संसारव्यदेशात् ॐ॥तदपीतेःतस्यांरमायामपीतेर्लयस्यसंसारव्यपदेशात्
विलीनोहीतिश्रुतौसंसारकारणत्वेनोक्तेरित्यर्थः॥ॐ सूक्ष्मंप्रमाणतश्चतथोपलब्धेः ॐ॥ब्रह्मरमापेक्षयातिसूक्ष्मं प्रमाण
तोगुणपरिमाणतश्च ततोधिकं कुतः ततोपलब्धेः सर्वतःप्रकृतिरितिश्रुतौतथादर्शनादित्यर्थः॥ॐनोपमर्देनातः ॐ॥अतःसा
म्यतदभावयोरेवंसाधितत्वात् नोपमर्देनासाधारणगुणानुपमर्देनैवसाम्यमित्यर्थः॥ॐ अस्यैवचोपपत्तेरूष्मा ॐ॥ऊष्मा
ऊष्मपदोपेतश्रुतिरस्यैव किंचित्साम्यस्यैवोपपत्तेः उपपत्यर्थंभवतीत्यर्थः।ऊष्मावरत्वंनामपरेंद्रियशक्तितिरोधायकत्वमूष्म-
सूर्यमंडलादिसाधारणंविवक्षितं अतएवेश्वरस्यसर्वेंद्रियागोचरत्वोक्त्यातदुपपाद्यतइतिबोध्यं ॥ उपपत्तेरितिषष्ठा
पेक्षितंपूरयित्वार्थमाह ॥ उपपादकेति ॥ ॐप्रतिषेधादितिचेन्नशारीरात् ॐ॥ सर्वेह्येतइतिश्रुतावीशान्येषुदे-
शकालव्याप्त्यादिनापिसाम्यस्यप्रतिषेधान्नरमायाःकिंचित्साम्यमपीतिचेन्न । तत्रशरीरिणोजीवादेर्वंशस्यदेशादिव्या-
प्तिसाम्यप्रतिषेधादित्यर्थः ॥ तदभावमुक्ताप्रतिषिद्धत्वादिति ॥ सर्वेह्यवराइत्यादिनातदभावमुक्ताऽस-
मोवेतिप्रतिषिद्धत्वादित्यर्थः ॥ शारीरत्वेनेति ॥ अनित्यदेहपरिच्छिन्नत्वेनेत्यर्थः ॥ ॐ स्पष्टोह्येकेषां ॐ॥
ऐकेषांमाध्यंदिनानामथासमाइतिश्रुतौ जीवानामसमत्वादिवादःस्पष्टोस्तिहियस्मात्तच्छरीरादेवसमत्वोक्तिरित्यर्थः ॥

॥ ॐ स्मर्यतेच ॐ ॥ जीवानामेवासमत्वादिकंब्रह्माद्याइतिस्मर्यतेचेत्यर्थः ॥ ६ ॥ ज्ञानिनामिति ॥ देवाना-मित्यर्थः । तथाचानियमइत्युक्तव्याघातइतिभावः ॥ अन्याःरुद्रादिदेवताः कलाः प्रतिबिंबांशाः क्रमात्प्राण-स्यरुद्रस्यैंद्रइत्यादिक्रमात् ॥ ॐ तानिपरेतथाह्याह ॐ ॥ तानीतरदैवतानिपरेपरमात्मनिविरिंचिद्वारालीयं-ते कुतः यस्मात्सर्वेदेवाइतिश्रुतिस्तथाहेत्यर्थः।पूर्वंभूतेषुतच्छ्रुतेरित्यत्रतदभावएवेति परमात्मनिलयाभावएवास्त्वित्यर्थः साधकाभावादितिभावः ॥ भगवत्प्रतिबिंबत्वादिति ॥ तथाचसाधकाभावोसिद्धइतिभावः । विरिंचेलयांगी-कारात्कथंभगवतिलयइत्यतआह ॥ विरिंचप्रविष्टानामिति ॥७॥ ॐ अविभागोवचनात् ॐ ॥ मुक्तानांसत्य-कामत्वादेरीशेच्छातोऽविभागोऽपृथक्तदनुसारित्वमितियावत् कुतःकामेनमेकामआगादितिवचनादित्यर्थः ॥ अतए-वेति ॥ सत्यसंकल्पादेरीश्वरसंकल्पानुसारित्वानियमादेवेत्यर्थः । तदेवविवृणोतियदेति ॥ सत्यानित्याइति ॥ स-दातनंसत्यमितिनित्यमेवोच्यतेबुधैरित्युक्तेरित्यर्थः । स्वकामितागमनमीश्वरेच्छयाकथमित्यतआह ॥ तदिच्छानंत-रमिति ॥ स्वकामितागमनेस्वेच्छायाएवकारणत्वादीश्वरेच्छायाःकथंकारणत्वमित्याक्षिपति ॥ कथमिति ॥ तदु-त्तरत्वेनहृदयात्धृदयंमृत्योरित्येतद्व्याख्याति ॥ ईश्वरेच्छायाइति ॥ तात्पर्यमाह ॥ भगवदिच्छेति ॥ ८ ॥ ॥ पृथग्जनेति ॥ अज्ञजनेत्यर्थः ॥ ॐ तदोकोग्रज्वलनंतत्प्रकाशितद्वारोविद्यासामर्थ्यात्तच्छेषगत्यनुस्मृति-योगाच्चहार्दानुगृहीतःशताधिकया ॐ ॥ उत्क्रांतिकालेतदोकसः भगवद्गेहरूपस्यतद्धृदयस्याग्रेज्वलनं प्रादुर्भवति ततोधिकारीतत्प्रकाशितद्वारस्तेनप्रकाशेनप्रकाशितनाडीद्वारवान्हार्देनहृद्गतेनपरमात्मनानुगृहीतोनुगृहवानेवविद्यासामर्थ्या-दपरोक्षज्ञानशक्त्या तच्छेषगत्यनुस्मृतियोगात्तस्याःविद्यायाःशेषांगभूतायाहृदयमारभ्यब्रह्मप्राप्तिपर्यंतानुस्मरणं तद्यो

गात्तत्साहित्यात् शताधिकयाशतनाडीतोअधिकयासुषुम्नाख्यनाड्यादेहान्निर्यातीत्यर्थः॥स्वोदयमारभ्यैवेति॥नतुलिं-
गदेहभंगमारभ्यैवेत्यर्थः । कर्मप्रारब्धं आदेहमारब्धेर्वा फलदमितिसंबंधः॥ज्ञानफलंनभवतीति॥गत्यनुस्मरणफलत्वा
दितिभावः । इतिस्मृतेः गीताभाष्योदाहृतायाः ॥ **नाविशेषप्रमाणमिति** ॥ उदाहृतस्मृतौगतिवाचकशब्दा
भावादितिभावः ॥ ॐ **रश्म्यनुसारी** ॐ ॥ ज्ञानीनाड्यंतर्गतव्याप्तरश्म्यनुसारीनिर्यातीत्यर्थः ॥ ॐ **निशिने-
तिचेन्नसंबंधात्** ॐ ॥ रात्रावादित्यरश्मिसंयोगोनास्तीतिचेन्न संबंधात् अंतस्थादित्यरश्मीनांतदापिसंबंधादित्य
र्थः ॥ **पर्यवसितेति** ॥ समाप्तेत्यर्थः ॥ **सदेति** ॥ नाडीनांदेहसापेक्षत्वेनदेहस्यचसद्भावादितिभावः
॥ **कदाचिदिति** ॥ पूर्वंसतोप्युत्क्रांतिकालेऽभावोपपत्तेरितिभावः ॥ ॐ **यावद्देहभावित्वाद्दर्शयतिच** ॐ ॥
नोक्तदूषणावकाशः कुतः यावद्देहभावित्वात् नाडीरश्मिसंबंधस्यदेहसमानकालीनत्वात् कुतःयस्मात्संस्पृष्टाइति
श्रुतिस्तथादर्शयतीत्यर्थः ॥ **इतिवचनादिति** ॥ तथातत्रस्मृतौदाक्षिणायनोत्क्रांतेःस्वर्गसाधनत्वोक्त्यातत्रोत्क्रांत्य
भावोंगीक्रियतेतथारात्रौबाह्यादित्यरश्मिसंबंधाभावात्तदोत्क्रांतिरेवनेत्यंगीकारोपपत्तेरित्यर्थः ॥ ॐ **अतश्चायने-
पिहिदक्षिणे** ॐ ॥ दक्षिणायनेपिज्ञानिनः उत्क्रांतिर्युक्ता कुतः अत्रायनपदस्यरश्मिपरत्वेनतत्संबंधस्यनाडीषुसर्वदास-
त्वादित्यर्थः ॥ **साक्षान्मोक्षशरीरस्येति** ॥ **लिंगशरीरभंगस्येत्यर्थः** ॥ आजनान्नजनिर्भुवीत्यादिनाजनोलो-
कादीनामप्यपुनरावर्तिस्थानत्वमित्यतआह ॥ **महर्लोकादीत्यतद्गुणसंविज्ञानइति** ॥ तस्यगुणस्यान्यपदार्थ
स्यपरपदार्थंप्रत्युपसर्जनीभूतस्यान्यपदार्थेसंविज्ञानंविशेषत्वेनोपादानंयस्मिन्बहुव्रीहौनास्तिस अतद्गुणसंविज्ञानः । यथा
चाचित्रगुमानयेत्यादौ तथाचमहर्लोकएवआदिर्येषांजनोलोकादीनांतद्गंतारइत्यर्थः ॥ **कालविशेषस्यवस्तुतःसत्त्वात्तस्मिन्**

धायोगादित्यतआह ॥ **भवतीति** ॥ स्मृत्युक्तदक्षिणायनोत्तरायणपदप्रतिपाद्यइतिशेषः ॥ १ ॥ अन्यथेति ॥ सहकार्यभावादितिभावः ॥ पूर्वोक्तिः गत्यनुस्मृतियोगादित्युक्तिः ॥ **स्मृतिविरोधइति** यंयंवापीतिस्मृतिविरोध इत्यर्थः ॥ **लिंगस्येति** ॥ आचार्यस्तुतेगतिंवक्तेतियदाचार्योपदेशरूपलिंगमुक्तंतस्यापीत्यर्थः ॥ **गतेःकालकृतत्वा दिति** ॥ गत्यनुस्मरणस्यज्ञानशेषत्वइवकालज्ञानशेषत्वेमानाभावादितिभावः ॥ **संपूर्णेति** ॥ चतुर्विधइत्यर्थः। गत्यतिरिक्तहेतुत्वादित्यर्थः ॥ ॐ **योगिनःप्रतिस्मर्येतेस्मार्तेचैते** ॐ ॥ एतेब्रह्मचंद्रगती योगिनःप्रतिस्मर्येते अग्निर्ज्योतिरितिधूमोरात्रिरितिचस्मृतावुच्येतेज्ञानादिसाध्यतयास्मर्येतइतियावत् । नकेवलंज्ञानसाध्ये किंतुस्मार्तेचस्मृतेरिमेस्मार्तेगत्यनुस्मृतिसाध्येस्मर्येतेत्यर्थः । योगिनइतिद्वितीया नन्वग्निर्ज्योतिरित्यत्रयोगिपदाभावात्कथंयोगीतिविशेषणादित्युक्तमित्यतआह ॥ **उपलक्षणमिति** ॥ अत्रस्मृतौ अत्रेतिगीतातात्पर्यश्लोकव्याख्यानावसरेएवोक्तत्वादित्यर्थः ॥ लौकिकसाधनेक्रियानुवृत्तिःअलौकिकसाधनेमनोवृत्तिरितिविवेकः॥ १० ॥ **इतिश्रीमतत्वप्रकाशिकावाक्यार्थमंजर्यांशर्करा श्रीनिवासविरचितायांचतुर्थाध्यायस्यद्वितीयपादः समाप्तः** ॥ ॥ ॥ ॥ ॥

श्रीगुरुभ्योनमः ॥ ॐ **अर्चिरादिनातत्प्रथितेः** ॐ ॥ अर्चिरेवादिर्यस्यतेनमार्गेणगच्छति कुतःतत्प्रथितेःतस्योक्तमार्गस्य तेर्चिषमितिश्रुतौप्रसिद्धेरित्यर्थः ॥ **अयोगेति** ॥ स्वगंतव्यमार्गानिर्णयादितिभावः ॥ **सोमादिनंतरमिति** ॥ सोमंवैश्वानरंचंद्रमित्युक्तेरितिभावः ॥ **प्रबलश्रुत्यनुसारेणेति** ॥ उदाहृतश्रुतिस्मृतिसाहित्येनतेर्चिषमभिसंविशतीति प्रबलश्रुत्यनुसारेणेत्यर्थः॥ १ ॥ सवायुमागच्छतीत्यस्याःश्रुतेःप्रागुक्तरीत्यावायोर्द्वितीयप्राप्यत्वप्रतिपादकत्वमितिभावः।

व्यवस्था वायोरंतरमुहुःप्राप्यत्वरूपा ॥ ॐ **वायुशब्दादविशेषविशेषाभ्यां** ॐ ॥ वायुर्द्वितीयप्राप्यः कुतः अविशेषविशेषाभ्यां सामान्यतोविशेषतश्चवायुशब्दाद्वायोर्द्वितीयप्राप्यत्वप्रतिपादकश्रुतेरित्यर्थः ॥ यावदर्थे यावत्यर्थे सामान्यप्रसिद्धिविरोधेनोति ॥ तत्प्राथितेत्युक्तार्चिषःप्रथमप्राप्यत्वप्रसिद्धिविरोधेनेत्यर्थः ॥ अथाविशेषविशेषाभ्यांसामान्यविशेषाभ्यांवायुशब्दाद्वायुशब्दोपेतसामान्यश्रुतेः द्वितीयप्राप्यत्वप्रतिपादकतयावायुशब्दोपेतविशेषश्रुत्याबाधेनवायोर्द्वितीयप्राप्यत्वंप्रतिपादकत्वंतदर्थइतिसूत्रस्यार्थांतरपरतयाभाष्यंव्याचष्टे ॥ **वायुश्रुतेरिति** ॥ २ ॥ ॐ **तटितोधिवरुणः संबंधात्** ॐ ॥ तटितःतटिल्लोकादधि उपरि वरुणःप्राप्यः कुतःसंबंधात् तटितश्रुतौवरुणलोकस्यतदुपरिसंबंधोक्तेरित्यर्थः ॥ **निर्णीतइति** ॥ विवादविषयस्यनिर्णीतत्वादित्यत्रविवादाऽभावादितिभावः ॥ ३ ॥ **अन्यथावायोरिति** ॥ प्रधानवायोरित्यर्थः । नीचानामेवप्रथमप्राप्यत्वादितिभावः ॥ ॐ **आतिवाहिकस्तल्लिंगात्** ॐ ॥ अर्चिषोनंतरं प्राप्योवायुरिति आतिवाहिकःतन्नामकोमुख्यवायुपुत्रएवकुतः तल्लिंगात् पूर्वप्राप्यत्वस्यामुख्यवायुलिंगादितिभावः । उक्तलिंगेनसंशयनिवृत्तिःस्यादित्यतआह ॥ **मुख्यस्यापीति** ॥ ॐ **उभयव्यामोहात्तत्सिद्धेः** ॐ ॥ सप्तम्यर्थेपंचमी उभयास्मिन्व्यामोहात्संशये सत्यपितत्सिद्धेः तस्यपूर्वोक्तः आतिवाहिकः पश्चादुक्तोमुख्यइत्युक्तस्यार्थस्यासिद्धेरित्यर्थः ॥ **दिवस्पतिस्त्वेति** ॥ भारतीपतिस्त्वेत्यर्थः ॥ वरुणावरायाइति । तटिद्विद्युच्छब्दयोरेकार्थत्वादितिभावः ॥४॥ ॐ **वैद्युतेनैवततस्तच्छ्रुतेः** ॐ ॥ वैद्युतेनैवविद्युत्पतिनावायुनैवब्रह्मप्राप्तेर्यतस्ततःसएवांतिमप्राप्यः तदेवकुतः तच्छ्रुतेस्तेनैवब्रह्मप्राप्तेः सएवेतिश्रुतिसिद्धत्वादितिभावः ॥ **राजादाविति** ॥ कृप्तस्यातिप्रियस्यांतिमप्राप्यस्यमंत्रिणएवराजादिप्रापयितृत्वदर्शनादितिभावः ॥ **तत्पुरुषइति**॥तस्याःविद्युतःपुरुषोभर्तामन

नान्मनुः भगवान्तत्पुत्रत्वान्मानवोवायुरनानधिकारिणोब्रह्मगमयतीत्यर्थः ॥ ९ ॥ अनुस्मृत्यनुपपत्तेरिति ॥ मार्ग-
वद्गम्यस्याप्यनुस्मर्तव्यत्वादितिभावः ॥ विनैवेत्यस्येति ॥ संहारइतिवक्ष्यमाणेनान्वयः संदेहबीजंसंदेहद्वयबिजं
॥ॐकार्यंबादरिरस्यगत्युपपत्तेःॐ॥ सएनानित्यत्रोक्तंब्रह्मकार्यमुत्पत्तिमच्चतुर्मुखमेवकुतोज्ञानिनांबद्धत्वेनास्यगत्युपप-
त्तेः। चतुर्मुखप्राप्तेरवोपपत्तेरितिबादरिराचार्योमन्यतइत्यर्थः । संततत्वात् अनुस्यूतत्वात् ॥ चतुर्मुखस्यैवेति ॥
अवत्थत्वेनैवभगवतःप्राप्यत्वादितिभावः ॥ ॐ विशेषितत्वाच्चॐ ॥ प्राप्नोतिब्रह्माणंचतुर्मुखइतिश्रुतेश्चतुर्मुखत्वे-
नब्रह्मणाविशेषितत्वान्नैवकार्यंब्रह्मशब्दार्थः ॥ ॐसामीप्यात्तुतद्व्यपदेशःॐ ॥ ज्ञानिनस्तद्व्यपदेशः पर-
ब्रह्मप्राप्यत्वव्यपदेशः सामीप्यात्तुतत्प्राप्तेःकालतःसामीप्यादेवेत्यर्थः ॥ बत्धत्वसाम्यादिति ॥ प्रथमप्राप्यत्वे
बाधकत्वेनोक्तस्यबत्धत्वस्य प्रलयादर्वाग्द्वितीयप्राप्यत्वेपिबाधकत्वादेवमपिद्वितीयप्राप्यत्वप्रथममेवप्राप्तिसंभवादितिभा-
वः ॥ ॐकार्यात्ययेतदध्यक्षेणसहातःपरमभिधानात्ॐ ॥ कार्यात्ययेमहदादिकार्याणामत्ययेनाशलक्षणे-
प्रलये तदध्यक्षेणचतुर्मुखेनसहातःचतुर्मुखात्परंज्ञानीगच्छति कुतस्तेहीतिश्रुतौतथाविधानादित्यर्थः ॥ ॐस्मृतेश्चॐ ॥
ब्रह्मणासहेतिस्मृतेःकार्यात्ययेइत्युक्तार्थोज्ञाप्यतइत्यर्थः । परस्यांतइत्यत्रपरशब्दार्थमाह ॥ परब्रह्ममुक्तिरिति
॥ॐपरंजैमिनिर्मुख्यत्वात् ॐ ॥ सएनानित्यत्रब्रह्मपरंपरमाख्यमेव कुतःतत्रब्रह्मशब्दस्यमुख्यत्वादितिजैमिनिराचा-
र्योमन्यतइत्यर्थः ॥ ॐदर्शनाच्चॐ ॥ परस्यब्रह्मणएवापरोक्षतयादर्शनात्तदेवात्रोक्तंब्रह्मेत्यर्थः ॥ ॐनचका-
र्येप्रतिपत्त्यभिसंधिःॐ ॥ कार्येब्रह्माणिप्रतिपत्तिरुपास्तिःप्राप्नुवानीत्यभिसंधिरिच्छातदुभयंनास्तीत्यतोपिनका-
र्यंप्राप्यमित्यर्थः ॥ साधकेति ॥ इच्छारूपेत्यर्थः । ननुपक्षद्वयस्याप्यपरिहार्यत्वात्क्रमांविनैवोभयप्राप्तिरस्त्वित्यतआ-

३ ॥ महाफलमिति ॥ अक्रमस्यक्रमाभावस्यक्रमांतरणान्यथासिद्धिपरिहरति ॥ क्रमांतरेति ॥ ॐअप्रतीकालंबनान्नयतीतिबादरायणउभयथाचदोषात्तत्क्रतुश्चॐ ॥ प्रतीकेदेहेब्रह्मपश्यंतःप्रतीकालंबनाः व्याप्तब्रह्मपश्यंतोऽप्रतीकालंबनास्तत्रवायुः अप्रतीकालंबनात्परंब्रह्मनयतीति प्रतीकालंबनान्चतुर्मुखं, कुतः उभयथाचदोषात् सर्वान्कार्यमेवनयतिपरमेवनयतीत्यंगिकारेचोक्तदोषप्राप्तेः किमिच्छानुसारेणोभयप्राप्तिरित्यतउक्तंतत्क्रुतश्चेति श्रुतिग्रहणमेतत् सयथाकामइतिश्रुतेर्यतोतोनेच्छानुसारेणप्राप्तिरित्यर्थः ॥ कार्यमेवनयतीति ॥ अन्यव्यावृत्तोरिति परप्राप्त्यग्रहणेकार्यप्राप्तौ उक्तहेत्वनुपपत्तिलक्षणदोषस्तदास्यात् यदिकार्यप्राप्तावुक्तहेतोःपरप्राप्तिबाधकरूपत्वेनकार्यमात्रप्राप्तौ विशेषहेतुत्वंस्यान्नैवमित्यर्थः । ननुबाधकत्वेनगत्यनुपपत्तेरुक्तत्वात्कथंविशेषहेत्वभावइत्यतआह ॥ एषांपरप्राप्तिरिति ॥ प्रमाणबलेनेति ॥ ब्रह्मशब्देनमुख्यार्थदर्शनात्यास्याभिसंधिरूपयुक्तिरूपप्रमाणबलेनत्यर्थः ॥ अन्यानिषेधकत्वाभावइति ॥ प्राप्नोतिब्रह्माणंचतुर्मुखमित्यादाववधारणाद्यभावादितिभावः ॥ ननुगमयतीत्यत्रब्रह्मशब्दस्यविष्णौमुख्यत्वोविशेषहेत्वभावात्कथंतदभावइत्यतआह ॥ केषांचिदिति ॥ प्राप्नोतिब्रह्माणंचतुर्मुखमिति प्रमाणबलेनेत्यर्थः । दर्शनोपास्त्यभिसंधीनामपिविशेषहेतुत्वंपराचष्टे । कार्यप्राप्तिमतंचेति । ननुपक्षद्वयोक्तदोषाभावेपिपक्षद्वयांगीकारेजैमिनिमतविरोधःस्यादित्यतआह ॥ मुनिमतयोश्चेति ॥ ॐविशेषंचदर्शयतिॐ ॥ देवांइतिश्रुतिरप्रतीकालंबनादिविशेषंचदर्शयतीत्यर्थः ॥ ६ ॥ इतिश्रीमत्तत्वप्रकाशिकावाक्यार्थमंजर्यांशर्कराश्रीनिवासविरचितायांचतुर्थाध्यायस्यतृतीयःपादः समाप्तः ॥ ॥ ॥

॥ श्रीरस्तु॥ गम्यत्वाभावेपितस्यार्चिरादिवन्मार्गत्वप्राप्तेरितिभावः। मुक्तभोगस्यैवप्रसक्तौमुक्तोब्रह्मातिक्रम्यानतिक्रम्यवा भोगान्भुंक्तइतिसंदेहप्रकारकथनमशक्यमित्यतआह ॥ तस्येति ॥ अन्यथामुक्तेःपुरुषार्थत्वंनस्यादितिभावः ॥ अर्चि राद्यतिक्रमोक्तिरिति ॥ अर्चिरादावतिक्रमसहदृष्टप्राप्यस्यग्रामादावतिक्रमसहदृष्टगम्यत्वस्यचब्रह्मणिदर्शनादिति- भावः । सेतुरिवसेतुराश्रयोभगवान् अंधःस्वरूपाविर्भावरहितः ॥ ॐसंपद्याविहायस्वेनशब्दात्ॐ ॥ ज्ञानीपरंब्रह्मसंपद्यप्राप्य अविहायतदनतिक्रम्यस्वरूपेणावस्थितोभोगान्भुंक्तेकुतःशब्दादिमांधारामितिश्रुतेरितिभावः॥स्व रूपेणावस्थानस्यसंसारेपिसत्वादन्यथारूपंपरित्यज्येत्युक्तं ॥ १ ॥ भोगासिद्धेरिति ॥ मुक्तस्येतिशेषः । कृ- तकृत्यस्याक्रियायाःफलितार्थत्वादितिभावः ॥ ॐमुक्तःप्रतिज्ञानात्ॐ ॥ सतत्रपर्येतीत्यत्रभोगभोक्तृत्वेनोक्तोमुक्त एवकुतःप्रतिज्ञानात् अथेतिश्रुत्यंतरेमुक्तस्यैतादृशभोगप्रतिभानादित्यर्थः । अहरहःप्रतिदिनं भोगाभावएतावंतंकालं- सुखमहमस्वाप्समितिपरामर्शविरोधइत्यतउक्तं ॥ दिव्येति ॥ तत्प्राप्त्या ब्रह्मप्राप्त्या ॥ तद्भावेति ॥ दिव्यभो- गसद्भावेत्यर्थः । अकृतिमत्वं क्रियाराहित्यं। अतएवेत्युक्तंविवृणोति ॥ श्रुतिविरोधादिति ॥ अथयथैन- मुक्तोनुप्रविशतीतिश्रुतौमुक्तस्यप्रवेशलक्षणक्रियाप्रतीतेरितिभावः । क्रियायाःफलरूपत्वेनकृतकृत्यत्वमुपपाद्यतइतिहृदयं ॥ प्रकरणभेदइति ॥ निर्गुणसगुणपरत्वेनेत्यर्थः ॥ २ ॥ ज्योतिषइति ॥ पूर्वाधिकरणेज्योतिःप्रा- प्यभोगभोक्तृमुक्तत्वमुक्तंतस्यज्योतिषइत्यर्थः ॥ ब्रह्मप्राप्त्यनुपपत्तेरिति ॥ परंज्योतिरुपसंपद्येत्युक्तब्रह्मप्राप्त्यनु- पपत्तेरित्यर्थः ॥ सूर्यमिति ॥ ज्योतिःप्रकाशरूपंसूर्यंप्राप्नुमइत्यर्थः । सद्भावाज्ज्योतिश्चरणेत्युक्तरीत्या ॥ सते- जसीति ॥ यथापादोदरःसूर्यःत्वचाजीर्णदेहेनाविमुच्यते । एवंतेजसिसूर्येसंपन्नःप्राप्तःसोधिकारीपाप्मनाकर्मणा॥वि-

मुक्तोभवतीत्यर्थः ॥ **एकवाक्यत्वेपि** ॥ एकार्थत्वेपीत्यर्थः । तदेवदर्शयति ॥ **तथाचेति** ॥ अत्रपरंज्योतिरित्यत्रच ॥ ॐ **आत्माप्रकरणात्** ॐ ॥ परंज्योतिरित्युक्तंज्योतिरात्मापरमात्मैवकुतः आत्मेतितत्प्रकरणादित्यर्थः ॥ ३ ॥ ॥ **असित्धेरिति** ॥ सायुज्यभाग्भोगाभोक्तृत्वादितिभावः सायुज्यस्यैवाप्रसक्तत्वात्सायुज्यभाग्भिर्भुज्यंतेतिसंशयानुपपत्तिरित्यतआह ॥ **प्राप्तिश्चेति** ॥ ॐ **अविभागेनदृष्टत्वात्** ॐ ॥ मुक्ताविभागेनपरमात्मभोगापरित्यागेनतद्भुक्तानेवेतियावत् ॥ भोगान्भुङ्क्तेकुतःयानेवेतिश्रुतौतथादृष्टत्वादित्यर्थः ॥ ४ ॥ पारं अंतं ॥ **अयोगादिति** ॥ सर्वदेहत्यागस्यैवमुक्तिशब्दार्थत्वादितिभावः ॥ ॥ ॐ **ब्राह्मेणजैमिनिरुपन्यासादिभ्यः** ॐ ॥ मुक्तोब्राह्मेणब्रह्मसंबंधिनादेहेनभोगान्भुंङ्क्तेतिजैमिनिराचार्योमन्यतइत्यर्थः ॥ कुतःब्रह्मणेतिश्रुतौतथोपन्यासात् उक्तत्वात् आदिशब्दोक्तश्रुतियुक्तिभ्यांचेतिमन्यतइत्यर्थः । ग्रहवत् पिशाचवत् तदानींसर्वेषांब्रह्मप्रवेशादित्यर्थः ॥ ॐ **चितिमात्रेणतदात्मकत्वादित्यौडुलोमिः** ॐ ॥ मुक्तःचितिमात्रेणज्ञानमात्मकेनदेहेनभोगानभुङ्क्तेनचैवंसंसारिसमानत्वं कुतः तदात्मकत्वात् तस्यदेहस्यमुक्तस्वरूपत्वात् इत्यौडुलोमिराचार्योमन्यतइत्यर्थः । जीवस्य मुक्तस्य वस्तुविकल्पेति वस्तुनिमुक्तेदेहवत्वतद्राहित्यरूपद्वैविध्यायोगात् ॥ ॐ **एवमप्युपन्यासात्पूर्वभावादविरोधंबादरायणः** ॐ॥ एवमपिचिन्मात्रदेहत्वेनभोगानभुङ्क्तेइत्येवंप्रकारेणाप्युपन्यासात् सवाएषइतिश्रुत्युक्तत्वात्पूर्वभावात्पूर्वस्यजैमिन्युक्तस्यदेहांतरत्यागेनब्राह्मेणदेहेनसत्वस्यभावात् ब्रह्मणीतिश्रुतिसित्धत्वेनसत्वादविरोधंजैमिन्यौडुलोमिमतयोर्मत्यामर्त्यदेहभावाभावाभ्युपगमेनविरोधाभावंबादरायणोमन्यतइतिभावः ॥ ६ ॥ तत्तदुपायेति ॥ तत्रसाधनसंपादनोपायसाध्यानिसाधनान्यन्नपानादीनितत्साध्यइत्यर्थः । आकासि ग्रहे ॥ ॐ संक-

ल्पादेवचतच्छ्रुतेः ॐ ॥ मुक्तस्येदंभूयादितिसंकल्पादेवभोगोभवति नतुप्रयत्नेन कुतः तच्छ्रुतेः संकल्पादेवेतिश्रुतौतस्यार्थ-स्यश्रवणादित्यर्थः ॥ विपक्षेति ॥ पूर्वपक्षेत्यर्थः । व्याख्यातोनकेषामित्यादिना ॥ ६ ॥ प्रतिहारेति ॥ द्वारपालका इत्यर्थः॥ अतएवचानन्याधिपतिः ।मुक्तोऽनन्याधिपतिःस्वोत्तमेभ्योऽन्याधिपतिरहितः कुतः अतएवसंकल्पादेवेत्यर्थः ॥७॥ देहिनः देहाभिमानवतः ॥ नहवैशरीरेति ॥शरीराभिमानवतांप्रियाप्रिययोःसुखदुःखयोः अपहतिरसंबंधोनास्तीत्यर्थः । सायुज्यभाजामपिकदाचिद्भोगांगीकारेणतदानींब्रह्मदेहेनोत्पत्त्यभावात् कथंचिदित्युक्तं॥ॐअभावंबादरिराहह्येवं ॐ॥ मुक्तस्यचिन्मात्रदेहादन्यदेहाभावंबादरिर्मन्यते कुतः हियस्मादशरीरोवेतिश्रुतिरेवमाहेत्यर्थः ॥ ॐ भावंजैमिनिर्विकल्पाम्नानात् ॐ ॥ कदाचिद्भोगार्थंमुक्तस्यचिन्मात्रदेहादन्यप्राकृतदेहस्यभावंसत्वंजैमिनिर्मन्यते कुतः चितावाअचितावेतिश्रुतौविकल्पाम्नानात् विकल्पेनोभयशरीरेणभोगाभिधानादित्यर्थः ॥ ॐ द्वादशाहवदुभयविधंबादरायणोऽतः ॐ ॥उभयविधंदेहभावाभावाख्यप्रागुक्तमुभयप्रकारंबादरायणःस्वमतंमन्यतेकुतः अतः उभयोरपिप्रमाणकत्वात् विरुद्धंकथंस्वमतमित्यतउक्तं ॥ द्वादशेति । यथाद्वादशाहाख्ययागस्यक्रतुत्वंसत्रत्वंचाविरुद्धंतथेत्यर्थः ॥ अनुपपत्तेरिति ॥ सदेहत्वेदुःखादेरदेहत्वेभोगासंभवस्यचोक्तत्वादित्यर्थः ॥ ॐ तन्वभावेसंध्यवदुपपत्तेः ॐ ॥ संध्यवत्स्वप्नावस्थायामभिमानाभावेनदेहाभावेपियथायोगस्तथामुक्तौतन्वभावेबाह्यदेहाभावेपिभोगोपपत्तेरित्यर्थः ॥ स्वप्नावस्थायां देहसत्वेन कथं संध्यवदितिदृष्टांतोक्तिरित्यतआह ॥ अनभिमानस्येति ॥ तदभिमानाविषयस्यतत्कार्यकारित्वेनतंप्रत्यविद्यमानकल्पत्वादित्यर्थः ॥ ननुस्वप्नदृष्टपदार्थानांमिथ्यात्वेनतद्विषयकभोगएवासंप्रतिपन्न इत्यतआह ॥ स्वाप्नार्थानामिति ॥ ॐ भावेजाग्रद्वत् ॐ ॥ भावेमुक्तौशरीरसत्वेजाग्रदवस्था-

वत्सुतरांभोगोपपत्तिरित्यर्थः ॥ ननुदेहसत्वांगीकारेदुःखमेवापादितंतेनभोगानुपपत्तिरुक्ता अतस्तदुपपत्तिकथनायभा-
वेजाग्रद्वदितिसूत्रंव्यर्थमित्यतआह ॥ वक्ष्यमाणेति ॥ प्रदीपवदावेशइत्यत्रवक्ष्यमाणंयदुःखादिप्राप्तिरूपदूषण-
॥११॥ निराकरणंतत्प्रस्तावायेत्यर्थः।देहसद्भावपक्षमप्रस्तुत्यतत्करणेतस्यैवतद्विषयत्वंनज्ञायेतअतस्तत्प्रस्तावार्थमिदंसूत्रमितिभावः।
॥ ॐ प्रदीपवदावेशस्तथाहिदर्शयति ॐ ॥ मुक्तानामावेशःबाह्यदेहप्रवेशःप्रदीपवत्प्रदीपस्यदीपिकाप्र-
वेशइवकुतःहियस्मात्प्राणोहीतिश्रुतिस्तथामुक्तौदुःखाभावंदर्शयतीत्यर्थः । दीपिकातैलवर्तिकाश्रयदीपपात्रंननुभाष्येत-
त्प्रकाशयंतइत्येतदनुपयुक्तंकिमर्थमित्यतआह ॥ तत्प्रकाशयंतइति ॥ यथाप्रदीपोदीपिकांप्रकाशयंस्तैलाद्येवभु-
ङ्क्तेतथामुक्तास्तज्जडशरीरंप्रकाशयंतःसाधूनेवभोगाननुभवंतीतिप्रदीपवदितिवक्तुःसूत्रकारस्याविवक्षातेनभाष्येणोच्यतइत्य
र्थः । ननुतीर्णोहीतिश्रुतिर्नदेहवतोदुःखाभावंप्रतिपादयति किंतुमुक्तस्यदुःखाभावंतदापादनानुकूलमेवेत्यतआह ॥ दे-
हसद्भावास्त्वित्यादिना ॥ यतश्चेति ॥ कुतश्चेत्यर्थः ॥ ॐ स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं-
हि ॐ ॥ स्वाप्ययःसुप्तिःसंपत्तिर्मुक्तिःअन्यतरशब्दःउभयपरःतथाचतीर्णोहीतिवाक्यंस्वाप्ययसंपत्त्योरन्यतरापेक्षंसुप्ति-
मुक्तिरूपोभयपरंकुतःहियस्मादस्यवाक्यस्यतदुभयविषयत्वमाविष्कृतंस्पष्टीकृतमित्यर्थः ॥ श्राद्धाधिभोक्तुरिति॥
पुत्रकृतश्राद्धेनसुखभोक्तुरित्यर्थः ॥ अपितृत्वेअसंगित्वेचपितृदेश्येनकृतगयाश्राद्धभोगायोगादितिभावः । पुण्यपाप
वर्जिताःसर्वदोषानिवृत्ताइति ॥ अनुवादइति ॥ भुंजतेचसुखान्येवनदुःखदीन्कदाचनेत्यत्रगुणमात्रस्वरूपिणः तीर्णाहि
सर्वशोकास्तइतिअस्यहेतुत्वेनोपयोगाभावादितिभावः ॥ ८ ॥ इयतामर्यादा कामान्काम्यान् ॥ अन्यथेति ॥ ॥११॥
काम्यस्यापिसृष्ट्यादिव्यापारस्यलाभइत्यर्थः॥ ॐ जगद्व्यापारवर्जं ॐ॥मुक्तःजगत्सृष्ट्यादिव्यापारवर्जंतदतिरिक्तानेव

कामानान्योतीत्यर्थः ॥ ॐ प्रकरणादसन्निहितत्वाच्च ॐ ॥ अस्यजीवप्रकरणात्वाज्जीवानांचजगद्व्यापारेअसन्नि-
हितत्वात्सामर्थ्यरहितत्वाच्चेत्यर्थः । सर्वश्रुतः सर्वशब्दस्य अस्यजीवप्रकरणत्वंकुतोज्ञायतइत्यतआह ॥ श-
रीरभेदादिति ॥ शिरोमध्यविदारणाद्देहादुत्क्रम्येत्यर्थः ॥ ॐ प्रत्यक्षोपदेशादितिचेन्नाधिकारिकमंडल-
स्थोक्तेःॐ ॥ तायोवेदेतिश्रुतौप्रत्यक्षंस्पष्टंमुक्तस्यसर्वदेवपूज्यत्वोपदेशात्तस्यजगदैश्वर्यमस्तीतिचेन्न । आधिकारि-
काणांस्वयोग्याधिकारनियुक्तानांदेवानांमंडलेसमुदायेनियामकतयास्थितस्यचतुर्मुखस्यतत्रोक्तेर्नाशेषमुक्तानांजगदैश्वर्यमि-
त्यर्थः ॥ तावाइति ॥ ताएताश्चतस्रःभूर्भुवस्स्वर्महरितिचतस्रोव्याहृतयोव्याहृतिशब्दवाच्याआनिरुद्धादिभगवद्रूपविशेषा
श्चतुर्धाप्रत्येकमनिरुद्धादिभेदेनचतुर्धाभवंति एवंचतस्रश्चवस्रःषोडशरूपविशेषाःव्याहृतिशब्दवाच्याभवंति ताःव्याहृतयोऽ
धिकारीवेदास्मैज्ञानिनेसर्वेदेवाबालिंपूजांकुर्वंतीत्यर्थः ॥ महाचमस्यइति ॥ महाचमस्यश्चतुर्मुखःप्रवेदयतेजानाती-
त्यर्थः । महाचमसनामासौयस्मादतिचमत्कृतिः । महाचमस्यस्तज्ज्ञानीब्रह्मासंपरिकीर्तितइतिप्रमाणबलादित्यर्थः । सू-
त्रेवेदेत्यनुक्त्वाधिकारिकेतिपदप्रयोगेकिंबीजमित्यतआह ॥ अन्यदेवतानामिति ॥ मुक्तेषुचतुर्मुखान्यदेवेषुनियाम-
कत्वार्थकाधिकारिपदप्रयोगेतेषांस्वावरनियामकत्वंसूचितमितिभावः ॥ नचानेनेति ॥ आत्मेत्येवंपरंदेवामिति ॥
आत्मत्वमात्रोपासनप्रतिपादकेनेत्यर्थः ॥ संपूर्णमोक्षाभावेति ॥ चतुर्विधमोक्षमध्ये उत्क्रांत्यभावोक्तेरित्यर्थः ।
एतद्विवरणंतुकेचित्तुयानुषामुक्तिमनुक्रम्यैवंदहतः देहपातेतुदेहस्यदोषान्भुंक्तैवसर्वशः । मरणेच्छूनतादोस्तुस्वकीयारब्ध
कर्मजान् । देहेजीर्णेतुगच्छंतितद्दृष्ट्वाविष्णुमनुज्ञया पुनरत्रैवतिष्ठंतिनित्यानंदैकभागिनइतिब्रह्मदाण्योक्तदिशाज्ञेयं।महाज्ञाना-
गच्छंतिक्षीरसागरमित्युक्त्यातदतिरिक्तानांक्षीरसागरस्थश्वेतद्वीपगमनंनास्तीतिप्राप्तंतत्रविरोधमाशंक्यपरिहरति ॥ नचे-

ति ॥ बहुनात्रकिमुक्तेनयावच्छ्वेतंनगच्छांति योगीतावन्नमुक्तःस्यादित्यनेनेत्यर्थः । ननुयोग्यत्वंचात्रविवक्षितामितिगी-
ताभाष्येश्वेतद्वीपगमनेयोग्यताविशेषस्यप्रयोजकत्वोक्त्यासर्वेषांश्वेतद्वीपगमननिषेधात् कथंसर्वेषांसकृच्छ्वेतद्वीपगमनांगीका
रइत्यतआह ॥ योग्यत्वंचात्रेति ॥ नात्रश्वेतद्वीपगमनेयोग्यताविशेषापेक्षोच्यतेकिंतुतद्वासएवं । अत्रैवचास्थिति
स्तेषामित्यवस्थानस्यैवप्रकृतत्वादितिभावः ॥ सालोक्यादिति ॥ भगवतासमानलोकस्थितत्वंसालोक्यंचतुर्भुजा-
दिसमानरूपवत्वंसारूप्यंसमीपस्थत्वंसामीप्यं भगवद्देहेनभोगःसायुज्यमेतदनंतर्भावादित्यर्थः ॥ उक्तक्रमेणेति ॥
अत्रैवचास्थितिस्तेषामंतरिक्षेचक्वचनेत्युक्तक्रमेणेत्यर्थः। ईश्वरस्यसर्वत्रावस्थितेरिति । तथाचतल्लोकस्थरूपविशेषेणसालो-
क्यादिकमक्षतमितिभावः ॥ ॐ विकारावर्तिचतथाहिदर्शयति ॐ ॥ विकारंसंसारमावर्तयतीतिविकारावर्ति
संसारविषयव्यापरणंमुक्तानांनास्ति कुतःहियस्मादितिप्रमितश्रुतिस्तथाहेत्यर्थः । व्यापरणं व्यापारः ॥ ९ ॥
॥ वृद्धिन्हासेति ॥ आनंदवृद्धिह्रासेत्यर्थः ॥ अन्यथेति ॥ उपासनादिना आनंदादिवृद्ध्यनंगीकारइत्यर्थः ॥ भो
गानांतादृशत्वेप्यानंदादेस्तादृशत्वंकुतइत्यतआह ॥ करणेति ॥ ॐ स्थितिमाहदर्शयतश्चैवंप्रत्यक्षानुमाने ॐ॥
ब्रह्मणीतिश्रुतिर्मुक्तानांस्थितिमेकप्रकारेणावस्थानमाहमहतांप्रत्यक्षं ॥ मुक्तोनवृद्धिमान्तत्वेतुशून्यत्वादित्यनुमानमेवंप्र
कारेणावस्थानंचदर्शयतइत्यर्थः ॥ उपासनसद्भावमिति ॥ उपासनासद्भावेनानंदादिवृद्धिसद्भावमाशंक्ये
त्यर्थः । श्रुतौदर्शनमेवोच्यते नतूपासनमित्यतआह ॥ उपासनइति ॥ ॐ भोगमात्रसाम्यालिंगाच्च ॐ ॥
भोगमात्रस्थसाम्येमुक्तभोगस्यानंदवृद्ध्याद्यकारणत्वेलिंगाच्चालिंगसद्भावाच्चेत्यर्थः ॥ विशेषंचाहेति ॥ अयंच-
विशेषोमुक्तविरिंचेतरेषांमुक्तानामितिबोध्यं ॥ स्मृतिगतमुक्तानामित्यस्यापितदितरमुक्तपरत्वात् यथोक्तमनुव्याख्याने

मुक्तानांतुतदन्येषांसमुद्रतरलोपमेति व्याख्यातंचैतत्सुधायांब्रह्मणइतिविशिष्याभिधानेकोहेतुरित्यतआह ॥ **मुक्तानां-त्विति** ॥ विशेषबलेनवृद्धिह्रासवतीत्यर्थः ॥ यथोक्तमवृद्धिन्ह्रासरूपत्वमित्यादीति ॥ **एतदेवेति** ॥ अवृद्धिह्रासरूपत्वमित्येतदेवेत्यर्थः ॥ १० ॥ ॐ **अनावृत्तिःशब्दादनावृत्तिःशब्दात्** ॐ ॥ मुक्तानामनावृत्तिःनतु-स्वार्गिवत्पुनरावृत्तिःकुतःनचपुनरावर्ततइतिशब्दाछ्रुतेरित्यर्थः ॥ सर्वान्कामानित्यस्याःश्रुतेरपुनरावृत्तिप्रतिपादकत्वाभावात्तदुदाहरणमसंगतमित्यतस्तात्पर्यमाह ॥ **किंचेति** ॥ **व्याहतत्वादिति** ॥ समस्तकालसमाप्तेःक्वचित्काल-एववक्तव्यत्वेनव्याहतत्वादित्यर्थः ॥ **सूत्रस्यैवेति** ॥ नत्वध्यायमात्रावधारणायैतेनसर्वेव्याख्याताइत्यादिवत्सूत्रा-वयवस्येत्यर्थः ॥ ११ ॥ शास्त्रार्थमुपसंहराति ॥ **तदेवमिति** ॥ अत्रसाक्षात्कारांतेनतृतीयस्यासिद्धिरित्यंतेनचतुर्थाध्यायस्यगुणपूर्णतयेतिप्रथमस्यानिर्दोषतयेतिद्वितीयस्यचार्थउपसंहृतःतत्रविरक्तीत्यथशब्दस्यसिद्धेरित्यंतेनातःशब्दस्याशेषगुणेतिनारायणइतिचब्रह्मशब्दस्यचार्थोपसंहारइतिविवेकःअशेषमितिस्वरवर्णपदाद्यात्मकंसर्वमपिशास्त्रंभक्त्यापठतामत्यं-तमंगलंमोक्षादिसाधनंभवतीत्यर्थः । विशेषणत्रयतात्पर्यंवदन्नेवाह ॥ **अथेति** ॥ गुरवइत्यस्यतात्पर्यंतच्छिष्यतये-त्यादिज्ञानदातुरेवगुरुत्वंसुप्रसिद्धमितिभावः । सर्वथातीत्यस्यतात्पर्यंनिरुपाधिकेति ॥ **परमाप्तत्वंदर्शयन्निति** ॥ दर्शितामित्यनेनवाक्यार्थतात्पर्यज्ञानस्यविप्रलंभकत्वेज्ञानोपदेशायप्रेरणायोगोनिहितमित्यनेनविप्रलंभकत्वस्यकृतमिदंभाष्यमित्यनेनविवक्षाकर्णपाटवयोरुक्तत्वादितिभावः । व्यवहितत्वादन्वयप्रदर्शनपूर्वकंव्याचष्टे ॥ **यस्येत्यादिना** ॥ दिव्यानीत्यस्यार्थः क्रीडादिगुणयुक्तानीति हरावितिसप्तमीत्याशयेनोक्तं हरिविषयतयेति तच्छब्दार्थोमूलरूपमिति बडित्यस्यार्थोबलात्मकामिति ॥ इत्थंभूतमेवबलाद्यात्मकमेवरूपत्रयावतारप्रेरितमित्यनेनावतारणामपिबला-

श्रात्मकत्वमभिमेति रामवचइत्यत्रकर्तरिषष्ठीमभिप्रेत्याह ॥ **रामस्यवचांसीति** ॥ कर्मणिषष्ठीमभिप्रेत्याह ॥ **रामविषयकवचांसीति** ॥ पक्षद्वये वचांसिनयतीति वचोनयमितिव्युत्पत्तिर्दर्शिता रामवचांसियोनयतिअनेनरामवचांसिनयोयस्यतदितिबहुव्रीहिरित्युक्तं । साधकोरामावाक्यानामित्यर्थत्रयानुगुणप्रमाणसद्भावात् रामस्यामृतस्वरूपस्यवचस्तेनानयंतहीत्याद्याद्वितीययोर्विशेषप्रमाणप्रमितत्वाच्चेतिभावः । पृक्षशब्दार्थमाह ॥ **कुरुपृतनेति** ॥ कुरुसैन्येत्यर्थः ॥ पृतनाक्षयकारित्वात्पृक्षइत्युच्यतेबुधैरितिप्रमाणादितिभावः । माध्वत्यानंदउद्दिष्टोवेतिज्ञानमुदाहृतामितिप्रमाणानुसारेणमध्वशब्दार्थमाह ॥ **आनंदरूपस्येति** ॥ मधुवइतिवक्तव्येइकारलोपान्मध्वइतिसाधु यथा ॐ सुवरितिवक्तव्येस्वरितिऋग्वेदिनांपाठः अथायंसमापितव्याख्यानोजयतीर्थमुनिर्मंगलादीनिमंगलमध्यानिमंगलांतानिशास्त्राण्यायुष्मत्पुरुषकाणिभवंतीत्युक्त्या अंतेपिमंगलमाचरन्स्वीकृतमुख्यफलत्वेनभागवत्प्रीतिमाशास्ते ॥ **उत्पत्त्यादीति** ॥ यस्यगुणगणाकरस्यकरुणाख्यपीयूषेणवारांनिधेःसमुद्रस्याज्ञयारमाब्रह्मादिसर्वजगतउत्पातिस्थितिसंहृतिमुखाःअष्टभवाधर्माःक्वचिद्व्यस्ताःविस्तृताःक्वचित्समस्ताःनिरस्ताशेषदोषनिकरोयेनासौनारायणः अनेनभाष्यव्याख्यानेनप्रीतःसंतुष्टोस्त्वित्यर्थः ॥ नन्वानंदतीर्थभगवद्वचसांविशिष्टव्याख्यानकर्मणिसुराद्यधिकारिणोत्रेतितत्वनिर्णयांतेस्वेनोक्तत्वात्कथमिदंभाष्यव्याख्यानमित्याशंकांपरिहरन्व्याख्यानप्रसक्तस्वाहंकारंप्रशमयति ॥ **अगाधबोधैरिति** ॥ देवादिभिर्विवृतोऽत्यंतभावोयस्यतस्यभाष्यानुवादेनानुमृत्यवादनेव्याख्यानेनेतियावत् अत्रदृष्टांतमाह ॥ **नाहीति** ॥ मंदधनैःदरिद्रैः स्वकृतग्रंथस्यतत्वप्रकाशिकानामकरणेप्राप्तकौमुदीसाम्यमुपपादयन्नवांतरप्रयोजनंचाह ॥ **मध्वेति** ॥ विष्ण्वाद्यखिलतत्वप्रकाशकरीमध्वाख्यदुग्धाब्धिव्याख्येंदूदिताग्रंथाख्यकौमुदीसज्जनाख्यकुमुदानामानंददायिनीभूयादित्य

शेषप्रतिमंगलं ॥ संपूर्णगुणनिर्दोषरूपिणेमुक्तिदायिने वेदगम्यायरामायनमःश्रीपतयेसदा ॥ १ ॥ तत्वप्रकाशिकासंस्थवाक्यार्थमणिमंजरी प्रियतांहृदयेधृत्वासदयेमध्ववल्लभः ॥ २ ॥ तत्वप्रकाशिकाव्याख्यालब्धपुण्यमनुत्तमं प्राप्यास्मद्गुरवःप्रीताःक्रियासुःकरुणांमयि ॥ ३ ॥ इतिश्रीमत्तत्वप्रकाशिकावाक्यार्थमंजर्यांशर्कराश्रीनिवासविरचितायांचतुर्थाध्यायस्यचतुर्थःपादः समाप्तः ॥ ॥ ॥ ॥




एतत्पुस्तकं आनंदसागराख्य मुद्रणालये वेणुग्रामे मुद्रयित्वा
सप्तषष्ठ्युत्तराष्टदशशततमाब्दिकराजनियमा-
नुसारतः पुनर्मुद्रणाधिकारे प्रकाशयित्रा
स्वायत्तीकृतमास्ति.

॥ इति श्रीमतत्वप्रकाशिका वाक्यार्थमंजर्यां ॥

# ॥ चतुर्थाध्यायः समाप्तः ॥